# नमः सदा नतेन्द्राय गतमोहाय वीराय ।

उपादीयतामियं कोविदाः! कोमलकरकुशेशयाभ्यामुपदीक्रियमाणा कथा, गृहीता चेत्सादरं विलोकिता च सबहुमानं यथायथं विचारश्रेणीं नीतोऽर्थोऽस्याः भावार्थपरागपूगे लीनश्चेन्मनःषट्पदः पीनश्चेदात्मैतदन्तर्गतोदितिसूचितार्थहानोपादानोपेक्षाप्रवृत्तौ संपन्नमेव समाहितमन्तःकरणं प्रवृत्तं देहिद्रोहादिविरमणादौ निवृत्ता चास्तिक्यानुकम्पानिर्वेदसंवेगशमलब्धात्मलाभेभ्यो मिथ्यात्वनिर्घृणत्वभवाभिनन्दितामोक्षविद्वेषकषायविलयेभ्यो विषयकषायपुद्गलतत्परता, ननु केयं १ किमत्र वर्णितं २ कस्कोऽत्र नायकः ३ केऽस्या विधातारः ४ कदा ५ कस्मिंश्च मण्डले मण्डयामासुर्जनतां ६ के च पूज्यास्तत्रभवतां दीक्षादायकाः ७ के च प्रतिबोधयितारः शुभवतां भवतामिति ८ प्रादुर्भवन्ती प्रश्नततिपिपासा निरसनीया तत्तद्वर्णनवारिसमर्पणैः नो चेत् नोपादेया स्यादेषा प्रेक्षावतामिति चेद्, अवधेहि प्रथमे तावत् पर्यनुयोगे यथार्थाभिधानेयं 'उपमितिभवप्रपञ्चाभिधाना कथा' यतोऽस्यामुपमितो नरकतिर्यङ्नरामरगतिचतुष्करूपो भवो यथा भ्रम्यते जीवेन तथा पुर्यावासादिपर्यटनकल्पनया उपदेश्याश्च भव्या इति भव्योद्देशेनैवात्र वर्णनं तेन नोनता अभव्यानामवर्णनेन १ द्वितीयस्मिन्ननुयोगे आश्रवाणां हेयताया उपादेयतायाश्च संवराणां द्योतनाय भवभ्रमणतरुमूलभूतानां कषायाणां समूलकाषंकषणाय दुरन्तानन्तसंसारभ्रामकाणामिन्द्रियाणां दमनाय ग्रन्थोऽयं जग्रन्थे पुण्यभूरिभिः सूरिभिः, प्रस्तावाश्चात्राष्टौ यथायथं समुपन्यस्ताः, तदधिकाराश्चेमे यथाक्रमं—

१ प्रस्तावः पीठबन्धाख्यः ग्रन्थकृतः पूर्वापरावस्थयोः ग्रन्थसंदर्भहेतुयुक्तयोः संदर्शनं चात्र ।

२ प्रस्तावः अवाप्तमानुष्यो भव्यः पुण्डरीकाख्योऽनुसुन्दराख्यश्चक्री संसारिजीवः सदागमं समन्तभद्राख्यं सूरिं ललिताख्यां नृपपुत्रीं अगृहीतसंकेताभिधां महाभद्राख्यां प्रवर्त्तिनीं प्रज्ञाविशालाह्वामाश्रित्य यथोदितवान् स्वस्य भवपरम्परां तिर्यगनुभावानुश्रद्धां तथा स्मृत्वा विचारयति ।

३ प्रस्तावः हिंसाक्रोधाभ्यां भव्यस्य नन्दिवर्धनसंज्ञकस्य स्पर्शनात् बालस्य च दुःखावाप्तिर्भवभ्रमश्च भव्यस्य ।

४ प्रस्तावः अनृतमानाभ्यां रिपुदारणस्य भव्यस्य रसनायाश्च जडस्याशर्मपरम्पराऽवाप्तिर्भव्यस्य भवारण्यभ्रमश्च ।

५ प्रस्तावः स्तेयमायाभ्यां वामदेवस्य भव्यस्य घ्राणाच्च मन्दस्यासातप्रवाहापत्तिर्भवोदन्वत्पतनं च ।

६ प्रस्तावः मैथुनलोभाभ्यां धनशेखरस्य भव्यस्य अधमस्य च चक्षुषोऽपारव्यथावृत्तिर्दुरन्तसंसारपातश्च ।

७ प्रस्तावः महामोहपरिग्रहाभ्यां घनवाहनस्य भव्यस्य श्रवणात्संगाच्च बालिशस्यामितपीडाप्राप्तिः संसारपातश्च ।

८ प्रस्तावः गुणधारणस्य भव्यस्य प्राप्तसम्यक्त्वगृहिधर्मद्रव्यश्रमणलिङ्गस्य गौरवात् भवपरम्परा च देवमनुजजन्मान्तरिते पष्ठभवे सिंहाभिधानाचार्यपदस्थस्य अन्तेऽनुसुन्दराख्यस्य चक्रिणो मोक्षश्च २ ।

तृतीयस्यां तु पृच्छायां अत्र कथाङ्गभूतेषु द्वितीयाद्येष्वष्टमान्तेषु प्रस्तावेषु भव्यजीवस्य तिर्यग्भवभ्रमो गुणधारणाद्यवस्थासु च हिंसाक्रोधादिभिरनन्तसंसारगर्त्तापातो विरतिलाभादिना मोक्षश्च न्यगादीति तत्र भव्यजीव एव नायकः स एवानुसुन्दरश्चक्री, आद्ये तु प्रस्तावे यद्यपि कथोक्तिहेतुतया स्वं जीवमाश्रित्याख्यात उदन्तः सामान्येनेत्याख्यायि तथापि अस्ति तत्र कश्चिद्विशेषः, यतः यत्र यत्र स्वात्मा नायकस्तत्र तत्रारिष्टं

'मदीयजीवः' यथा ३२ पृष्ठे 'योऽयं मदीयजीवोऽवधारितजात्यन्धभावोऽस्य महामोहः" तथा ४३ पृष्ठे 'मदीयजीवरोरोऽयं कुविकल्पकुतर्ककुतीर्थिकलक्षणैः" 'आत्मीयजीवः' यथा ३३ पृष्ठे 'तदेतदात्मीयजीवस्यात्यन्तविपरीतचारितामनुभवताऽभिहितं' 'मम' ५४ पृष्ठे यथा 'ये च मम सदुपदेशदायिनो भगवन्तः सूरयस्ते विशिष्टज्ञाना एव, यतः कालव्यवहितैरनागतमेव तैर्ज्ञातः समस्तोऽपि मदीयवृत्तान्तः स्वसंवेदनसं-

१ अनेन निरस्तास्ते वावदूकाः ये प्रतिपादयन्ति यदुत सिद्धर्षेर्गुरव एव हरिभद्राः सिद्धर्षिश्च तद्धस्तदीक्षितो वा स्यात् स्याद्वा तद्देशनाश्रवणजातबोधः न तु व्यवहितः, यतः स्पष्टमेतत् ज्ञापयन्ति ग्रन्थकृतो यदुत नैते तत्रभवन्तः ममोपदेशदायका मत्समानकालभवाः किंतु विशिष्टप्राक्कालभवाः अत एव विशिष्टज्ञानादेव मद्वृत्तान्तज्ञातारः, निवेदयन्ति चात्मानुभवसंसिद्धतां ब्रुवाणाः परोक्षगुरुग्रन्थावगमजन्यबोधादि स्वजीवगोचरमेतद्वृत्तं, अत एव च पञ्चपञ्चाशति पृष्ठे प्राक् स्वस्मिन्नुपनीतमपि धर्मबोधकरवृत्तं "सद्धर्माचार्या अपि जीवविषयं पर्यालोचयन्तः परिकल्पयन्त्येवे"ति जहौ परोक्षतां साक्षाद्वृत्तं पुरश्चकुश्च, ततश्च पाश्चात्यं शीलमनुसरद्भिर्विपश्चिद्भिर्नैतत् शक्यं वक्तुं कथमपि यदुत द्विषष्टिहायनाधिके शतनवके सिद्धर्षेः सत्त्वात् श्रीमन्तो हरिभद्रसूरिवर्या अपि तत्समकालीना एवेति। किं च प्राकृतकुवलयमालाकाराः "सगकाले वोलीणे वरिसाण सएहिं सत्तहिं गएहिं। एगदिणेणूणेहिं एस समत्ताऽवरण्हम्मि ॥ १ ॥" इति गाथया दिनोने सप्तमे शतके शकस्य स्वमन्यसमाप्तिसूचका दाक्षिण्यचिह्नसूरयो यान् स्वकृतौ प्राक्कालीनकविजनतया स्तौति ते श्रीमन्तो हरिभद्राः कथंकारं सिद्धर्षिसमानकाला भवितुमर्हन्तीति विचार्यं विचक्षणैः, प्रस्तावनायां प्रस्ताविता वीराचार्यचरणाब्जषट्पदाः श्रीहरिभद्राचार्यास्त्वन्य इत इति न श्रीमतां शकसप्तमशताब्दीकाले वर्तमानता शङ्क्या, तेषामर्वाक्कालीनतासाधनाय यच्च न्यस्यते चूर्ण्यादिकं तदसाधनमेव चूर्णिकालस्य तन्मात्राधारस्य चानिर्णयात् अपरेषामप्यभिधानमनिर्णीतानेहसां नात्रोपयोगि, किंच पञ्चवस्तुदितानां स्वपरिज्ञाज्ञानपरिज्ञाधर्मरत्नमालादीनां पूर्वान्तर्गतपूर्वधरकृतग्रन्थानामभ्याहृतानां सद्भावस्तेषां तत्कालीनताज्ञापनायालमेव। अन्यच्च श्रीमतां हि समयो ब्राह्मीलिपिप्रचारवानेवेत्यावश्यकबृहद्वृत्तिगतश्रीमद्वाक्येन 'यथा घटिकासंस्थानो धकारः (?) कुरुण्टिकासंस्थानश्चकार (?)' इत्यादि तच्च ब्राह्म्यादिलिपिविधानादनेकविधं' इत्यनेन ज्ञायते, न चाभूत् सिद्धर्षेः समये ब्राह्मयालेखनप्रचार इति तु स्पष्टमेवेतिहासचणानां, तद्युक्तमेव श्रीमतां हरिभद्रसूरीणां वीरप्रभोरेकादशशताब्दीकायार्धवृत्तित्वं। अत एव तद्दया कल्पनाऽत्र वृत्ते।

सिद्धमेतदस्माकं' 'मज्जीवे' यथा ५३ पृष्ठे 'परमेश्वरावलोकनां मज्जीवे भवन्तीं' 'मादृशो' यथा ७३ पृष्ठे 'यो जीवो मादृशः प्रागत्यन्तक्लिष्टपरिणामतया धर्मगुर्वादिविषयेऽप्यनेककुविकल्पकरणपरोऽभूत् स तदा लब्धविवेकश्चिन्तयति' इत्यादिषु अस्मच्छब्दं प्रयुञ्जानाः स्वकीयमात्मानं अन्यत्र तु एतच्छब्दमिदंशब्दं जीवशब्दं च प्रयुञ्जन्तः सामान्यतो जीवविषयमाख्यान्ति, तत एव च ९७ पृष्ठे जगुर्गुरवो ग्रन्थकाराः यदुत 'तदिदं वृत्तान्तान्तरमस्यापि जीवस्य दोलायमानबुद्धेस्तथा गृहस्थावस्थायां वर्त्तमानस्य क्वचित् संभवतीत्यवगन्तव्यं' ३७ पृष्ठेऽपि 'यदा खल्वेष जीवो नरपतिसुतावस्थाया'मित्यादिषु च सामान्येन संभावनयाऽलंचकुर्वाक्यपद्धतिं, यान्यत्र तावत् कथाहेतुप्रतिपादनाय दृष्टान्तरूपाणि पद्यानि द्वादशाधिकशततमादारभ्य पद्यात् पद्यानां सप्तसप्तत्यधिकां चतुःशतीं यावत् प्रतिपादितानि तानि स्वानुभवं निवेदयितुमेव, दार्ष्टान्तिके तु किञ्चित् स्वानुभूतं किञ्चिच्च संभवास्पदं किञ्चित्तु वैराग्योत्पत्तये कल्पितं तेन नानेकभवविषयकं किञ्चित् परस्परविरुद्धं राज्यकुमारत्वगृहपतित्वकृषीवलत्वादिकं च किञ्चिदुपनीयमानं स्वेषां तथाविधातिशाय्यवध्यादिरहितत्वेन विरोधभाक्, यत्र तु विशेषतः स्वस्मिन्ननुभवोपनयस्तत्र ज्ञापितं 'स्वसंवेदनसंसिद्धमेतदस्माकं' पृष्ठे ३४–५४ इत्यादिषु ३। तुर्ये तु प्रश्ने सुप्रसिद्धमेतत् यदुत भगवन्तः सिद्धर्षयोऽस्या विधातारः कथायाः, तत्रभवन्तश्च स्वीयां गुरुपरम्परामेवं स्पष्टमुदङ्किष्ट प्रशस्तावस्यैव ग्रन्थस्य—द्योतिताखिलभावार्थः, सद्भव्याब्जप्रबोधकः। सूराचार्योऽभवद्दीप्तः, साक्षादिव दिवाकरः ॥१॥ स निर्वृतिकुलोद्भूतो, लाटदेशविभूषणः। आचारपञ्चकोद्युक्तः, प्रसिद्धो जगतीतले ॥ २ ॥ अभूद्भूतहितो धीरस्ततो देल्लमहत्तरः। ज्योतिर्निमित्तशास्त्रज्ञः, प्रसिद्धो देशविस्तरे ॥ ३ ॥ ततोऽभूदुल्लसत्कीर्तिर्ब्रह्मगोत्रविभूषणः। दुर्गस्वामी महाभागः, प्रख्यातः पृथिवीतले ॥४॥ प्रव्रज्यां गृह्णता येन, गृहं सद्धनपूरितम्। हित्वा सद्धर्ममाहात्म्यं, क्रिययैव प्रकाशितम् ॥ ५ ॥ यस्य सच्चरितं वीक्ष्य, शशाङ्ककरनिर्मलम्। शुद्धास्तत्प्रत्ययादेव, भूयांसो जन्तवस्तदा ॥६॥ सद्दीक्षादायकं तस्य, स्वस्य

चाहं गुरूत्तमम् । नमस्यामि महाभागं, गर्गर्षिं मुनिपुङ्गवम् ॥ ७ ॥ क्लिष्टेऽपि दुष्पमाकाले, यः पूर्वमुनिचर्यया । विजहारेह निःसंगो,
दुर्गस्वामी धरातले ॥ ८ ॥ सद्देशनांशुभिर्लोके, द्योतित्वा भास्करोपमः । श्रीभिल्लमाले यो धीरो, गतोऽस्तं सद्विधानतः ॥ ९ ॥ तस्मादतु-
लोपशमः सिद्ध(सद्द) र्षिरभूदनाविलमनस्कः । परहितनिरतैकमतिः सिद्धान्तनिधिर्महाभागः ॥ १० ॥ विषमभवगर्त्तनिपतितजन्तुशता-
लम्बदानदुर्ललितः । दलिताखिलदोषकुलः सततं करुणापरीतमनाः ॥ ११ ॥ यः संग्रहणकरणतः सदुपग्रहनिरतबुद्धिरनवरतम् ।
आत्मन्यतुलगुणगणैर्गणधरबुद्धिं विधापयति ॥ १२ ॥ बहुविधमपि यस्य मनो निरीक्ष्य कुन्देन्दुविशदमद्यतनाः । मन्यन्ते विमलधियः
सुसाधुगुणवर्णकं सत्यम् ॥ १३ ॥ उपमितिभवप्रपञ्चा कथेति तच्चरणरेणुकल्पेन । गीर्देवतया विहिताऽभिहिता सिद्धाभिधानेन ॥ १४ ॥
अथवा—आचार्यो हरिभद्रो मे, धर्मबोधकरो गुरुः । प्रस्तावे भावतो हन्त!, स एवाद्ये निवेदितः ॥१५॥ विषं विनिर्धूय कुवासनामयं,
व्यचीचरद्यः कृपया मदाशये । अचिन्त्यवीर्येण सुवासनासुधां, नमोऽस्तु तस्मै हरिभद्रसूरये ॥ १६ ॥ अनागतं परिज्ञाय, चैत्यवन्दनसं-
श्रया । मदर्थैव कृता येन, वृत्तिर्ललितविस्तरा ॥ १७ ॥ यत्रातुलरथयात्राऽधिकमिदमिति लब्धवरजयपताकम् । निखिलसुरभवनमध्ये
सततंप्रमदं जिनेन्द्रगृहम् ॥ १८ ॥ यत्रार्थट्टङ्कशालायां, देवः सद्धर्मधामसु । कामो लीलावतीलोके, सदाऽऽस्ते त्रिगुणो मुदा ॥ १९ ॥
तत्रेयं तेन कथा कविना निःशेषगुणगणाधारे । श्रीभिल्लमालनगरे गदिताऽग्रिममण्डपस्थेन ॥ २० ॥ प्रथमादर्शे लिखिता साध्व्या श्रुत-
देवताऽनुकारिण्या । दुर्गस्वामिगुरूणां शिष्यिकयेयं गुणाभिधया ॥ २१ ॥ संवत्सरशतनवके द्विषष्टिसहितेऽतिलङ्घिते चास्याः । ज्येष्ठे
सितपञ्चम्यां पुनर्वसौ गुरुदिने समाप्तिरभूत् ॥ २२ ॥ ग्रन्थाग्रमस्या विधाय, कीर्त्तयन्ति मनीषिणः । अनुष्टुभां सहस्राणि, प्रायशः सन्ति
षोडश ॥ २३ ॥ इति प्रशस्तिः ।

अत्र विलोकनीयं विलोककैर्यदुत श्रीमन्तः सिद्धर्षयः स्वेषां गर्गाचार्यप्रभुं दीक्षादायकं स्तौति श्रीमदेल्लमहत्तरचरणकमलपट्पदोपमश्रीमदुर्गस्वामिपादरजोदिग्धदेहं श्रीमन्तं सद्दर्षिं च स्वगुरुतया वर्णयन्ति, न च दीक्षाप्रस्तावे पट्टपारम्पर्ये वा श्रीमद्धरिभद्रसूरीणां काञ्चिदपि गुरुतां किल कीर्त्तयन्ति, किन्तु अथवेत्यनेन स्वस्य तत्प्रणीतग्रन्थजातबोधवत्तां संस्मारयन्तः धर्मबोधकरगुरुतां प्रथमप्रस्तावाभिहितामेव स्मारयंति, न चायुक्तं दीक्षाद्यदायकानां परोक्षाणां धर्मबोधे गुरुतया स्मरणं, यतः शास्त्रोक्तिरेवं—"जो जेण सुद्धधम्मंमि ठाविओ संजएण गिहिणा वा। सो चेव तस्स जायइ धम्मगुरू धम्मदाणाओ ॥ १ ॥" अत्र विदिततरमेतत् यदुत धर्मदातारो धर्मगुरवः, न च वाच्यं श्रीमतां श्रद्धाविगमे धर्मदातारो दुर्गस्वामिन एव, यतः प्रभावकचरित्रे चतुर्विंशतिप्रबन्धे चैवं तत्रभवचरितं—

---

## श्रीसिद्धर्षिसूरिप्रबन्धः ।

श्रीसिद्धर्षिः श्रियो देयाद्धियामध्यामधामभूः । निर्ग्रन्थग्रन्थतामापुर्यद्ग्रन्थाः साम्प्रतं भुवि ॥ १ ॥
श्रीसिद्धर्षिप्रभोः पान्तु, वाचः परिपचेलिमाः । अनाद्यविद्यासंस्कारा, यदुपास्तेर्भिदेलिमाः ॥ २ ॥
सुप्रभुः पूर्वजो यस्य, सुप्रभः प्रतिभावताम् । वन्धुर्वन्धुरभाग्यश्रीर्यस्य माघः कवीश्वरः ॥ ३ ॥
चरितं कीर्त्तयिष्यामि, तस्य त्रस्यज्जडाशयम् । भूभृच्चक्रचमत्कारि, वारिताखिलकल्मषम् ॥ ४ ॥
अजर्जरश्रियां धाम, वेपालक्ष्यजरज्जरः । अस्ति गुर्जरदेशोऽन्यसज्जराजन्यदुर्जरः ॥ ५ ॥
तत्र श्रीमालमित्यस्ति, पुरं मुरमिव क्षितेः । चैत्योपरिस्था कुंभालिर्यत्र चूडामणीयते ॥ ६ ॥
प्रासादा यत्र दृश्यन्ते, मत्तवारणराजिताः । राजमार्गाश्च शोभन्ते, मत्तवारणराजिताः ॥ ७ ॥
जैनालयाश्च सन्त्यत्र, नवं धूपगमं श्रिताः । महर्षयश्च निःसंगा, न वन्धूपगमं श्रिताः ॥ ८ ॥
तत्रास्ति हास्तिकाश्वीयापहस्तितरिपुव्रजः । नृपः श्रीमर्मलाताख्यः, शत्रुमर्मभिदाक्षमः ॥ ९ ॥
तस्य सुप्रभदेवोऽस्ति, मन्त्री मित्रं जगत्यपि । सर्वव्यापारमुद्राभृन्मुद्राक्रदुर्जनानने ॥ १० ॥

देवार्योशनसौ यस्य, नीतिरीतिमुदीक्ष्य तौ । अवलम्ब्य स्थितौ विष्णुपदं कर्तुं तपः किल ॥ ११ ॥
तस्य पुत्रावुभावंसाविव विश्वभरक्षमौ । आद्यो दत्तः स्फुरद्वृत्तो, द्वितीयश्च शुभङ्करः ॥ १२ ॥
दत्तवित्तोऽनुजीविभ्यो, दत्तचित्तसुधर्मधीः । अप्रवृत्तः कुकृत्येषु, तत्र सुत्रामवत् श्रिया ॥ १३ ॥
हर्म्यकोटिस्फुरत्कोटिध्वजजालान्तरस्थिता । जलजन्मतयेव श्रीर्यस्मादासीदनिर्गमा ॥ १४ ॥
तस्य श्रीभोजभूपालबालमित्रं कृतीश्वरः । श्रीमाघो नन्दनो ब्राह्मीस्यन्दनः शीलचन्दनः ॥ १५ ॥
ऐदंयुगीनलोकस्य, सारसारस्वतायितम् । शिशुपालवधः काव्यं, प्रशस्तिर्यस्य शाश्वती ॥ १६ ॥
श्रीमाघोऽस्ताघधीः श्लाघ्यः, प्रशस्यः कस्य नाभवत् । चित्तजाड्यहरा यस्य, काव्यगङ्गोर्मिविप्रुषः ? ॥ १७ ॥
तथा शुभङ्करश्रेष्ठी, विश्वविश्वप्रियङ्करः । यस्य दानाद्भुतैर्गीतैर्हर्यश्वो दर्पभूरभूत् ॥ १८ ॥
तस्याभूद्देहिनी लक्ष्मीर्लक्ष्मीर्लक्ष्मीपतेरिव । यया सत्यापिताः सत्यः, सीताद्या विश्वविश्रुताः ॥ १९ ॥
नन्दनो नन्दनोत्तंसः, कल्पद्रुम इवापरः । यथेच्छादानतोऽर्थिभ्यः, प्रथितः सिद्धनामतः ॥ २० ॥
अनुरूपकुलां कन्यां, धन्यां पित्रा विवाहितः । भुङ्क्ते वैषयिकं सौख्यं, दोगुन्दग इवामरः ॥ २१ ॥
दुरोदरभरोदारो, दाराचारपराङ्मुखः । अन्यदा सोऽभवत्कर्म, दुर्जयं विदुषामपि ॥ २२ ॥
पितृमातृगुरुस्निग्धबन्धुमित्रैर्निवारितः । अपि नैव न्यवर्त्तिष्ट, दुर्वारं व्यसनं यतः ॥ २३ ॥
अगृद्धातिप्ररूढेऽस्मिन्नहर्निशमसौ वशः । तदेकचित्तधूर्त्तानां, सदाचाराद्भूद् बहिः ॥ २४ ॥

सपिपासाशनायातिशीतोष्णाश्च विमर्शतः । योगीव लीनचित्तोऽत्र, व्यत्रस्यत्साधुवाक्यतः ॥ २५ ॥
निशीथातिक्रमे रात्रावपि स्वकगृहागमी । वध्वाः प्रतीक्ष्य एकस्यास्तया नित्यं प्रतीक्ष्यते ॥ २६ ॥
अन्यदा रात्रिजागर्यानिर्यातवपुरुद्यमाम् । गृहव्यापारकृत्येषु, विलीनाङ्गस्थितिं ततः ॥ २७ ॥
ईदृग्ज्ञातेयसम्बन्धवशकर्कशवाग्भरम् । श्वश्रूरश्रूणि मुञ्चन्ती, वधूं प्राह सगद्गदम् ॥ २८ ॥ युग्मम् ॥
मयि सत्यां पराभूतिं, करते कुर्यात्ततः स्वयम् । खिद्यसे कुविकल्पैस्त्वं, गृहकर्मभरालसा ॥ २९ ॥
श्वशुरोऽपि च ते व्यग्रो, यदा राजकुलादिह । आगन्ता च ततो देवावसरादावसज्जिते ॥ ३० ॥
मामेवाक्रोक्ष्यति त्वं तत्तथ्यं मम निवेदय । यथा द्राग्भवदीयार्तिप्रतीकारं करोम्यहम् ॥ ३१ ॥
सा न किञ्चिदिति प्रोच्य, श्वश्रूनिर्बन्धतोऽवदत् । युष्मत्पुत्रोऽर्द्धरात्रातिक्रमेऽभ्येति करोमि किम्?॥ ३२ ॥
श्रुत्वेत्याह तदा श्वश्रूः, किं नामेऽजल्पि मे पुरः । सुतं स्वं वोधयिष्यामि, वचनैः कर्कशप्रियैः ॥ ३३ ॥
अद्य स्वपिहि वत्से! त्वं, निश्चिन्ताऽहं तु जागरम् । कुर्वे सर्वं भलिष्यामि, नात्र कार्योऽधृतिस्त्वया ॥ ३४ ॥
ओमित्यथ स्नुषाप्रोक्ते, रात्रौ तद्द्वारि तस्थुषी । विनिद्रा पश्चिमे यामे, रात्रेः पुत्रः समागमत् ॥ ३५ ॥
द्वारं द्वारमितिप्रौढस्वरोऽसौ यावदूचिवान् । इयद्रात्रौ क आगन्ता, माताऽवादीदिति स्फुटम् ॥ ३६ ॥
सिद्धः सिद्ध इति प्रोक्ते, तेन सा कृतकक्रुधा । प्राह सिद्धं न जानेऽहमप्रस्तावविहारिणम् ॥ ३७ ॥
अधुनाऽहं क यामीति, सिद्धेनोक्ते जनन्यपि । अन्यदा शीघ्रमायाति, यथाऽस्मात्कर्कशं जगौ ॥ ३८ ॥

एतावत्यां निशि द्वारं, विवृतं यत्र पश्यसि । तत्र यायाः समुद्घाटद्वारा सर्वोपि किं निशा ? ॥ ३९ ॥
भवत्वेवमिति प्रोक्ते, सिद्धस्तस्मान्निरीय च । पश्यन्ननावृतद्वारो, द्वारेऽगादनगारिणाम् ॥ ४० ॥
सदाप्यनावृतद्वारशालायां पश्यति स्म सः । मुनीन् विविधचर्यासु, स्थितान्निष्पुण्यदुर्लभान् ॥ ४१ ॥
कांश्चिद्वैरात्रिकं कालं, विनिद्रस्य गुरोः पुरः । प्रवेदयत उत्साहात्, कांश्चित्स्वाध्यायरंगिणः ॥ ४२ ॥
उत्कटिकासनान् कांश्चित्, कांश्चिद्गोदोहिकासनान् । वीरासनस्थितान् कांश्चिन्, सोऽपश्यन्मुनिपुङ्गवान् ॥ ४३ ॥
अचिन्तयच्छमसुधानिर्झरे निर्जरा इव । सुस्नातशीतला एते, तृष्णाभीता मुमुक्षवः ॥ ४४ ॥
तादृशा व्यसनासक्ता, अभक्ताः स्वगुरुष्वपि । मनोरथद्रुहस्तेषां, विपरीतविहारिणः ॥ ४५ ॥
धिग्जन्मेदमिहामुत्र, दुर्यशोदुर्गतिप्रदम् । तस्मात्सुकृतिनी वेला, यत्रैते दृष्टिगोचराः ॥ ४६ ॥ युग्मम् ।
अमीषां दर्शनात्कोपिन्याऽपि सूपकृतं मयि । जनन्या क्षीरमुत्तप्तमपि पित्तं प्रणाशयेत् ॥ ४७ ॥
ध्यायन्नित्यग्रतस्तस्थौ, नमस्तेभ्यश्चकार सः । प्रदत्तधर्मलाभाशीर्निर्ग्रन्थप्रभुराह च ॥ ४८ ॥
को भवानिति तैः प्रोक्ते, प्रकटं प्राह साहसी । शुभङ्करात्मजः सिद्धो, सूतान्मात्रा निषेधितः ॥ ४९ ॥
उद्घाटद्वारि यायास्त्वमोकसीयन्महानिशि । इयन्ती वाचना दत्वाऽप्यावृतद्वारि संगतः ॥ ५० ॥
अतःप्रभृति पूज्यानां, चरणौ शरणौ मम । प्राप्ते प्रवहणे को हि, निस्तितीर्षति नाम्बुधिम् ? ॥ ५१ ॥
उपयोगं श्रुते दत्त्वा, योग्यताहृष्टमानसाः । प्रभावकं भविष्यन्तं, परिज्ञायाथ तेऽवदन् ॥ ५२ ॥

असद्वेषं विना नैवासत्पार्श्वे स्थीयतेतराम् । सदा स्वेच्छाविहाराणां, दुर्ग्रहः स भवादृशाम् ॥ ५३ ॥
धार्यं ब्रह्मव्रतं घोरं, दुष्करं कातरैर्नरैः । कापोतिका तथा वृत्तिः, समुदानापराभिधा ॥ ५४ ॥
दारुणः केशलोचोऽथ, सर्वाङ्गीणव्यथाकरः । सिकतापिण्डवच्चायं, निरास्वादश्च संयमः ॥ ५५ ॥
उच्चावचानि वाक्यानि, नीचानां ग्रामकण्टकाः । सोढव्या दशनैश्चर्वणीया लोहमया यवाः ॥ ५६ ॥
उग्रं षष्ठाष्टमाद्यं तत्तपः कार्यं सुदुष्करम् । स्वाद्यास्वाद्येषु लब्धेषु, रागद्वेषौ न पारणे ॥ ५७ ॥
इत्याकर्ण्यावदत्सिद्धो, मत्सदृग्व्यसनस्थिताः । छिन्नकर्णोष्ठनासादिबाहुपादयुगा नराः ॥ ५८ ॥
क्षुधाकरालिता भिक्षाचौर्यादेर्वृत्तिधारिणः । अप्राप्तशयनस्थानाः, पराभूता निजैरपि ॥ ५९ ॥
नाथ! किंतदवस्थाया, अपि किं दुष्करो भवेत् । संयमो विश्ववन्द्यस्तन्मूर्ध्नि देहि करं मम ॥ ६० ॥ त्रिभिर्विशेषकम् ।
यददत्तं न गृह्णीमो, वयं तस्मात्स्थिरो भव । दिनमेकं यथाऽनुज्ञापयामः पैतृकं तव ॥ ६१ ॥
ततः प्रमाणमादेश, इत्युक्त्वा तत्र सुस्थिते । परं हर्षं दधौ सूरिः, सुविनेयस्य लाभतः ॥ ६२ ॥
इतः शुभङ्करश्रेष्ठी, प्रातः पुत्रं समाह्वयत् । शब्दादाने च सम्भ्रान्तोऽपश्यत् पत्नीं नताननाम् ॥ ६३ ॥
अद्य रात्रौ कथं नागात्सिद्ध इत्युदिता सती । लज्जानम्राऽवदद् चूतीशिक्षितोऽथ सुतो ययौ ॥ ६४ ॥
श्रेष्ठी दध्यौ महेलाः स्युरुत्तानधिषणा ध्रुवम् । न कर्कशवचोयोग्यो, व्यसनी शिक्ष्यते शनैः ॥ ६५ ॥
ईषत्करं ततः प्राह, प्रिये! भव्यं त्वया कृतम् । वयं किं प्रवदामोऽत्र, वणिजां नोचितं हृदः ॥ ६६ ॥

गृहाद्वहिश्च निर्याय, प्रयासाङ्गीकृतस्थितिः । व्यलोकयत्पुरं सर्वमहो मोहः पितुः सुते ॥ ६७ ॥
इतश्च यतिशालायामसावुपशमोर्मिभिः । आप्लुतोऽपूर्वसंस्थानं, ततोऽवादि च तेन सः ॥ ६८ ॥
यद्येवं शमिसामीप्यस्थितिं पश्यामि (श्यति) ते सुत! । अमृतेनेव सिच्येत, नन्दिनी नन्दनस्थिते! ॥ ६९ ॥
द्यूतव्यसनिनां साध्वाचारातीतकुवेषिणाम् । संगतो (तिः) मम हृद्दुःखहेतुः केतुरिव ग्रहः ॥ ७० ॥
आगच्छ वत्स! सोत्कण्ठा, तव माता प्रतीक्षते । किञ्चिन्मद्वचनैर्दूना, संतप्ता निर्गमात्तव ॥ ७१ ॥
स प्राह तात! पर्याप्तं, गेहागमनकर्मणि(णा) । मम लीनं गुरोः पादारविन्दे हृदयं ध्रुवम् ॥ ७२ ॥
जैनदीक्षाधरो मार्गो, मार्गो निष्प्रतिकर्मतः । आचरिष्यामि तन्मोहो, भवद्भिर्मा विधीयताम् ॥ ७३ ॥
याया अपावृतद्वारे, वेश्मनीत्यम्बिकावचः । शमिसन्निध्यवस्थानं, मतं नस्तदभूद्वचः ॥ ७४ ॥
यावज्जीवं हि विदधे, यद्यहं तत्कुलीनता । अक्षता स्यादिदं चित्ते, सम्यक्तात! विचिन्तय ॥ ७५ ॥
अथाह सम्भ्रमाच्छ्रेष्ठी, किमिदं वत्स! चिन्तितम्? । असाक्षध्वजविज्ञेयं, धनं कः सार्थयिष्यति? ॥ ७६ ॥
विलस त्वं यथा सौख्यं, प्रदेहि निजयेच्छया । अविमुञ्चन्सदाचारं, सतां श्लाघ्यो भविष्यसि ॥ ७७ ॥
एकपुत्रा तवाम्बा च, निरपत्या वधूस्तथा । गतिस्तयोस्त्वमेवासीर्जीर्णे मा जीगणस्तु माम् ॥ ७८ ॥
पित्रेत्थमुदिते प्राह, सिद्धः सिद्धशमस्थितिः । सम्पूर्णं लोभिवाणीभिस्तत्र मे श्रुतिरश्रुतिः ॥ ७९ ॥
ब्रह्मणीव मनो लीनं, ममातो गुरुपादयोः । निपत्य ब्रूहि दीक्षां (हि), पुत्रस्य मम यच्छत ॥ ८० ॥

इति निर्बन्धतस्तस्य, तथा चक्रे शुभङ्करः । गुरुः प्रादात्परिव्रज्यां, तस्य पुण्ये स्वरोदये ॥ ८१ ॥
दिनैः कतिपयैर्मासमाने तपसि निर्मिते । शुभे लग्ने पञ्चमहाव्रतारोपणपर्वणि ॥ ८२ ॥
दिग्बन्धं श्रावयामास, पूर्वतो गच्छसन्ततिम् । सत्प्रभुः शृणु वत्स! त्वं, श्रीमान् वज्रप्रभुः पुरा ॥ ८३ ॥
तच्छिष्यवज्रसेनस्याभूद्विनेयचतुष्टयी । नागेन्द्रो निर्वृतिश्चन्द्रः, ख्यातो विद्याधरस्तथा ॥ ८४ ॥
आसीन्निर्वृतिगच्छे च, **सुराचार्यो** धियां निधिः । तद्विनेयश्च **गर्गर्षि**रहं दीक्षागुरुस्तव ॥ ८५ ॥
शीलाङ्गानां सहस्राणि, त्वयाऽष्टादश निर्भरम् । वोढव्यानि विविश्राममाभिजात्यफलं ह्यदः ॥ ८६ ॥
ओमिति प्रतिपद्याथ, तप उग्रं चरन्नसौ । अध्येता वर्त्तमानानां, सिद्धान्तानामजायत ॥ ८७ ॥
स चोपदेशमालाया, वृत्तिं बालावबोधिनीम् । विदधेऽवहितप्रज्ञः, सर्वज्ञ इव गीर्भरैः ॥ ८८ ॥
सूरिर्दाक्षिण्यचन्द्रा(चिह्ना)ख्यो, गुरुभ्राताऽस्ति तस्य सः । कथां कुवलयमालां, चक्रे शृङ्गारनिर्भराम् ॥ ८९ ॥
किञ्चित्सिद्धकृतग्रन्थसोत्प्रासः सोऽवदत्तदा । लिखितैः किं नवैर्ग्रन्थैस्तदवस्थागमाक्षरैः ॥ ९० ॥
शास्त्रं श्रीसमरादित्यचरितं कीर्त्यते भुवि । यद्रसोर्मिप्लुता जीवाः, क्षुत्तृडाद्यं न जानते ॥ ९१ ॥
अर्थोत्पत्तिरसाधिक्यसारा किञ्चित्कथापि मे । अहो ते लेखकस्येव, ग्रन्थः पुस्तकपूरणः ॥ ९२ ॥

१ चिन्त्यमेतत् यतः स्वयमेव सिद्धर्षयः स्वसत्तासमयं द्विषष्ट्यधिकं नवमशतकं आख्यान्ति कुवलयमालाकारा अपि शकनृपसप्तशत्यां, न चैवं परस्परं हास्यं युक्तं वाचंयमानां, अन्यच्च उपदेशमालावृत्तावपि हरिभद्राणां धर्मबोधकरता ज्ञापितेति न सोपमितिकरणकालात् वृत्तादस्याः प्राक् ।

गृहाद्बहिश्च निर्याय, प्रथासाङ्गीकृतस्थितिः । व्यलोकयत्पुरं सर्वमहो मोहः पितुः सुते ॥ ६७ ॥
इतश्च यतिशालायामसावुपशमोर्मिभिः । आप्लुतोऽपूर्वसंस्थानं, ततोऽवादि च तेन सः ॥ ६८ ॥
यद्येवं शमिसामीप्यस्थितिं पश्यामि (श्यति) ते सुत! । अमृतेनेव सिच्येत, नन्दिनी नन्दनस्थिते! ॥ ६९ ॥
शूतव्यसनिनां साध्वाचारातीतकुवेषिणाम् । संगतो (तिः) मम हृद्दुःसहेतुः केतुरिव ग्रहः ॥ ७० ॥
आगच्छ वत्स! सोत्कण्ठा, तव माता प्रतीक्षते । किञ्चिन्मद्वचनैर्दूना, संतप्ता निर्गमात्तव ॥ ७१ ॥
स प्राह तात! पर्याप्तं, गेहागमनकर्मणि(णा) । मम लीनं गुरोः पादारविन्दे हृदयं ध्रुवम् ॥ ७२ ॥
जैनदीक्षाधरो मार्गं, मार्गे निष्प्रतिकर्मतः । आचरिष्यामि तन्मोहो, भवद्भिर्मा विधीयताम् ॥ ७३ ॥
याया अपावृतद्वारे, वेश्मनीत्यम्बिकावचः । शमिसन्निध्यवस्थानं, मतं नस्तदभूद्वचः ॥ ७४ ॥
यावज्जीवं हि विदधे, यदहं तत्कुलीनता । अक्षता स्यादिदं चित्ते, सम्यक्तात! विचिन्तय ॥ ७५ ॥
अथाह सम्भ्रमाच्छ्रेष्ठी, किमिदं वत्स! चिन्तितम्? । असङ्ख्यध्वजविज्ञेयं, धनं कः सार्थयिष्यति? ॥ ७६ ॥
विलस त्वं यथा सौख्यं, प्रदेहि निजयेच्छया । अविमुञ्चन्सदाचारं, सतां श्लाघ्यो भविष्यसि ॥ ७७ ॥
एकपुत्रा तवाम्बा च, निरपत्या वधूस्तथा । गतिस्तयोस्त्वमेवासीर्जीर्णं मा जीगणस्तु माम् ॥ ७८ ॥
पित्रेत्थमुदिते प्राह, सिद्धः सिद्धशमस्थितिः । सम्पूर्णं लोमिवाणीभिस्तत्र मे श्रुतिरश्रुतिः ॥ ७९ ॥
ब्रह्मणीव मनो लीनं, ममात्तो गुरुपादयोः । निपत्य ब्रूहि दीक्षां (हि), पुत्रस्य मम यच्छत ॥ ८० ॥

रजोहरणमस्माकं, व्रताङ्गं नः समर्पयेः । इत्युक्त्वा मौनमातिष्ठद्गुरुश्चित्तव्यथाधरः ॥ १०७ ॥
प्राह सिद्धः श्रुती च्छादयित्वा शान्तं हि कल्मषम् । अमङ्गलं प्रतिहतमकृतज्ञः क ईदृशः ? ॥ १०८ ॥
चक्षुरुद्घाटितं येन, मम ज्ञानमयं मुदा । पुनस्तद् ध्यामयेत्को हि, धूमायितपरोक्तिभिः ? ॥ १०९ ॥
अन्त्यं वचः कथं नाथ !, मयि पूज्यैरुदाहृतम् । कः कुलीनो निजगुरुक्रमयुग्मं परित्यजेत् ॥ ११० ॥
मनः कदापि गुप्येत, चेद्धत्तूरभ्रमादिव । तथापि प्रभुपादानामादेशं विदधे ध्रुवम् ॥ १११ ॥
दुरध्येयानि बौद्धानां, शास्त्राणीति श्रुतश्रुतिः । स्वप्रज्ञायाः प्रमाणं तद्, लप्स्ये तद्नुपिलाध्वनि ॥ ११२ ॥
इत्युदित्वा प्रणम्याय, स जगाम यथेप्सितम् । महाबोधाभिधं बौद्धपुरमव्यक्तवेषभृत् ॥ ११३ ॥
कुशाग्रीयमतेस्तस्याक्लेशेनापि प्रबोधतः । विद्वदुर्भेदशास्त्राणि, तेषामासीच्चमत्कृतिः ॥ ११४ ॥
तस्याङ्गीकरणे मन्त्रस्तेषामासीदुरासदः । तमस्युद्योतको रत्नमाप्य माध्यस्थ्यमाश्रयेत् ॥ ११५ ॥
स्वादरवचःप्रपञ्चैस्तैर्वर्द्धकैर्गर्द्धकैरपि । तं विप्रलम्भयामासुर्मीनवद्धीवरा रसात् ॥ ११६ ॥
शनैर्भ्रान्तमनोवृत्तिर्बभूवासौ यथा तथा । तदीयदीक्षामादत्त, जैनमार्गोतिनिःस्पृहः ॥ ११७ ॥
अन्यदा तैर्गुरुत्वेऽसौ, स्थाप्यमानोऽवदन्ननु । एकवेलं मया पूर्वे, संवीक्ष्या गुरवो ध्रुवम् ॥ ११८ ॥
इति प्रतिश्रुतं यस्मात्तदमे तत्प्रतिश्रवम् । सत्यसन्धस्त्यजेत्तत्कस्तत्र प्रहिणुताथ माम् ॥ ११९ ॥
इति सत्यप्रतिज्ञत्वमतिचारु च सौगते । मन्यमानास्ततः प्रैषुः, स चागाद्गुरुसन्निधौ ॥ १२० ॥

अथ सिद्धकविः प्राह, मनो दूनोपि नो खरम् । वयोऽतिक्रान्तपाठानामीदृशी कविता भवेत् ॥ ९३ ॥
का स्पर्द्धा समरादित्यकवित्वे पूर्वसूरिणा । खद्योतस्येव सूर्येण, मादृग्मन्दमतेरिह ॥ ९४ ॥
इत्थमुद्वेजितस्यान्तस्तेनासौ निर्ममे बुधः । अन्यदुर्बोधसम्बद्धां, प्रस्तावाष्टकसम्भृताम् ॥ ९५ ॥
रम्यामुपमितिभवप्रपञ्चाख्यां महाकथाम् । सुबोधकथितां विद्वदुत्तमाङ्गविधूननीम् ॥ ९६ ॥ युग्मम् ।
ग्रन्थं व्याख्यानयोग्यं यदेनं चक्रे शमाश्रयम् । अतःप्रभृति सङ्घोऽत्र, व्याख्यातृबिरुदं ददौ ॥ ९७ ॥
दर्शिताऽथास्य तेनाथ, हसितुः स ततोऽवदत् । ईदृक् कवित्वमाधेयं, त्वद्गुणाय मयोदितम् ॥ ९८ ॥
ततो व्यचिन्तयत्सिद्धो, ज्ञायते यदपीह न । तेनाप्यज्ञानता तस्मादध्येतव्यं ध्रुवं मया ॥ ९९ ॥
तर्कग्रन्था मयाऽधीताः, स्वपरेऽपीह ये स्थिताः । बौद्धप्रमाणशास्त्राणि, न स्युस्तद्देशमन्तरा ॥ १०० ॥
आपप्रच्छे गुरुं सम्यग्, विनीतवचनैस्ततः । प्रान्तरस्थितदेशेषु, गमनायोन्मनायितः ॥ १०१ ॥
निमित्तमवलोक्याथ, श्रौतेन विधिना ततः । सवात्सल्यमुवाचाथ, नाथः प्राथमकल्पिकम् ॥ १०२ ॥
असन्तोषः शुभोऽध्याये, वत्स! किञ्चिद्वदामि तु । सत्यमत्र न सत्त्वानां, समये भ्रमये धियाम् ॥ १०३ ॥
भ्रान्तं चेतः कदापि स्याद्धेत्वाभासैस्तदीयकैः । अर्थी तदागमश्रेणेः, स्वसिद्धान्तपराङ्मुखः ॥ १०४ ॥
उपार्जितस्य पुण्यस्य, नाशं त्वं प्राप्स्यसि ध्रुवम् । निमित्तत इदं मन्ये, तस्मान्माऽत्रोद्यमी भव ॥ १०५ ॥ युग्मम् ।
अथ चेदवलेपस्ते, गमने न निवर्त्तते । तथापि मम पार्श्वे त्वमागा वाचा ममैकया ॥ १०६ ॥

रजोहरणमस्माकं, व्रताङ्गं नः समर्पयेः । इत्युक्त्वा मौनमातिष्ठद्गुरुश्चित्तव्यथाधरः ॥ १०७ ॥
प्राह सिद्धः श्रुती च्छादयित्वा शान्तं हि कल्मषम् । अमङ्गलं प्रतिहतमकृतज्ञः क ईदृशः ? ॥ १०८ ॥
चक्षुरुद्घाटितं येन, मम ज्ञानमयं मुदा । पुनस्तद् ध्यामयेत्को हि, धूमायितपरोक्तिभिः ? ॥ १०९ ॥
अन्त्यं वचः कथं नाथ!, मयि पूज्यैरुदाहृतम् । कः कुलीनो निजगुरुक्रमयुग्मं परित्यजेत् ॥ ११० ॥
मनः कदापि गुप्येत, चेद्धत्तूरभ्रमादिव । तथापि प्रभुपादानामादेशं विदधे ध्रुवम् ॥ १११ ॥
दुरध्येयानि बौद्धानां, शास्त्राणीति श्रुतश्रुतिः । स्वप्रज्ञायाः प्रमाणं तद्, लप्स्ये तद्गुपिलाध्वनि ॥ ११२ ॥
इत्युदित्वा प्रणम्याय, स जगाम यथेप्सितम् । महाबोधाभिधं बौद्धपुरमव्यक्तवेषभृत् ॥ ११३ ॥
कुशाग्रीयमतेस्तस्याक्लेशेनापि प्रबोधतः । विद्वद्दुर्भेदशास्त्राणि, तेषामासीच्चमत्कृतिः ॥ ११४ ॥
तस्याङ्गीकरणे मन्त्रस्तेषामासीद्दुरासदः । तमस्युद्योतको रत्नमाप्य माध्यस्थ्यमाश्रयेत् ॥ ११५ ॥
तादृग्वचःप्रपञ्चैस्तैर्वर्द्धकैर्गर्द्धकैरपि । तं विप्रलम्भयामासुर्मीनवद्धीवरा रसात् ॥ ११६ ॥
शनैर्भ्रान्तमनोवृत्तिर्बभूवासौ यथा तथा । तदीयदीक्षामादत्त, जैनमार्गोतिनिःस्पृहः ॥ ११७ ॥
अन्यदा तैर्गुरुत्वेऽसौ, स्थाप्यमानोऽवदन्ननु । एकवेलं मया पूर्वे, संवीक्ष्या गुरवो ध्रुवम् ॥ ११८ ॥
इति प्रतिश्रुतं यस्मात्तदग्रे तत्प्रतिश्रवम् । सत्यसन्धस्त्यजेत्तत्कस्तत्र प्रहिणुताथ माम् ॥ ११९ ॥
इति सत्यप्रतिज्ञत्वमतिचारु च सौगते । मन्यमानास्ततः प्रैषुः, स चागाद्गुरुसन्निधौ ॥ १२० ॥

गत्वाऽथोपाश्रये सिंहासनस्थं वीक्ष्य तं प्रभुम् । ऊर्ध्वस्थानशुभा यूयमित्युक्त्वा मौनमास्थितः ॥ १२१ ॥
गर्गस्वामी व्यमृक्षच, संजज्ञे तदिदं क(फ)लम् । अनिमित्तस्य जैनी वाग्, नान्यथा भवति ध्रुवम् ॥ १२२ ॥
अस्माकं महद्वैपम्यमिदं जज्ञे यदीदृशः । सुविनेयो महाविद्वान्, परशास्त्रप्रलम्भितः ॥ १२३ ॥
तदुपायेन केनापि, बोध्योऽसौ यदि भोत्स्यते । तदस्माकं प्रियं भाग्यैरुदितं किं बहूक्तिभिः ? ॥ १२४ ॥
ध्यात्वेत्युत्थाय गुरुभिस्तं निवेश्यासनेऽर्पिता । चैत्यवन्दनसूत्रस्य, वृत्तिर्ललितविस्तरा ॥ १२५ ॥
ऊचुश्च यावदायामः, कृत्वा चैत्यनतिं वयम् । ग्रन्थस्तावदयं वीक्ष्य, इत्युक्त्वा तेऽगमन् बहिः ॥ १२६ ॥
ततः सिद्धश्च तं ग्रन्थं, वीक्षमाणो महामतिः । व्यमृशत्किमकार्यं तन्मयाऽऽरब्धमचिन्तितम् ? ॥ १२७ ॥
कोऽन्य एवंविधो मादृगविचारितकारकः । स्वार्थभ्रंशैः पराख्यानैर्मणिं काचेन हारयेत् ॥ १२८ ॥
महोपकारी स श्रीमान्, हरिभद्रप्रभुर्यतः । मदर्थमेव येनासौ, ग्रन्थोऽपि निरमाप्यत ॥ १२९ ॥
आचार्यो हरिभद्रो मे, धर्मबोधकरो गुरुः । प्रस्तावे भावतो हन्त, स एवाद्ये निवेशितः ॥ १३० ॥
अनागतं परिज्ञाय, चैत्यवन्दनसंश्रया । मदर्थं निर्मिता येन, वृत्तिर्ललितविस्तरा ॥ १३१ ॥
विपं विनिर्धूय कुवासनामयं, व्यचीचर(रीरच)यः कृपया मदाशये ।
अचिन्त्यवीर्येण सुवासनासुधां, नमोऽस्तु तस्मै हरिभद्रसूरये ॥ १३२ ॥
किं कर्त्रा च मया शिष्याभासेनाथ गुरुर्मम । विज्ञायैवन्निमित्तेनोपकर्तुं त्वाह्वयन्निपान् ॥ १३३ ॥

तदङ्घ्रिरजसा मौलिं, पावयिष्येऽधुनाऽनिशम् । आगः स्वं कथयिष्यामि, गुरुः स्यान्न ह्यनीदृशः ॥ १३४ ॥
तथागतमतिभ्रान्तिर्गता मे ग्रन्थतोऽमुतः । कोद्रवस्य यथा शस्त्राघाततो मदनभ्रमः ॥ १३५ ॥
एवं चिन्तयतस्तस्य, गुरुर्बाह्यभुवस्ततः । आगतस्तादृशं पश्यन्, पुस्तकस्थं मुदं दधौ ॥ १३६ ॥
नैषेधिकीमहाशब्दं, श्रुत्वोर्ध्वः सम्भ्रमादभूत् । प्रणम्य रूक्षयामास, शिरसा तत्पदद्वयम् ॥ १३७ ॥
उवाच किंनिमित्तोऽयं, मोहस्तव मयि प्रभो! । कारयिष्यन्ति चैत्यानि, पश्चात्किं मादृशोऽधमाः ॥ १३८ ॥
उन्मीला दूषका स्फोटस्फुटवेदनविद्रुहः । स्वादविघ्नाश्चला दन्ताः, कुशिष्याश्च गताः शुभाः ॥ १३९ ॥
आहूतो मिलनव्याजाद्, बोधायैव ध्रुवं प्रभो! । हारिभद्रस्तथा ग्रन्थो, भवता विदधे करे ॥ १४० ॥
भग्नभ्रमः कुशास्त्रेषु, प्रभुं विज्ञपये ततः । स्वस्यान्तेवासिपाशस्य, पृष्ठे हस्तं प्रदेहि मे ॥ १४१ ॥
देवगुर्वाद्यवज्ञोत्थमहापापस्य मे तथा । प्रायश्चित्तं प्रयच्छाद्य, दुर्गतिच्छित्कृपां कुरु ॥ १४२ ॥
अथोवाच प्रभुस्तत्र, करुणाशरणाशयः । आनन्दाश्रुपरिश्रुत्या, परिक्लिन्नोत्तरीयकः ॥ १४३ ॥
मा खेदं वत्स! कार्षीस्त्वं, को वनीवच्यते नवा । पानशौण्डैरिवाभ्यस्तकुतर्कमदविह्वलैः ? ॥ १४४ ॥
नाहं त्वां धूर्तितं मन्ये, यद्वचो विस्मृतं न मे । मदेन विकलः कोऽपि, त्वां विना प्राक्श्रुतं स्मरेत् ? ॥ १४५ ॥
वेषादिधारणं तेषां, विश्वासायापि सम्भवेत् । अतिभ्रान्तिं च नात्राहं, मानये तव मानसे ॥ १४६ ॥
प्रख्यातवक्तृकप्रज्ञज्ञातशास्त्रार्थमर्मकः । कः शिष्यस्त्वादृशो गच्छेऽतुच्छे मच्चित्तविभ्रमः ॥ १४७ ॥

गत्वाऽथोपाश्रये सिंहासनस्थं वीक्ष्य तं प्रभुम् । ऊर्ध्वस्थानशुभा यूयमित्युक्त्वा मौनमास्थितः ॥ १२१ ॥
गर्गस्वामी व्यमृक्षष, संजज्ञे तदिदं क(फ)लम् । अनिमित्तस्य जैनी वाग्, नान्यथा भवति ध्रुवम् ॥ १२२ ॥
अस्माकं महद्वैपम्यमिदं जज्ञे यदीदृशः । सुविनेयो महाविद्वान्, परशास्त्रप्रलम्भितः ॥ १२३ ॥
तदुपायेन केनापि, बोध्योऽसौ यदि भोत्स्यते । तदस्माकं प्रियं भाग्यैरुदितं किं बहूक्तिभिः ? ॥ १२४ ॥
ध्यात्वेत्युत्थाय गुरुभिस्तं निवेश्यासनेऽर्पिता । चैत्यवन्दनसूत्रस्य, वृत्तिर्ललितविस्तरा ॥ १२५ ॥
ऊचुश्च यावदायामः, कृत्वा चैत्यनतिं वयम् । ग्रन्थस्तावदयं वीक्ष्य, इत्युक्त्वा तेऽगमन् बहिः ॥ १२६ ॥
ततः सिद्धश्च तं ग्रन्थं, वीक्षमाणो महामतिः । व्यमृशत्किमकार्यं वन्मयाऽऽरब्धमचिन्तितम् ? ॥ १२७ ॥
कोऽन्य एवंविधो मादृगविचारितकारकः । स्वार्थभ्रंशैः पराख्यानैर्मणिं काचेन हारयेत् ॥ १२८ ॥
महोपकारी स श्रीमान्, हरिभद्रप्रभुर्यतः । मदर्थमेव येनासौ, ग्रन्थोऽपि निरमाप्यत ॥ १२९ ॥
आचार्यो हरिभद्रो मे, धर्मबोधकरो गुरुः । प्रस्तावे भावतो हन्त, स एवाद्ये निवेशितः ॥ १३० ॥
अनागतं परिज्ञाय, चैत्यवन्दनसंश्रया । मदर्थं निर्मिता येन, वृत्तिर्ललितविस्तरा ॥ १३१ ॥
विषं विनिर्धूय कुवासनामयं, व्यचीचर(रीरच)द्यः कृपया मदाशये ।
अचिन्त्यवीर्येण सुवासनासुधां, नमोऽस्तु तस्मै हरिभद्रसूरये ॥ १३२ ॥
किं कर्त्ता च मया शिष्याभासेनाथ गुरुर्मम । विज्ञायैतन्निमित्तेनोपकर्तुं त्वाह्वयन्निपात् ॥ १३३ ॥

"अत्रान्तरे श्रीमालपुरे कोऽपि धनी श्रेष्ठी जैनः चतुर्मासके सपरिकरो देवतायतनं व्रजन् सिद्धाख्यं राजपुत्रं द्यूतकारं युवानं देयकनकपदे निर्दयैर्द्यूतकारैर्गर्त्तायां निक्षिप्तं कृपया तद्देयं दत्त्वा अमोचयत् गृहमानीयाभोजयत् अपाठयत् सर्वकार्याध्यक्षमकरोत् पर्यणाययत्, माता प्रागप्यासीत् पृथग्गृहमण्डनिका, श्रेष्ठिप्रासादाद्धनं, सिद्धो रात्रौ अतिकाले एति लेख्यकलेखने च परवशत्वात्, श्वश्रूस्नुषे अतिनिर्विण्णे अतिजागरणात्, वध्वा श्वश्रूरुक्ता—मातः! पुत्रं तथा बोधय यथा निशि सकाले एति, मात्रा उक्तः सः—वत्स! निशि शीघ्रमेहि, यः कालज्ञः स सर्वज्ञः, सिद्धः प्राह—मातः! येन स्वामिनाऽहं सर्वस्वदानेन जीवितव्यदानेन च समुद्धृतः तदादेशं कथं न कुर्वे?, तौष्णीक्येन स्थिता माता, अन्यदाऽऽलोचितं श्वश्रूस्नुषाभ्यां—अस्य चिरादागतस्य निशि द्वारं नोद्घाटयिष्यावः, द्वितीयरात्रौ अतिचिरात् द्वारमागतः सः कटकं खटखटापयति, ते तु न ब्रूतः, तेन क्रुद्धेन गदितं—किमिति द्वारं नोद्घाटयेथे?, ताभ्यां मन्त्रितपूर्विणीभ्यामुक्तं—यत्रेदानीं द्वाराणि उद्घाटितानि तत्र व्रज, तच्छ्रुत्वा क्रुद्धश्चतुष्पथं गतः, तत्रोद्घाटे हट्टे उपविष्टान् भूरिमन्त्रस्मरणपरान् श्रीहरिभद्रान् दृष्टवान् सान्द्रचन्द्रिके नभसि देशना बोधः कृतं सर्वविशता(द्वत्वं)दिव्यं कवित्वं, हंसपरमहंसवत् विशेषतर्कानाजिघृक्षुर्बौद्धान्तिकं जिगमिषुर्गुरूनवादीत्—प्रेषयत बौद्धपार्श्वे, गुरुभिर्गदितं—तत्र मा गाः मनःपरावर्तो भावी, स ऊचे—युगान्तेऽपि नैवं स्यात्, पुनर्गुरवः प्रोचुः—तत्र गतः परावर्त्यसे चेत्तदाऽस्मद्दत्तं वेषं अत्राऽऽगत्यास्मभ्यं ददीथाः, ऊरीचक्रे सः, गतस्तत्र, पठितुं लग्नः, सुघटितैस्तत्कुतर्कैः परावर्तितं मनः, तद्दीक्षां ललौ, वेषं दातुमुपश्रीहरिभद्रं ययौ; तैरपि आगच्छन् जटितः, एवं वेषद्वयप्रदानेन एहिरेयाहिराः २१, द्वावि-

१ अत्र यत् श्रीमतां हरिभद्रसूरीणां श्रीमतां सिद्धर्षीणां च समकालीनत्वं जगदे तन्न श्रद्धेयं, प्रस्तुत एव ग्रन्थे स्वकीयवचनेन श्रीमतां धर्मगुरूणां हरिभद्रसूरीणां व्यवहितकालभवतायाः ग 'धिंहस्तावाप्तदीक्षत्वस्य चोक्तेः। यच्चात्र शोधकत्वं सरस्वत्यास्तदपि प्रथमादर्शलेखनमात्रतयैव गुणाभिधया विधाकृपया लिखनात्।

इत्युक्तिभिस्तमानिन्ये, प्रायश्चित्तं तदा गुरुः । प्रददेऽस्य निजे पट्टे, तथा प्रातिष्ठिपच्च तम् ॥ १४८ ॥
स्वयं तु भूत्वा निस्सङ्गस्तुङ्गरङ्गभुवं तदा । हित्वा प्राच्यर्षिचीर्णाय, तपसेऽरण्यमाश्रयत् ॥ १४९ ॥
कायोत्सर्गी कदाप्यस्थादुपसर्गसहिष्णुधीः । कदापि निर्निमेषाक्षः, प्रतिमाभ्यासमाददे ॥ १५० ॥
कदाचित्पारणे प्रान्ताहारधारितशम्बरम् । कदाचिन्मासिकाद्यैश्च, तपोभिः कर्म सोऽक्षिपत् ॥ १५१ ॥
एवंप्रकारमास्थाय, चारित्रं दुश्चरं तदा । आयुरन्ते विधायाथानशनं स्वर्ययौ सुधीः ॥ १५२ ॥
इतश्च सिद्धव्याख्याता, विख्यातः सर्वतोमुखे । पाण्डित्ये पण्डितंमन्यः, परशासनजित्वरः ॥ १५३ ॥
समस्तशासनोद्योतं, कुर्वन् सूर्य इव स्फुटम् । विशेषतोऽवदातैस्तु, कृतनिर्वृतिनिर्वृतिः ॥ १५४ ॥
असङ्ख्यतीर्थयात्रादिमहोत्साहैः प्रभावनाः । कारयन् धार्मिकैः सिद्धो, वचःसिद्धिं परां दधौ ॥ १५५ ॥
श्रीमत्सुप्रभदेवनिर्मलकुलालङ्कारचूडामणिः, श्रीमन्माघकवीश्वरस्य सहजापेक्षापरीक्षानिधिः ।
तद्वृत्तं परिचिन्त्य कुग्रहपरिष्वङ्गं कथञ्चित्कलिः, प्रागल्भ्यादपि सङ्गतं त्यजत भो लोकद्वये सिद्धये ॥ १५६ ॥
श्रीचन्द्रप्रभसूरिपट्टसरसीहंसप्रभः श्रीप्रभाचन्द्रः सूरिरनेन चेतसि कृते श्रीरामलक्ष्मीभुवा ।
श्रीपूर्वर्षिचरित्ररोहणगिरौ सिद्धर्षिवृत्ताख्यया, श्रीप्रद्युम्नमुनीन्दुना विशदितः शृङ्गो जगत्सङ्ख्यया ॥ १५७ ॥

॥ इति श्रीसिद्धर्षिगणिप्रबन्धः ॥

विद्याधरकुलनभस्तलश्रीमज्जिनदत्तोपदेशामृतपानपुष्टाः, स्पष्टं चैतत् आवश्यकवृत्त्याद्यवलोककानां, लब्धबोधाः श्रीमन्तो ललितविस्तराया अवलोकनात् यतस्तत एवानेकत्र 'हृदि यद् ओष्ठयोस्तकत्' इति नीतिमनुकुर्वन्त इव ललितविस्तरादण्डकानखिलान् तथास्थानेव तत्र तत्र प्रतिपादयाञ्चक्रुः, यतः अत्र ३२३ पृष्ठे विचक्षणसूरिदेशनायां यत् 'प्रदीप्तभवनोदरकल्पोऽयं भव' इत्यतः 'तस्मादत्रैव यतध्वं यूयं' इत्यन्तः ग्रन्थः गृहस्थधर्मं च प्रतिपादयन्तः ६४० पृष्ठे यत् 'परिहर्त्तव्योऽकल्याणमित्रयोगः' इत आरभ्य 'वर्त्तितव्यमुत्तमज्ञातेन' इति पर्यन्तं च ग्रन्थमुदाजहार तत् प्रायशोऽक्षरशः ललितविस्तरावृत्तिगतं क्रमेण ४६ पत्रे ११६ पत्रे च सम्यगीक्ष्यते, तदियता प्रपञ्चेन ज्ञातेन सुनिर्णयमेतत् यदुत श्रीमन्तः सिद्धर्षयो निर्वृत्तिकुलीनदुर्गस्वामिपट्टपूर्वाचलार्यमाभस्य सद्दर्षेः शिष्याः श्रीमद्भ्यो दुर्गस्वामिभ्योऽवाप्तबोधाः श्रीगर्गर्षिभिः प्राचीनकर्मविपाकविवरीतृभिर्दीक्षिताः प्रचुरकालव्यवहितश्रीमत्सूरिपुरन्दरहरिभद्रसूरिग्रथितललितविस्तरावलोकजातविवेकलोचनोन्मेषतया धर्मबोधकरगुरुतालङ्कृतश्रीहरिभद्राचार्याः, अत एव चात्रानुकरणं शतशो ललितविस्तरागतानां दण्डकानां चक्रुः, विलोकनीयतमाश्चैतेऽपि दण्डका मुमुक्षूणां स्वपरिणामावनामोन्नामप्रेक्षकाणामिति " " इति चिह्नाङ्किताः कृता अत्र मुद्रणे, तत एव भिन्ना अपि ते परिणाममालातयोद्धृत्य पृथग् मुद्रिताः सहृदयहृदयानामनल्पभावोल्लासायेति न नूत्नं किञ्चित्, अनुकरणेन च तादृशानामनेकानां दण्डकरत्नानामत्र समावेशात् पुरुषोत्तमानां कविवराणां कादम्बर्यादिवत् वस्तुस्वरूपबोधने प्रत्यलोऽयं ग्रन्थः, किञ्च अत्र बालोपयोगिनो युवोपयोगिनो वृद्धोपयोगिनो राजकुमारोपयोगिनो राजोपयोगिनो योग्युपयोगिन आयुर्वेदोपयोगिनो धनुर्वेदोपयोगिनो ज्योतिष्कोपयोगिनो सामुद्रिकोपयोगिनो गृहस्थधर्मोपयोगिनो भर्त्रुपयोगिनो वधूपयोगिनो कामोपयोगिनः कलोपयोगिनो देशाटनोपयोगिनो युद्धोपयोगिनः सन्ध्युपयोगिनः क्रीडोपयोगिनः सभोपयोगिनोऽमात्योपयोगिनः सेनाधिपोपयोगिनः चर-

शतिवेलायां गुरुभिश्चिन्तितं-'मा वराकस्य आयुःक्षयेण मिथ्यादृष्टित्वे मृतस्य दीर्घभवभ्रमणं भूयात्, पुरापि २१ वारं वादैर्जितोऽसौ अधुना वादेनालं, ललितविस्तराख्या चैत्यवन्दनावृत्तिः सतर्का कृता, तदागमे पुस्तिकां पाठपीठे मुक्त्वा गुरवो बहिर्ययुः, तत्पुस्तिकापरामर्शाद् बोद्धा सम्यक्, ततस्तुष्टो निश्चलमनाः प्राह—"नमोऽस्तु हरिभद्राय, तस्मै प्रवरसूरये। मदर्थं निर्मिता येन, वृत्तिर्ललितविस्तरा॥ १॥" ततो मिथ्यात्वनिर्विण्णेन सिद्धर्षिणा १६ सहस्रा उपमितिभवप्रपञ्चा कथा अरचि श्रीमाले घिसिमण्डपे, सा च सरस्वत्या साध्व्या अशोधि।"

ननु श्रीमन्तो हरिभद्राचार्याः शुभवतां सिद्धर्षीणां बोधका न चोपदेशका न च दीक्षादायका नैव च दीक्षागुरवः तत् कथंकारं ते धर्मबोधकरा गुरव इति चेन्न, यतः ग्रन्थकारा एव यदि स्वमुखेनैव सूरिवराणां स्वधर्मबोधकरगुरुत्वं ज्ञापयन्ति स्पष्टं वदन्ति च तर्हि प्रश्नोऽयं भवदीयः कथं शीता आपः कथं वोष्णो वह्निरिति स्वभावपर्यनुयोगवत् निरवकाश एव, युक्तिस्तु श्रीमन्तो बोधादिकमाप्ताः श्रीमद्गुर्गस्वामिप्रभृतिभ्यः परं "यां बुद्ध्वा किल सिद्धसाधुरखिलव्याख्यातृचूडामणिः, संबुद्धः सुगतप्रणीतसमयाभ्यासाबलच्चेतनः। तत्कर्तुः स्वकृतौ पुनर्गुरुतया चक्रे नमस्यामसौ, को ह्येनां विवृणोतु नाम विवृतिं स्मृत्यै तथाप्यात्मनः ॥१॥" इति विक्रमद्वादशशताब्दीयश्रीमन्मुनिचन्द्रप्रणीतात् ललितविस्तरापञ्जिकाया वचनात् अत एव 'का स्पर्धा समरादित्यकवित्वे पूर्वसूरिणे'तिवचसः संगतिः 'अनागतं परिज्ञाय, चैत्यवन्दनसंश्रया। मदर्थैव कृता येन, वृत्तिर्ललितविस्तरा ॥ १॥" इति प्रस्तुतग्रन्थप्रशस्तिवाक्यतश्च श्रद्धाचलनमवापुः बोधं च श्रीहरिभद्रीयललितविस्तरावलोकनात्, युक्तं चावाप्य पुनः श्रद्धां तानेव गुरून् गुणगुरून् स्वगुरुतया स्वीकर्तुः कृतज्ञपतित्वं, द्वयोर्भिन्नकालीनत्वे एतदपि ज्ञापकं 'तत्कर्तु'रित्यादि, व्यवहारभाष्यादौ आभाव्यव्यवहारे गतश्रद्धस्य श्रद्धाकारकसैवाभाव्यव्यवहारात्, किंच सिद्धर्षयो हि निर्वृत्तिकुलालङ्करणाः श्रीमन्तो हरिभद्राश्च नागेन्द्रकुलाम्बरनभोमणिश्रीमज्जिनभटशिष्याः

विद्याधरकुलनभस्तलश्रीमज्जिनदत्तोपदेशामृतपानपुष्टाः, स्पष्टं चैतत् आवश्यकवृत्त्याद्यवलोककानां, लब्धबोधाः श्रीमन्तो ललितविस्तराया अवलोकनात् यतस्तत एवानेकत्र 'हृदि यद्‌ ओष्ठयोस्तकत्' इति नीतिमनुकुर्वन्त इव ललितविस्तरादण्डकानखिलान् तथास्थानेव तत्र तत्र प्रतिपादयाञ्चक्रुः, यतः अत्र ३२३ पृष्ठे विचक्षणसूरिदेशनायां यत् 'प्रदीप्तभवनोदरकल्पोऽयं भव' इत्यतः 'तस्मादत्रैव यतध्वं यूयं' इत्यन्तः ग्रन्थः गृहस्थधर्मं च प्रतिपादयन्तः ६४० पृष्ठे यत् 'परिहर्त्तव्योऽकल्याणमित्रयोगः' इत आरभ्य 'वर्त्तितव्यमुत्तमज्ञातेन' इति पर्यन्तं च ग्रन्थमुदाजहार तत् प्रायशोऽक्षरशः ललितविस्तरावृत्तिगतं क्रमेण ४६ पत्रे ११६ पत्रे च सम्यगीक्ष्यते, तदियता प्रपञ्चेन ज्ञातेन सुनिर्णयमेतत् यदुत श्रीमन्तः सिद्धर्षयो निर्वृत्तिकुलीनदुर्गस्वामिपट्टपूर्वाचलार्यमाभस्य सद्दर्षेः शिष्याः श्रीमद्भ्यो दुर्गस्वामिभ्योऽवाप्तबोधाः श्रीगर्गर्षिभिः प्राचीनकर्मविपाकविवरीतृभिर्दीक्षिताः प्रचुरकालव्यवहितश्रीमत्सूरिपुरन्दरहरिभद्रसूरिग्रथितललितविस्तरावलोकजातविवेकलोचनोन्मेषतया धर्मबोधकरगुरुतालङ्कृतश्रीहरिभद्राचार्याः, अत एव चात्रानुकरणं शतशो ललितविस्तरागतानां दण्डकानां चक्रुः, विलोकनीयतमाश्चैतेऽपि दण्डका मुमुक्षूणां स्वपरिणामावनामोन्नामप्रेक्षकाणामिति " " इति चिह्नाङ्किताः कृता अत्र मुद्रणे, तत एव भिन्ना अपि ते परिणाममालातयोद्धृत्य पृथग् मुद्रिताः सहृदयहृदयानामनल्पभावोल्लासायेति न नूतनं किञ्चित्, अनुकरणेन च तादृशानामनेकानां दण्डकरत्नानामत्र समावेशात् पुरुषोत्तमानां कविवराणां कादम्बर्यादिवत् वस्तुस्वरूपबोधने प्रत्नलोऽयं ग्रन्थः, किञ्च अत्र बालोपयोगिनो युवोपयोगिनो वृद्धोपयोगिनो राजकुमारोपयोगिनो राजोपयोगिनो योग्युपयोगिन आयुर्वेदोपयोगिनो धनुर्वेदोपयोगिनो ज्योतिष्कोपयोगिनो सामुद्रिकोपयोगिनो गृहस्थधर्मोपयोगिनो भर्त्रुपयोगिनो वधूपयोगिनो कामोपयोगिनः कलोपयोगिनो देशाटनोपयोगिनो युद्धोपयोगिनः सन्ध्युपयोगिनः क्रीडोपयोगिनः सभोपयोगिनोऽमात्योपयोगिनः सेनाधिपोपयोगिनः चर-

शतिवेलायां गुरुभिश्चिन्तितं—मा वराकस्य आयुःक्षयेण मिथ्यादृष्टित्वे मृतस्य दीर्घभवभ्रमणं भूयात्, पुरापि २१ वारं वादैर्जितोऽसौ अधुना वादेनालं, ललितविस्तराख्या चैत्यवन्दनावृत्तिः सतर्का कृता, तदागमे पुस्तिकां पाठपीठे मुक्त्वा गुरवो बहिर्ययुः, तत्पुस्तिकापरामर्शाद् बोद्धा सम्यक्, ततस्तुष्टो निश्चलमनाः प्राह—"नमोऽस्तु हरिभद्राय, तस्मै प्रवरसूरये। मदर्थं निर्मिता येन, वृत्तिर्ललितविस्तरा॥ १॥" ततो मिथ्यात्वनिर्विण्णेन सिद्धर्षिणा १६ सहस्रा उपमितिभवप्रपञ्चा कथा अरचि श्रीमाले घिसिमण्डपे, सा च सरस्वत्या साध्व्या अशोधि।"

ननु श्रीमन्तो हरिभद्राचार्याः शुभवतां सिद्धर्षीणां बोधका न चोपदेशका न च दीक्षादायका नैव च दीक्षागुरवः तत् कथंकारं ते धर्मबोधकरा गुरव इति चेन्न, यतः ग्रन्थकारा एव यदि स्वमुखेनैव सूरिवराणां स्वधर्मबोधकरगुरुतां ज्ञापयन्ति स्पष्टं वदन्ति च तर्हि प्रश्नोऽयं भवदीयः कथं शीता आपः कथं वोष्णो वह्निरिति स्वभावपर्यनुयोगवत् निरवकाश एव, युक्तिस्तु श्रीमन्तो बोधादिकमाप्ताः श्रीमद्गुर्गस्वामिप्रभृतिभ्यः परं "यां बुद्ध्वा किल सिद्धसाधुरखिलव्याख्यातृचूडामणिः, संबुद्धः सुगतप्रणीतसमयाभ्यासाबलच्चेतनः। तत्कर्त्तुः स्वकृतौ पुनर्गुरुतया चक्रे नमस्यामसौ, को ह्येनां विवृणोतु नाम विवृतिं स्मृत्यै तथाप्यात्मनः ॥१॥" इति विक्रमद्वादशशताब्दीयश्रीमन्मुनिचन्द्रप्रणीतात् ललितविस्तरापञ्जिकाया वचनात् अत एव 'का स्पर्धा समरादित्यकवित्वे पूर्वसूरिणे'तिवचसः संगतिः 'अनागतं परिज्ञाय, चैत्यवन्दनसंश्रया। मदर्थैव कृता येन, वृत्तिर्ललितविस्तरा ॥ १॥" इति प्रस्तुतग्रन्थप्रशस्तिवाक्यतश्च श्रद्धाचलनमवापुः बोधं च श्रीहरिभद्रीयललितविस्तरावलोकनात्, युक्तं चावाप्य पुनः श्रद्धां तानेव गुरून् गुणगुरून् स्वगुरुतया स्वीकर्त्तुः कृतज्ञपतित्वं, द्वयोर्भिन्नकालीनत्वे एतदपि ज्ञापकं 'तत्कर्त्तु'रित्यादि, व्यवहारभाष्यादौ आभाव्यव्यवहारे गतश्रद्धस्य श्रद्धाकारकस्यैवाभाव्यव्यवहारात्, किंच सिद्धर्षयो हि निर्वृत्तिकुलालङ्करणाः श्रीमन्तो हरिभद्राश्च नागेन्द्रकुलाम्बरनभोमणिश्रीमज्जिनभटशिष्याः

गर्भं च, यत् किञ्चिदिह वक्ष्यते । तत्रोपमितिग्रन्थोक्ता, दृश्या सर्वोपि भावना ॥ १ ॥" इत्यनेन स्वोपज्ञपुष्पमालाबृहद्वृत्तिगतलेखेन च स्पष्टमेव प्रामाण्यानुगतत्वमुपर्युक्तस्य, ततो मलधारगच्छीयश्रीमद्धेमचन्द्रसूर्यन्तःकरणरमणकारिणीं वर्षत्रितयीं श्राव्यां च कथां चक्राणाः कथङ्कारं न स्युरखण्डपाण्डित्यताण्डवाडम्बरा इति स्वयमूह्यं सुधीभिः ४ ।

पञ्चमे तु पर्यनुयोगेऽनिगूहितमेवाचष्टे ग्रन्थकृत् अस्यैव प्रशस्तौ यदुत "संवत्सरशतनवके द्विषष्टिसहितेऽतिलङ्घिते चास्याः । ज्येष्ठे सितपञ्चम्यां पुनर्वसौ गुरुदिने समाप्तिरभूत् ॥ १ ॥" ततो दशम्येव शताब्दी आधारभूताऽस्य कविवरस्य, न च वाच्यं नायं वैक्रमो गदितः संवत्सरः किन्तु गुप्तसंवत्सरादीति, यतः एकादशशताब्द्यां ये ये श्रीमन्तोऽभयसूर्याद्या जाता ग्रन्थकारास्ते वैक्रममेव हायनं निरदिक्षुः स्वस्वकृतौ, यत्र च कचनापि भिन्नो निर्देश्यः संवत्सरस्तत्र तत्प्रवर्त्तकनाम्नैव स्पष्ट उल्लेखः, किंच वैक्रमे त्रिनवत्यधिकैकादशशतके 'वक्खाणिया सहाए पाएण ण केणई चिरं कालं' इति वदन्तः श्रीचन्द्रसूरयो मुनिसुव्रतस्वामिवृत्तमाख्यायन्तः प्रकटमेवाख्यान्ति यत् अस्मद्गुरुभिः श्रीमलधारगणालङ्करणैः श्रीहेमचन्द्रसूरिभिर्यावन्न व्याख्याय्येषा तावत् चिरकालीनापि कथोपमितिभवप्रपञ्चाख्याऽप्रसृतैवासीत्, तथा च नार्वाक्कालोऽस्याः कल्पयितुं शक्यः, शतकादिमात्रे कालेऽप्रसृतौ किमपि न तथाविधं स्यादेव वाच्यं, कथमेव तु चिरकालेनापि अप्रसृततामिधानं ?, तथा सार्धैकादशशताब्द्याः प्राक् चिरतरताऽनुपपत्तेर्योग्योऽयमेवास्याः कालः, अन्यच्च पूर्वप्रतिपादितात् प्रभावकचरित्रोदन्तात् स्पष्टतरमेवैतत् यदुत श्रीमन्तः सिद्धर्षयः श्रीमतां माघकवीनां पितृव्यपुत्राः, माघश्च विद्वद्वर्यः सार्धदशशताब्द्याः नार्वाक्तमः, यतः प्राप्तानवद्यबोधा धनपालकवयः तिलकमञ्जरीकथामाविष्कुर्वाणा माघकविं स्तौति, तामेव च तिलकमञ्जरीं प्राचीनतयाख्यान्ति श्रीमन्तः कलिकालसर्वज्ञाः काव्यानुशासने "प्राज्यप्रभावः प्रभवो, धर्मस्यास्तरजस्तमाः । ददतां निर्वृतात्मान, आद्योऽन्येऽपि जिना मुदम् ॥१॥" इति तिलकमञ्जर्या

टशमोपयोगिनश्चरोपयोगिनः शस्त्रव्यापारोपयोगिनो देशविरत्युपयोगिनो देवपूजोपयोगिनो गुरुसेवोपयोगिनो दानोपयोगिनः शीलोपयोगिनस्तपउपयोगिनो भावोपयोगिनो वैराग्योपयोगिनो मैत्र्याद्युपयोगिनः षड्दर्शनोपयोगिनः स्याद्वादबोधोपयोगिनः सद्बोधोपयोगिनः श्रावकोपयोगिनः श्राविकोपयोगिनः शिष्योपयोगिनो गीतार्थोपयोगिनो देशकोपयोगिनो देशनोपयोगिनः कषायत्यागोपयोगिनो ज्ञानोपयोगिनः चारित्रोपयोगिनः अप्रमत्ततोपयोगिन इन्द्रियजयोपयोगिनः श्रमणधर्मोपयोगिन उपाध्यायोपयोगिन आचार्योपयोगिनो ध्यानोपयोगिनो रम्यलेश्योपयोगिन आराधनोपयोगिनः सिद्धस्वरूपज्ञानोपयोगिनः सिद्धिस्वरूपज्ञानोपयोगिनः अर्हत्त्वोपयोगिनः सिद्धत्वोपयोगिन इत्यादीननेकान् विषयान् याथात्म्येन दण्डकतया वर्णयन्तो ग्रन्थरत्नमेतत् सकलसहृदयहृदयकोशकर्णिकालङ्करणमलञ्चक्रुः, तथा चास्यावलोकनेन स्थालीपुलाकन्यायेनावभासिष्यत एव विदुषां चेतसि चमत्कारचारिमं चारु वैदुष्यं श्रीमतां ग्रन्थकाराणां, ग्रन्थरत्नस्यास्य महार्थताज्ञापने वयमप्रत्यला यतो ग्रन्थरत्नमेतदाश्रित्य विशेषावश्यकभाष्यवृत्ति–अनुयोगद्वारसूत्रवृत्ति–शतकप्रकरणवृत्ति–जीवसमासवृत्ति–मूलावश्यकवृत्तिटीप्पनप्रभृतिग्रन्थसौधसूत्रधारा श्रीमन्तो हेमचन्द्रसूरयो लब्धरक्षाः वर्षत्रयीं यावच्चैतदेव व्याख्यानयाञ्चक्रुः, चक्रुश्चैतदनुकरणेनैव पुष्पमालाबृहद्वृत्तिं भवभावनाबृहद्वृत्तिं च बहुधोपमितियुतचरितावलियुतां, न चैतत् प्रमाणोत्तीर्णमुच्यते, यतः श्रीमन्मलधारिश्रीहेमचन्द्रचरणाम्बुजचञ्चरीकः श्रीमान् श्रीचन्द्रसूरिर्मुनिसुव्रतजिनचरिते एवमाहुः—"उवमियभवप्पवंचा वेरग्गकरी कहा कया आसी । वक्खाणियसिद्धेणं जा पुव्वं सा कढोरत्ति ॥ १ ॥ वक्खाणिया सहाए पाएण न केणई चिरं कालं । जस्स मुहनिग्गयत्था मुद्धाणवि सा तह कहंचि ॥ २ ॥ जाया हियथगयत्था अब्भत्थेऊण तेहिं जह एसा । उवरुवरि तिण्णि वरिसे निसुया तस्सेव य मुहाओ ॥ ३ ॥ तद्दिणपभिइ पयारो जाओ पाएण तीइ सव्वत्थ ॥" अनेन वैक्रमीयत्रिनवत्यधिकैकादशशताब्दीयलेखेन "अन्तरङ्गार्थ-

वभूव सूरिः कनकप्रभाख्यो, निधिर्गुणानामिह चन्द्रगच्छे ॥११॥ तदीयशिष्यः किल बालचन्द्रसूरेः कवीन्द्रादुदितप्रतिष्ठः । अशोधयद्वोविविशुद्धयेऽमुं, प्रद्युम्नसूरिर्विनयोपरुद्धः ॥१२॥ यत्रान्यदप्यत्र निवेशितं स्यादन्यादृशं किञ्चन बुद्धिमान्द्यात् । अयं निबद्धोऽञ्जलिरस्ति सर्वं, तत्साधुभिः साधु निवेशनीयम् ॥ १३ ॥ श्रीविक्रमादित्यनरेन्द्रकालादष्टानवत्यर्यमसङ्ख्यवर्षे । पुष्यार्कभुक्कार्त्तिककृष्णषष्ठ्यां, सम्पूर्णतामेष समाससाद ॥ १४ ॥ यावन्नौरिव भव्यतारणविधावास्ते भवाम्भोनिधौ, श्रीसिद्धेन कृता कथेयमसमार्हद्वाक्यकाष्ठोच्चयैः । तावत्तद्गतसत्पदार्थनिचयस्योद्वहनेऽसौ क्षमा, सारोद्धारकृतिः सदा तदनुगा नौकेव संसर्प्पतु ॥ १५॥ प्रत्यक्षरं निरूप्यास्य, ग्रन्थमानं विनिश्चितम् । शतानि सप्तपञ्चाशत्, त्रिंशत्समधिकान्यहो ॥ १६ ॥ सारोद्धारप्रस्तावनायामप्येवमाहुः—अद्भुतप्रतिभादर्शसंक्रान्ताशेषविष्टपम् । नमामि तमहं सिद्धव्याख्यातारं मुनीश्वरम् ॥ ५ ॥ चक्रे परोपकाराय, परमार्थप्रकाशिनी । उपमित्यभिधा येन, कथाऽद्भुतनिधानभूः ॥ ६ ॥ संक्षेपरुचिलोकानामुपकाराय साम्प्रतम् । तस्या एव मया कोऽपि, सारोद्धारः प्रतन्यते ॥ ७ ॥ अनेनापि बहोः कालव्यवधानस्य ग्रन्थकृदुक्तेर्नार्वाक्तमकालीनेयं, किंच यथा उपमितिसारोद्धारकर्तृभिर्व्यधाय्यनुकरणं तथैव सार्धसप्तदशशताब्दीयश्रीमन्न्यायाचार्यपदोपशोभितश्रीमद्यशोविजयोपाध्यायैः सूक्तमुक्तावल्यां सस्तबकद्वयायां च वैराग्यकल्पलताभिधानायां अमृतहंसमुनिभिर्गद्यमये उपमितिसारे चानुकरणं कृतं ततोऽस्याः प्राचीनतरत्वानुमानं न दुष्करं, न च उपयुक्ततरत्वानुमायां क्लेशलेशः, अत्राभिहितं मनीषिणः लघोर्जडस्य च वृहतो भ्रातुर्मध्यमस्य वृत्तं द्वादशशताब्दीपाश्चात्यभागोत्पन्नैः श्रीमत्तपोगच्छालङ्करणैः श्रीमद्भिर्देवेन्द्रसूरिभिः श्रीधर्मरत्नं व्याचक्षाणैः सप्तदशे वृद्धानुसारित्वाख्यगुणे किञ्चित्परावर्त्य अत्रत्यमेवोदाहृतं, न च तथानुकरणेनोदाहृतिः तत्कर्तुरभियुक्ततरत्वाभावे प्राचीनत्वाभावे च, नच वाच्यं हरिभद्रसूरिरर्वाक्तनकालीनो यतोऽमी तद्धस्तदीक्षिताः प्रस्तुतग्रन्थग्रन्थयितारः, ग्रन्थकृद्भिरेव तेषां कालव्यव-

मंगलश्लोकं श्लेषे दृष्टान्ततया न्यस्यन्तः, किं चान्यत्—"श्रीविक्रमादित्यनरेन्द्रकालात्, अष्टानवत्यर्यमसंख्यवर्षे । पुष्यार्कमुक्तार्त्तिककृष्णपञ्चम्यां, संपूर्णतामेष समाससाद ॥१॥ यावन्नौरिव भव्यतारणविधावास्ते भवाम्भोनिधौ, श्रीसिद्धेन कृता कथेयमसमार्हद्वाक्यकाष्ठोच्चयैः । तावत्तद्गतसत्पदार्थनिचयस्योद्ध्वनेऽसौ क्षमा, सारोद्धारकृतिः सदा तदनुगा नौकेव संसर्पतु ॥ २ ॥" इत्याचक्षाणाः श्रीचन्द्रगच्छीयाः श्रीयशोदेवसूरिसंपर्कलब्धप्रतिष्ठाः श्रीचन्द्रसूरिशिष्या देवेन्द्रसूरयः उपमितिसारोद्धारं प्रस्तुतायाः कथायाः अनुकारं कुर्वन्तः श्रीमतामभियुक्ततां प्राचीनतरतां च व्यजिज्ञपन्, समग्रा च प्रशस्तिः सारोद्धारस्तकेयं "समाश्रितो यः शरणं क्षमाभृद्गुणेन कर्म्माशनिपातभीत्या । आचारपारश्रियमादधानः, स चन्द्रगच्छोऽस्ति भुवि प्रसिद्धः ॥ १ ॥ भव्यारविन्दप्रविबोधहेतुरखंडवृत्तः प्रतिपिद्धदोषः । अथअपूर्वेन्दुतुलामिह श्रीभद्रेश्वरो नाम बभूव सूरिः ॥२॥ तत्पट्टपूर्वाचलचण्डरोचिरजायत श्रीहरिभद्रसूरिः । मुदं न कस्मै रहितं विकृत्या, तपश्च चित्तं च तनोति यस्य ? ॥ ३ ॥ श्रीमानथाजायत शान्तिसूरिर्यतः समुद्रादिव शिष्यमेघाः । ज्ञानामृतं प्राप्य शुभोपदेशवृष्टया व्यधुः कस्य मनो न शस्यं ? ॥४॥ ततो बभूवोदयदेवसूरिर्यदीयवाणी गुणरत्नहृद्या । मेधाभरेन्दूल्लसिता विभाति, वेलेव मध्यस्थजिनागमाब्धेः ॥५॥ प्रसन्नचंद्रोऽथ बभूव सूरिर्वक्तुं गुणान् यस्य न हि क्षमोऽभूत् । सहस्रवक्त्रोऽपि भुजंगराजस्ततो ह्रियेवैष रसातलेऽगात् ॥६॥ अथाजनि श्रीमुनिरत्नसूरिः, स्वबुद्धिनिर्द्धूतसु(रन्द्रेसू)रिः । रक्षन्ति शास्त्राण्यखिलानि यस्य, स्थिरोन्नते मानसरोहणाद्रौ ॥ ७ ॥ श्रीचन्द्रसूरिः सुगुरुस्ततोऽभूत्, प्रसन्नताऽलङ्कृतमस्तदोषम् । चित्तं च वाक्यं च वपुश्च यस्य, कं न प्रमोदोत्पुलकं करोति ? ॥ ८ ॥ सूरिर्यशोदेव इति प्रसिद्धस्ततोऽभवद् यत्पदपङ्कजस्य । रजोभिरालिङ्गितमौलयोऽपि, चित्रं पवित्राः प्रणता भवन्ति ॥ ९ ॥ तत्पाणिपद्मोल्लसितप्रतिष्ठः, श्रीचन्द्रसूरिप्रभुशिष्यलेशः । देवेन्द्रसूरिः किमपीति सारोद्धारं चकारोपमितेः कथायाः ॥ १० ॥ इतश्च शिष्यो गणधारिदेवानन्दस्य रत्नप्रभसूरिपट्टे ।

स्पष्टमुल्लिखद्भिः श्रीमद्भिः स्वाभिजनता भिन्नमालीया निजगदे, श्रीहरिभद्रसूरेरसमानकालीनतायामेतदप्यूहनीयं यतः श्रीमद्धरिभद्रसूरीणां चित्रकूटादिषु स्थैर्यं, भिन्नमाले च तदीयां कृतिं ललितविस्तराख्यां विचारयन्तः स्थिता दुर्गस्वामिन इति तु स्पष्टं ग्रन्थकृत्प्रबन्धेषु, ततोऽन्तरेण बहुकालव्यवधानं नैतत् घटामश्चति ६। प्रश्नयोः सप्तमाष्टमयोः दीक्षादायकाः श्रीमन्तो गर्गर्षयः प्रतिबोधकाः श्रीदुर्गस्वामिनः परमार्थतः श्रीमन्तो हरिभद्रसूरयश्चेत्यनेकशो व्याख्यातमिति न तत्र भूयः प्रयासः, न च शङ्कनीयं "गीर्देवतया विहिताऽभिहिता सिद्धाभिधानेने"ति वाक्येन नास्या विधाता तत्त्वतः सिद्धर्षिः गीर्देवताया एव तद्रचयितृत्वात्, यतो गीर्देवता हि तत्र सरस्वत्येव, सा च सर्वस्यापि वाक्प्रसरस्य विधात्र्येवेति तन्महिमगानं, न तु तेनान्यया कयाचिद् गीर्देवताभिधानया साध्व्याऽन्यया वा विहितेति मन्तव्यं, यद्यपीदानींतनकालवत् न तदानीं साध्वीश्राविकावर्गो मुग्धः, अस्या एव प्रथमादर्शलेखिका यतो गुणाभिधाना आर्यिकैव दुर्गस्वामिशिष्यिका एवं तिलकमञ्जर्यादीनामप्यनेकानां तथाविधानां भावात् तथापि प्रस्तुतकथाविधायकस्तु सिद्धसाधुरेव अत एव च तस्य सिद्धव्याख्यानिकत्वोपालम्भात् ॥

अस्याः प्राकृतसमरादित्यकथानुकारिण्या अपि यत् संस्कृतया गिराभिधानं तत्र जनरुचिरेव कारणं, यतः कविरेव 'संस्कृता तावद्दुर्विदग्धहृदिस्थिते'त्यभिहितवान्, निर्विवादमेतत् यदुतातिप्राचीनशिलालेखानां संस्कृतेतरभाषाणामेवोपलम्भात् प्राचीना प्राकृता तथापि 'यो यथा बुध्यते जन्तुस्तं तथा बोधयेदिति' इति न्यायं समाश्रित्य सर्वसत्त्वहिताधानायैषा प्रवृत्तिः, युक्तमपीदं यतः कथालक्षणं निबध्नन्तः कलिकालसर्वज्ञाः श्रीमन्तो हेमचन्द्रसूरय एवमूचुः—"धीरशान्तनायका गद्येन पद्येन वा सर्वभाषा कथा" ततो यथैव प्राकृते कथाबन्धस्तथैव संस्कृतेऽपीति निबन्धोऽस्याः संस्कृते न दोषभाक्, किंच आख्यायिकाया अयमेव भेदो यत्तस्यां नायकः स्वयं स्ववृत्तान्तं समग्रमाख्याति अस्यां त्वन्यः

हितत्वेन विशिष्टज्ञानवत्त्वेन स्तवनात्, किंच सप्तमशतकोत्पन्नैः श्रीसिद्धसेनगणिभिस्तत्त्वार्थव्याख्यां कुर्वद्भिः 'संज्ञिनः समनस्का' इति (तत्त्वा० अ० २ सू० २५) सूत्रं व्याकुर्वद्भिः दीर्घकालिक्यैव संज्ञया संज्ञिनां ग्रहणमावश्यकमिति निर्धारयद्भिः श्रीमद्धरिभद्रसूरिनिर्मिता श्रीनन्दीसूत्रवृत्तिरेव साक्षितया दर्शिता, न चैतदपि सिद्धर्षीणां महाशयानां अभियुक्तानां च श्रीमतां हरिभद्रसूरीणां यद्योरन्तरस्याभावे युज्यमानं, ततोऽवधेयमेतत् यदुत श्रीमन्तो हरिभद्राचार्याः पूर्वश्रुतव्यवच्छेदकालस्य समीपकाले सत्तां बभ्रुः श्रीमन्तः सिद्धर्षयश्च वैक्रमीयायां दशमायां शताब्द्यां, तथा च यत्र कचनापि श्रीमतां श्रीमद्धरिभद्रदीक्षितत्वोक्तिः सा तद्ग्रन्थजातबोधप्रभावलब्धदीक्षास्थैर्यात्, अत एव च द्वादशशताब्दीपश्चाद्भागोत्पन्नैः श्रीमन्मुनिचन्द्रसूरिभिर्ललितविस्तरायाः पञ्जिकां कुर्वद्भिः "स्वकृतौ पुनर्गुरुतया चक्रे नमस्यामसौ" इत्यारम्भपद्यावयवेनातिशायितां ललितविस्तराया दर्शयद्भिरुक्तं ग्रन्थबोधशिष्टत्वं, हस्तदीक्षितत्वे हि न तथावृत्तस्यातिशायितेति सम्यगवधेयं सुधीभिः, किं च–प्रस्तावे द्वितीये मनुजगतेर्वर्णनां कुर्वाणैः १०५ पृष्ठे 'समरादित्यकथेवानेकवृत्तान्ते'ति दृष्टान्तीकुर्वद्भिर्या समरादित्यकथा दृष्टान्तत्वेनोपात्ता सा हरिभद्रसूरिप्रणीतेति नोभयोः समानकालभवत्वे युज्येत तत्, पुनः यथा श्रीमद्भिर्हरिभद्रसूरिभिः 'गुणसेण अग्गिसम्मे'त्यादिकमालम्बनीकृत्य व्याकृता समरादित्यकथा तथैवैभिरपि समरादित्यकथामुपश्रित्य कथेयमाविर्भावितेति तत एव चामीषां सिद्धव्याख्यानिकत्वमिति प्रभावकचरित्रीयैतत्प्रबन्धावलोककानां न नूत्नं, तदेव च "अखिलव्याख्यातृचूडामणिः' इत्यनेन मुनिचन्द्राचार्याः 'कृतिरियमाचार्यसिद्धव्याख्यानिकस्ये'ति न्यायावतारवृत्तौ स्वयं टीप्पणे च तदीये 'सिद्धव्याख्याता प्रकरणमिदमकरोदि'त्यादि श्रीमन्तो राजशेखराः सूरयः चक्रुः, स्वयमपि प्रस्तावे आद्ये उपक्रमे च स्पष्टमेवाख्यान्ति, परमेतावता प्रयत्नेन तेषां प्राचीनतमताऽभियुक्ततरता च सिद्धिमवाप्नुयादिति निष्टङ्कितं ५। पञ्चम्यां च पृच्छायां ग्रन्थकृद्भिरेव "यत्रातुलरययात्रा०" इति पद्यत्रयं प्रशस्तौ

ॐ नमः

# श्री उपमितिभवप्रपञ्चकथाया अनुक्रमणिका ।

कश्चित्, अत एव भव्यपुरुषवृत्तान्तं बहुधा परमुखेनैव व्याकृतं, यत्र कचनापि स्वमुखेन तत्रापि अन्यपर्यायेणेति नास्याः कथात्वव्याहतिः, प्रस्तावबहुलस्तु निबन्धो नानुकरणजः किंतु भिन्नभिन्नकालीनभवव्यवस्थादर्शनपरः ।

श्रीमद्भिः सिद्धर्षिभिर्विहिता भविष्यन्ति ग्रन्था अनेकास्तथापि अधुना उपदेशमालायाः धर्मदासगणिवर्यैर्निर्मिताया लघ्वी बृहती चेति वृत्तिद्वयं श्रीसिद्धसेनार्कसूत्रितस्य न्यायावतारसूत्रस्य तर्कप्रकरणाख्या वृत्तिश्चेति प्रस्तुतग्रन्थव्यतिरिक्तो न निश्चितमुपलभ्यते, श्रीचन्द्रचरितमपि वर्त्तमानमेव गद्यमयं तत्कर्तृकया गीयते परं तत् न सम्यक् श्रद्धापथमवतेतीर्यतेऽस्माकं, परमपि प्रकरणं तथाविधमन्यथाविधं वा स्यात् चेत् न निषेद्धुमलंभूष्णवः ॥ श्रीमद्भिर्यानि यानि पात्राणि अत्र न्यस्तानि तेषु केषाञ्चित् कोष्ठकेषु निवेशः सौकर्याय अनुक्रमोऽकारादिना तु तेषां परेषां चान्वेषणाबोधसौकर्यायेति तत् कोष्ठकमकारादिक्रमश्चाधस्तादवलोकनीयः । अस्मिन् मुद्रितेऽपि फलिकाताराजधान्यां तदङ्कानां दौर्लभ्यात् प्राग्भागस्य विशेषेणाशुद्धेः पत्राकाराभावात् मुनिवराणां सूपयोगिताया अभावात् प्रयासोऽयं जैनपुस्तकोद्धारकोशसत्कः, किं च प्रतिः शोधने एतस्य श्रीमतां सिद्धिसूरीणां प्राप्तवती प्राक् संस्थेयं पट्पत्रीशोधनसमये त्वस्मदीयं पुस्तकमवलम्बितं, तदेवं संशोधितेऽप्यस्मिन् स्खलनाया दुर्वारत्वात् संशोध्य वाचयन्तु वाचंयमाद्याः, अस्तु च वितथतासत्कं मिथ्यादुष्कृतं न इति प्रार्थयन्ते आनन्दोदधयः श्रमणसङ्घचरणकमलचञ्चरीकाः सुरतद्रङ्गात् वैक्रमीये रसमुन्यंकेन्दुमिते वत्सरे ।

एसा गयग्गपयस्स उप्पत्ती, तत्थ महागिरीहिं भत्तं पच्चक्खायं देवत्तं गया, सुहत्थीवि उज्जेणिं जियपडिमं वंदया गया' उज्जाणे ठिया, भणिया य साहुणो–वसहिं मग्गहत्ति, तत्थ एगो संघाडगो सुभद्दाए सिट्ठिभज्जाए घरं भिक्खस्स अइगओ' पुच्छिया ताए–कओ भगवंतो !, तेहिं भणियं–सुहत्थिस्स, वसहिं मग्गामो, जाणसालाउ दरिसियाउ, तत्थ ठिया, अन्न-या पओसकाले आयरिया नलिणिगुम्मं अज्झयणं परियट्टंति, तीसे पुत्तो अवंतिसुकुमालो सत्ततले पासाए वत्तीसाहिं भज्जाहिं समं उवललइ, तेण सुत्तविबुद्धेण सुयं, न एयं नाडगंति भूमीओ भूमीयं सुणंतो २ उद्दिण्णो, बाहिं निग्गओ, कत्थ एरिसंति जाई सरिया, तेसि मूलं गओ, साहइ–अहं अवंतिसुकुमालोत्ति नलिणिगुम्मे देवो आसि, तस्स उस्सुग्गो पव्वयामि, असमत्थो य अहं सामन्नपरियागं पालेउं, इंगिणिं साहेमि, तेवि मोयावित्ता, तेणं पुच्छियत्ति, नेच्छति, सयमेव लोयं करेति, मा सयंगिहीयलिंगो हवउत्ति लिंगं दिण्णं, मसाणे कंथरे कुंडगं, तत्थ भत्तं पच्चक्खायं, सुकुमालएहिं

---

१ एषा गजाग्रपदकस्य उत्पत्तिः, तत्र महागिरिभिर्भक्तं प्रत्याख्यातं देवत्वं गताः, सुहस्तिनोऽपि उज्जयिनीं जीवत्प्रतिमावन्दका गताः, उद्याने स्थिताः भणिताश्च साधवः वसतिं मार्गयतेति, तत्रैकः संघाटकः सुभद्रायाः श्रेष्ठिभार्याया गृहं भिक्षायातिगतः, पृष्टास्तया–कुतो भगवन्तः ?, तैर्भणितं–सुहस्तिनः, वसतिं मार्गयामः, यानशाला दर्शिताः, तत्र स्थिता', अन्यदा प्रदोषकाले आचार्या नलिनीगुल्ममध्ययनं परिवर्त्तयन्ति, तस्याः, पुत्रोऽवन्तीसुकुमालः सप्ततले प्रासादे द्वात्रिंशता भार्याभिः सममुपललति, तेन सुप्तावबुद्धेन श्रुतं, नैतन्नाटकमिति भूमेर्भूमिमुत्तीर्णः शृण्वन्, बहिर्निर्गतः, क्वेदृशमिति जातिः स्मृता, तेषां मूलं गतः, कथयति–अहं अवन्तिसुकुमाल इति नलिनीगुल्मे देवोऽभवं, तस्मादुत्सुकः प्रव्रजामि, असमर्थश्चाहं श्रामण्यं पालयितुं इङ्गिनीं करोमि, तेऽपि ( भगन्ति– ) मातुर्मोचयित्वा, तेन पृष्टेति, नेच्छति, स्वयमेव लोचं करोति, मा स्वयंगृहीतलिङ्गो भूदिति लिङ्गं दत्तं, श्मशाने कंथेरकुडङ्गं, तत्र भक्तं प्रत्या-ख्यातं, सुकुमालपोः

कओ एसि ?, जत्थ सो एलकच्छओ, अण्णे भणंति—सो चेव राया, ताहे दसण्णपुरस्स एलकच्छं नामं जायं, तत्थ गयग्गपयओ पव्वओ, तस्स उप्पत्ती, तत्थेव दसण्णपुरे दसण्णभद्दो राया, तस्स पंचसयाणि देवीणोरोहो, एवं सो जोव्वणेण रूवेण य पडिबद्धो एरिसं अण्णस्स नत्थित्ति, तेणं कालेणं तेणं समएणं भगवओ महावीरस्स दसण्णकूडे समोसरणं, ताहे सो चिंतेइ—तहा कल्ले वंदामि जहा केणइ न अण्णेण वंदियपुव्वो, तं च अज्झत्थियं सक्को णाऊण एइ, इमोवि महया इड्डीए निग्गओ वंदिओ य सव्विड्डीए, सक्कोवि एरावणं विलग्गो, तत्थ अट्ठ दंते विउव्वेइ, एक्केक्के दंते अट्ठट्ठ वावीओ एक्केक्काए वावीए अट्ठट्ठ पउमाइं एक्केक्कं पउमं अट्ठपत्तं पत्ते य २ वत्तीसइबद्धनाडगं, एवं सो सव्विड्डीए एरावणविलग्गो आयाहिणं पयाहिणं करेइ, ताहे तस्स हत्थिस्स दसण्णकूडे पव्वए य पयाणि देवप्पहावेण उट्ठियाणि, तेण णामं कयं गयग्गपदग्गोत्ति, ताहे सो दसन्नभद्दो तं पेच्छिऊण एरिसा कओ अम्हारिसाणमिड्डी ?, अहो कएल्लओऽणेण धम्मो, अहमवि करेमि, ताहे सो पव्वयइ,

१ कुत आयासि ?, यत्र स एडकाक्षः, अन्ये भणन्ति—स एव राजा, तदा दशार्णपुरस्यैडकाक्षं नाम जातं, तत्र गजाग्रपदः पर्वतः, तस्योत्पत्तिः—दशार्णपुरे दशार्णभद्रो राजा, तस्य पञ्चशतानि देवीनामवरोधः, एवं स यौवनेन रूपेण च प्रतिबद्धोऽन्यस्येदृशं नास्तीति, तस्मिन् काले तस्मिन् समये भगवतो महावीरस्य दशार्णकूटे समवसरणं, तदा स चिन्तयति—तथा कल्ये वन्दिताहे यथा केनचिन्नान्येन वन्दितपूर्वः, तदध्यवसितं च शक्रो ज्ञात्वाऽऽयाति, अयमपि महत्या ऋद्ध्या निर्गतो वन्दितश्च सर्वर्ध्या, शक्रोऽप्यैरावणं विलग्नः, तत्राष्ट दन्तान् विकुर्वति, एकैकस्मिन् दन्ते अष्टाष्ट वापीः एकैकस्यां वाप्यामष्टाष्ट पद्मानि एकैकं पद्ममष्टपत्रं पत्रे पत्रे च द्वात्रिंशद्बद्धं नाटकं, एवं स सर्वर्ध्या ऐरावणविलग्न आदक्षिणं प्रदक्षिणं करोति, तदा तस्य हस्तिनो दशार्णकूटे पर्वते च पादा देवताप्रभावेनोत्थिताः, तेन नाम कृतं गजाग्रपदक ( दाग्र ) इति, तदा स दशार्णभद्रस्तां प्रेक्ष्य ईदृशी कुतोऽस्मादृशामृद्धिः ?, अहो कृतोऽनेन धर्मः, अहमपि करोमि, तदा स प्रव्रजति,

गयग्गपदगं वंदया, तस्स कहं एलगच्छं नामं ?, तं पुव्वं दसण्णपुरं नगरमासी, तत्थ साविया एगस्स मिच्छदिट्ठिस्स दिण्णा, वेयालियं आवस्सयं करेति पच्चक्खाइ य, सो भणइ–किं रत्तिं उट्ठित्ता कोइ जेमेइ ?, एवं उवहसइ, अण्णया सो भणइ–अहंपि पच्चक्खामि, सा भणइ–भंजिहिसि, सो भणइ–किं अण्णयावि अहं रत्तिं उट्ठेत्ता जेमेमि ?, दिन्नं, देवया चिंतेइ–सावियं उवासेइ अज्ज णं उवालभामि, तस्स भगिणी तत्थेव वसइ, तीसे रूवेण रत्तिं पहेणयं गहाय आगया, पच्चक्खइओ, सावियाए वारिओ भणइ–तुब्भच्चएहिं आलपालेहिं किं ?, देवयाए पहारो दिण्णो, दोवि अच्छिगोलगा भूमीए पडिया, सा मम अयसो होहित्ति काउस्सग्गं ठिया, अड्ढरत्ते देवया आगया भणइ–किं साविए !, सा भणइ–मम एस अजसोत्ति ताहे अण्णस्स एलगस्स अच्छीणि सप्पएसाणि तक्खणमारियस्स आणेत्ता लाइयाणि, तओ से सयणो भणइ–तुब्भं अच्छीणि एलगस्स जारिसाणित्ति, तेण सव्वं कहियं, सड्ढो जाओ, जणो कोउहल्लेण एति पेच्छगो, सव्वरज्जे फुडं भणइ–

---

१ गजाग्रपदकवन्दकाः, तस्य कथमेडकाक्षं नाम ?, तत् पूर्वं दशार्णपुरं नगरमासीत्, तत्र श्राविका एकस्मै मिथ्यादृष्टये दत्ता, विकाले आवश्यकं करोति प्रत्याख्याति च, स भणति–किं रात्रावुत्थाय कोऽपि जेमति ?, एवमुपहसति, अन्यदा स भणति–अहमपि प्रत्याख्यामि, सा भणति–भङ्क्ष्यसि, स भणति–किमन्यदाऽप्यहं रात्रावुत्थाय जेमामि, दत्तं, देवता चिन्तयति–श्राविकामुद्भ्राजते अद्यैनमुपालभे, तस्य भगिनी तत्रैव वसति, तस्या रूपेण रात्रौ प्रहेणकं गृहीत्वाऽऽगता, प्रत्याख्यायकः श्राविकया वारितो भणति–त्वदीयैः प्रलापैः किं ?, देवतया प्रहारो दत्तः, द्वावप्यक्षिगोलकौ भूमौ पतितौ, सा ममायशो भविष्यतीति कायोत्सर्गे स्थिता, अर्धरात्रे देवताऽऽगता भणति–किं श्राविके ?, सा भणति–ममैतदयश इति, तदाऽन्यस्यैडकस्याक्षिणी सप्रदेशे तत्क्षणमारितस्यानीय योजितानि, ततस्तस्य स्वजनो भणति–तवाक्षिणी एडकस्य यादृशे इति, तेन सर्वं कथितं, श्राद्धो जातः, जनः कुतूहलेनायाति प्रेक्षकः, सर्वराज्ये स्फुटं भण्यते–

करेंति, ते विहरंता पाडलिपुत्तं गया, तत्थ वसुभूती सेट्ठी, तेसिं अंतियं धम्मं सोच्चा सावगो जाओ, सो अण्णया भणइ अज्जसुहत्थिं–भयवं! मज्झ दिन्नो संसारनित्थरणोवाओ, मए सयणस्स परिकहियं तं न तहा लग्गइ, तुब्भेवि ता अणभिजोएणं गंतूणं कहेहित्ति, सो गंतूण पकहिओ, तत्थ य महागिरी पविट्ठो, ते दट्ठूण सहसा उट्ठिओ, वसुभूती भणइ–तुब्भवि अन्ने आयरिया?, ताहे सुहत्थी तेसिं गुणसंथवं करेइ, जहा–जिणकप्पो अतीतो तहावि एए एवं परिकम्मं करेंति, एवं तेसिं चिरं कहित्ता अणुव्वयाणि य दाऊण गओ सुहत्थी, तेण वसुभूइणा जेमित्ता ते भणिया–जइ एरिसो साहू एज्जा तो से तुब्भे उज्झंतगाणि एवं करेज्ज, एवं दिण्णे महाफलं भविस्सइ, बीयदिवसे महागिरी भिक्खस्स पविट्ठा, तं अपुव्वकरणं दट्ठूण चिंतेइ–दव्वओ ४, णायं जहा णाओ अहंति तहेव अब्भमिते नियत्ता भणंति–अज्जो! अणेसणा कया, केणं? तुमे जेणसि कल्लं अब्भुट्ठिओ, दोवि जणा वतिदिसं गया, तत्थ जियपडिमं वंदित्ता अज्जमहागिरी एलकच्छं गया

१ कुर्वन्ति, ते (सुहस्तिनः) विहरन्तः पाटलीपुत्रं गताः, तत्र वसुभूतिः श्रेष्ठी, तेषामन्तिके धर्मं श्रुत्वा श्रावको जातः, सोऽन्यदा भणति आर्यसुहस्तिनं–भगवन्! मह्यं दत्तः संसारनिस्तरणोपायः, मया स्वजनाय परिकथितं तच्च तथा लगति, यूयमपि तद् अनभियोगेन गत्वा कथयतेति, स गत्वा प्रकथितः, तत्र च महागिरिः प्रविष्टः, तान् दृष्ट्वा सहसोत्थितः, वसुभूतिर्भणति–युष्माकमप्यन्ये आचार्याः?, तदा सुहस्तिनस्तेषां गुणसंस्तवं कुर्वन्ति, यथा जिनकल्पोऽतीतस्तथाप्येते एवं परिकर्म कुर्वन्ति, एवं तेभ्यश्चिरं कथयित्वाऽनुव्रतानि च दत्त्वा गतः सुहस्ती, तेन वसुभूतिना जिमित्वा ते भणिताः–यद्येतादृशः साधुरायात् तदा तस्मै यूयमुज्झितकान्येवं कुर्यात, एवं दत्ते महाफलं भविष्यति, द्वितीयदिवसे महागिरिर्भिक्षायै प्रविष्टः, तदपूर्वकरणं दृष्ट्वा चिन्तयति–द्रव्यत: ४, ज्ञातं यथा ज्ञातोऽहमिति तथैवाभ्रान्ता निर्गता भणन्ति–आर्य! अनेषणा कृता, कथं?, त्वं येनासि कल्येऽभ्युत्थितः, द्वावपि जनौ विदिशं गतौ, तत्र जीवप्रतिमां वन्दित्वा आर्यमहागिरय एडकाक्षं गताः

सक्कागमणं पालएणं विमाणेण, तस्सवि य रण्णो अधिती जाया, वज्जेण भेसिओ सक्केण—जइ पव्वइस्सितो मुच्चसि, पव्वइओ, थेराण अंतिए अभिग्गहं गेण्हइ—जइ भिक्खागओ संभरामि ण जेमेमि, जइ दरजिमिओ ता सेसगं विगिंचामि, एवं तेण किर भगवया एगमवि दिवसं नाऽऽहारियं, तस्सवि दव्वावई, दंडस्स भावावई, आवईसु दढधम्मतत्ति गयं ३। इयाणिं अणिस्सिओवहाणेत्ति, न निश्रितमनिश्रितं, द्रव्योपधानं उपधानकमेव भावोपधानं तपः, सो किर अणिस्सिओ कायव्वो इह परत्थ य, जहा केण कओ ?, एत्थोदाहरणगाहा—

पाडलिपुत्त महागिरि अज्जसुहत्थी य सेट्ठि वसुभूती। वइदिस उज्जेणीए जियपडिमा एलकच्छं च ॥ १२८३ ॥

ईमीए वक्खाणं—अज्जथूलभद्दस्स दो सीसा—अज्जमहागिरी अज्जसुहत्थी य, महागिरी अज्जसुहत्थिस्स उवज्झाया, महागिरी गणं सुहत्थिस्स दाऊण वोच्छिण्णो जिणकप्पोत्ति, तहवि अपडिबद्धया होउत्ति गच्छपडिबद्धा जिणकप्पपरिकम्मं

---

१ शक्रागमनं पालकेन विमानेन, तस्यापि च राज्ञोऽधृतिर्जाता, वज्रेण भापितः शक्रेण—यदि प्रव्रजसि तर्हि मुच्यसे, प्रव्रजितः, स्थविराणामन्तिकेऽभिग्रहं गृह्णाति—यदि भिक्षागतः स्मरामि न जेमामि, यदि अर्धजिमितस्तदा शेषं त्यजामि, एवं तेन किल भगवतैकस्मिन्नपि दिवसे नाहृतं, तस्यापि द्रव्यापत्, दण्डस्य भावापत्, आपत्सु दृढधर्मतेति गतं ३। इदानीमनिश्रितोपधानमिति, तत् किलानिश्रितं कर्त्तव्यं इह परत्र च, यथा केन कृतं ?, अत्रोदाहरणगाथा—
२ अस्या व्याख्याने—आर्यस्थूलभद्रस्य द्वौ शिष्यौ—आर्यमहागिरिरार्यसुहस्ती च, महागिरिरार्यसुहस्तिन उपाध्यायः, महागिरिर्गणं सुहस्तिने दत्त्वा व्युच्छिन्नो जिनकल्प इति, तथाप्यप्रतिबद्धता भवत्विति गच्छप्रतिबद्धाः जिनकल्पपरिकर्मणा

अस्या व्याख्या कथानकादवसेया, तच्चेदं—उज्जेणी णयरी, तत्थ वसू वाणियओ, सो चंपं जातुकामो उग्घोसणं कारेइ जह [नाए] धन्नो, एयं अणुन्नवेइ धम्मघोसो नामणगारो, तेसु दूरं अडविमइगएसु पुलिंदेहिं विलोलिओ सत्थो इओ तइओ नट्ठो, सो अणगारो अण्णेण लोएण समं अडविं पविट्ठो, ते मूलाणि खायंति पाणियं च पियंति, सो निमंतिज्जइ, नेच्छइ आहारज्जाए, एगत्थ सिलायले भत्तं पच्चक्खायं, अदीणस्स अहियासेमाणस्स केवलणाणमुप्पण्णं सिद्धो, ददधम्मयाए जोगा संगहिया, एसा दघावई, खेत्तावई खेत्ताणं असईए कालावई ओमोदरियाइ, भावावईए उदाहरणगाहा—

महुराए जउण राया जउणावंकेण दंडमणगारे। वहणं च कालकरणं सक्कागमणं च पव्वज्जा ॥ १२८२ ॥

व्याख्या कथानकादवसेया, तच्चेदं—महुराए णयरीए जउणो राया, जउणावंकं उज्जाणं अवरेण, तत्थ जउणाए कोप्परो दिण्णो, तत्थ दंडो अणगारो आयावेइ, सो रायाए निंतेण दिट्ठो, तेण रोसेण असिणा सीसं छिन्नं, अन्ने भणंति—फलेण आहओ, सव्वेहिंवि मणुस्सेहिं पत्थररासी कओ, कोवोदयं पइ तस्स आवई, कालगओ सिद्धो, देवागमणं महिमाकरणं

१ उज्जयिनी नगरी, तत्र वसुर्वणिक्, स चम्पां यातुकाम उद्घोषणां कारयति, यथा धन्यः, एतमनुज्ञापयति धर्मघोषो नामानगारः, तेषु दूरमटवीमतिगतेषु पुलिन्द्रैर्विलोलितः सार्थः इतस्ततो नष्टः, सोऽनगारोऽन्येन लोकेन सममटवीं प्रविष्टः, ते मूलानि खादन्ति पानीयं च पिबन्ति, स निमन्त्र्यते, नेच्छति आहारजातं, एकत्र शिलातले भक्तं प्रत्याख्यातं, अदीनस्याध्यासीनस्य केवलज्ञानमुत्पन्नं सिद्धः, दृढधर्मतया योगाः संगृहीताः, एषा द्रव्यापत्, क्षेत्रापत् क्षेत्राणामसति कालापत् अवमोदरिकादि भावापदुदाहरणगाथा। २ मथुरायां नगर्यां यमुनो राजा यमुनावक्रमुद्यानमपरस्यां, तत्र यमुनायां स्कन्धावारो दत्तः, तत्र दण्डोऽनगार आतापयति, स राज्ञा निर्गच्छता दृष्टः, तेन रोषेणासिना शीर्षं छिन्नं, अन्ये भणन्ति—बीजपूरेणाहतः, सर्वैरपि मनुष्यैः प्रस्तरराशिः कृतः, कोपोदयं प्रति तस्य आपत्, कालगतः सिद्धः, देवागमनं महिमकरणं

४ प्रतिक्र० णाप्य० योगसं० ३ आपत्सु दृढधर्मतायां धर्मघो० दण्डो द

भणीयमलत्तगं कंकणं च गहाय अडविं गओ, दंता लद्धा पुंजो कओ, तेण तणपिंडिगाण मज्झे वंधित्ता सगडं भरेत्ता आणीया, णयरे पवेसिज्जंतेसु वसहेण तणपिंडगा कड्डिया, तओ खडत्ति दंतो पडिओ, नगरगोत्तिएहिं दिट्ठो गहिओ रायाए उवणीओ, वज्झो णीणिज्जइ, धणमित्तो सोऊण आगओ, रायाए पायवडिओ विन्नवेइ, जहा एए मए आणाविया, सो पुच्छिओ भणइ—अहमेयं न याणामि कोत्ति, एवं ते अवरोप्परं भणंति, रायाए सवहसाविया पुच्छिया, अभओ दिण्णो, परिकहियं, पूएत्ता विसज्जिया, एवं निरवलावेण होयव्वं आयरिएणं। वितिओ—एगेण एगस्स हत्थे भाणं वा किंचि पणामियं, अंतरा पडियं, तत्थ भाणियव्वं—मम दोसो इयरेणावि ममंति। निरवलावेत्ति गयं २। इयाणिं आव- ईसु दढधम्मत्तणं कायव्वं, एवं जोगा संगहिया भवंति, ताओ य आवइओ चत्तारि, तं०—दव्वावई ४, उदाहरणगाहा—

उज्जेणीए धणवसु अणगारे धम्मघोस चंपाए। अडवीए सत्थविब्भम वोसिरणं सिज्झणा चेव ॥ १२८१ ॥

---

१ मणिकां भलत्तकं कङ्कणानि च गृहीत्वाऽटवीं गतः, दन्ता लब्धाः पुञ्जः कृतः, तेन तृणपिण्डीनां मध्ये बद्धा शकटं भृत्वाऽऽनीताः, नगरे प्रविश्यमानेषु वृषभेण तृणपिण्ड्यः कृष्टाः, ततः खटदिति दन्तः पतितः, नगरगुप्तिकैर्दृष्टो गृहीतश्च, राज्ञ उपनीतः, वध्यो निष्काश्यते, धनमित्रः श्रुत्वाऽऽगतः, राज्ञः पादयोः पतितो विज्ञपयति—यथा मयैते आनायिताः, स पृष्टो भणति—अहमेनं न जानामि क इति, एवं तौ परस्परं भणतः, राज्ञा शपथशप्तौ पृष्टौ, अभयं दत्तं, परिकथितं, पूजयित्वा विसृष्टौ। एवं निरपलापेन भवितव्यं आचार्येण। द्वितीयः—एकेनैकस्य हस्ते भाजनं वा किञ्चिद्दत्तं, अन्तरा पतितं, तत्र भणितव्यं—मम दोषः, इतरेणापि ममेति। निरपलापमिति गतम् २। इदानीमापत्सु दृढधर्मता कर्त्तव्या, एवं योगाः संगृहीता भवन्ति, ताश्चापदश्चतस्रः, तद्यथा—द्रव्यापद् ४, उदाहरणगाथा—

अस्या व्याख्या—कथानकादवसेया, तच्चेदं—दंतपुरे णयरे दंतचक्को राया, सच्चवई देवी, तीसे दोहलो—कहं दंतमए पासाए अभिरमिज्जइ ?, रायाए पुच्छियं, दंतनिमित्तं घोसावियं रण्णा[1] जहा—उचियं मोल्लं देमि, जो न देइ तस्स राया सरीरनिग्गहं करेइ, तत्थेव णयरे धणमित्तो वाणियओ, तस्स दो भारियाओ, धणसिरी महंती पउमसिरी तु दहरिया पीययरी यत्ति, अण्णया सवत्तीणं भंडणं, धणसिरी भणइ—किं तुमं एवं गविया ? किं तुज्झ महाओ अहियं, जहा सच्चवईए तहा ते किं पासाओ कीरेज्जा ?, सा भणइ—जइ न कीरइ तो अहं नेवत्ति उवगरए ( वरए ) बारं बंधित्ता ठिया, वाणियओ आगओ पुच्छइ—कहिं पउमसिरी ?, दासीहिं कहियं, तत्थेव अइयओ, पसाएइ, न पसीयइत्ति, जइ नत्थि न जीवामि, तस्स मित्तो दढमित्तो नाम, सो आगओ, तेण पुच्छियं, सव्वं कहेइ, भणइ—कीरउ, मा इमाए मरंतीए तुमंपि मरिज्जासि, तुमंमि मरंते अहं, रायाए य घोसावियं, तो पच्छन्नं कायव्वं ताहे सो दढमित्तो पुलिंदगपाउग्गाणि

---

1 दन्तपुरे नगरे दन्तचक्रो राजा, सत्यवती देवी, तस्या दोहदः कथं दन्तमये प्रासादेऽभिरमे, राज्ञा पृष्टं, दन्तनिमित्तं घोषितं राज्ञा यथा उचितं मूल्यं ददामि, यो न दास्यति तस्य राजा शरीरनिग्रहं करोति, तत्रैव नगरे धनमित्रो वणिक्, तस्य द्वे भार्ये, धनश्रीर्महती पद्मश्रीस्तु लघ्वी प्रियतरा चेति, अन्यदा सपत्न्योर्भण्डनं, धनश्रीर्भणति—किं त्वमेवं गर्विता ? किं तव मत् अधिकं, यथा सत्यवत्यास्तव किं प्रासादः क्रियते ?, सा भणति—यदि न क्रियते तदाऽहं नैवेत्यपवरके द्वारं बद्ध्वा स्थिता, वणिगागतः पृच्छति—क्व पद्मश्रीः ?, दासीभिः कथितं, तत्रैवाभिगतः, प्रसादयति, न प्रसीदतीति, यदि नास्ति न जीवामि, तस्य मित्रं दृढमित्रो नाम, स आगतः, तेन पृष्टं, सर्वं कथयति, भणति—क्रियतां, माऽस्यां म्रियमाणायां त्वमपि मृथाः, त्वयि म्रियमाणेऽहं, राज्ञा च घोषितं, ततः प्रच्छन्नं कर्त्तव्यं, तदा स दृढमित्रः पुलिन्द्रप्रायोग्याणि

अट्टणेण फलहियमल्लो भणिओ—कहेहि पुत्ता ! जं ते दुक्खावियं, तेण कहियं, मक्खित्ताऽक्खेवेणं पुणण्णवीकयं, मच्छियस्सवि रण्णा संमद्दगा पेसिया, भणइ—अहं तस्स पिउपि ण बिभेमि, को सो वराओ ?, बितियदिवसे समजुज्झा, ततियदिवसे अंवियपहारो वइसाहं ठिओ मच्छिओ, अट्टणेण भणिओ फलिहित्ति, तेण फलहिग्गाहेण गहिओ सीसे, तं कुंडियनालगंपिव एगंते पडियं, सक्कारिओ गओ उज्जेणिं, पंचलक्खणाण भोगाण आभागी जाओ, इयरो मओ, एवं जहा पडागा तहा आराहणपडागा, जहा अट्टणो तहा आयरिओ, जहा मल्लो तहा साहू, पहारा अवराहा, जो ते गुरुणो आलोएइ सो निस्सल्लो निव्वाणपडागं तेलोक्करंगमज्झे हरइ, एवं आलोयणं प्रति योगसङ्ग्रहो भवति । एए सीस गुणा, निरवलावस्स जो अन्नस्स न कहेइ एरिसमेतेण पडिसेवियंति, एत्थ उदाहरणगाहा—

दंतपुरदन्तवक्के सच्चवदी दोहले य वणचरए । धणमित्त धणसिरी य पउमसिरी चेव दढमित्तो ॥ १२८० ॥

---

१ अट्टनेन कर्पासमल्लो भणितः—कथय पुत्र ! यत्ते दुःखितं, तेन कथितं, म्रक्षित्वा अक्षेपेण पुनर्नवीकृतं, मात्स्यिकायापि राज्ञा संमर्दकाः प्रेषिताः, भणति—अहं तस्य पितुरपि न बिभेमि, कः स वराकः, द्वितीयदिवसे समयुद्धौ तृतीयदिवसे महाराद्धौ वैशाखं स्थितो मात्स्यिकः, अट्टनेन भणितः—फलिहीति, तेन फलहिग्राहेण गृहीतः शीर्षे, तत् कुण्डिकानालमिवैकान्ते पतितं, सत्कारितो गत उज्जयिनीं, पञ्चलक्षणानां भोगानामाभागीजातः, इतरो मृतः, एवं यथा पताका तथाऽऽराधनापताका, यथाऽट्टनस्तथा आचार्यः, यथा मल्लस्तथा साधुः, प्रहारा अपराधाः, यस्तान् गुरूणामालोचयति स निश्शल्यो निर्वाणपताकां त्रैलोक्यरङ्गमध्ये हरति, एवमालोचनां प्रति योगसंग्रहो भवति । एते शिष्यगुणाः, निरपलापस्य—योऽन्यस्मै न कथयति—ईदृशमेतेन प्रतिसेवितमिति, अत्रोदाहरणगाथा ।

न्तितं योग्यो, यथा जातो यथाऽर्थकः । हितज्ञोऽपि तथा नूनं, गुणनिष्पन्ननामकः ॥ ३५५ ॥ ततो निवेदितास्तेन, सर्वे रत्नगुणागुणाः । ग्राहितश्च प्रयत्नेन, हितज्ञस्तदुपार्जनम् ॥ ३५६ ॥ ततश्चारूपदेशेन, हित्वा सर्वं कुतूहलम् । काचादिपरिहारेण, कुर्वन् सद्रत्नसङ्ग्रहम् ॥ ३५७ ॥ ततः प्रभृति संजातो, हितज्ञोऽपि विचक्षणः । स्वयं परीक्षकस्तेषां, रत्नानामर्जने रतः ॥ ३५८ ॥ अथ चारुर्गतः पार्श्वे, तस्य मूढस्य सादरम् । सोऽप्युक्तोऽहं प्रजिष्यामि, मित्र! किं वर्तते तव? ॥ ३५९ ॥ मूढः प्राह वयस्य! त्वं, किं गतेन करिष्यसि? । रमणीयमिदं द्वीपं, किं न पश्यसि सर्वतः? ॥ ३६० ॥ पद्मखण्डगृहोद्यानसरोवरविभूषितम् । विहारारामपुष्पाढ्यं, वनराजिविराजितम् ॥ ३६१ ॥ तदत्र सुचिरं तावन्मानयित्वा परं सुखम् । पश्चात्स्वस्थानगमनं, करिष्यामो यथेच्छया ॥ ३६२ ॥ भृतं मयाऽपि बोहित्थं, रत्नानां मित्र! वर्तते । ततस्तद्दर्शितं तेन, चारोर्बोहित्थमञ्जसा ॥ ३६३ ॥ अथाक्षशङ्खकोन्मिश्रकाचखण्डादिपूरितम् । तद्दृष्ट्वा चिन्तयत्येवं, स चारुश्चारुचेतनः ॥ ३६४ ॥ अहो वराको मूढोऽयं, मूढ एव न संशयः । ग्रस्तः कुतूहलेनोच्चैर्धूर्तलोकेन वञ्चितः ॥३६५॥ तथापि शिक्षयामीमं, यद्येष विनिवर्तते । एवं विचिन्त्य तेनोक्तं, चारुणा बुद्धिचारुणा ॥ ३६६ ॥ न युक्तं कौतुकं कर्तुमत्र मित्र! वनादिषु । आत्मवञ्चनमेतद्धि, रत्नवाणिज्यबाधकम् ॥ ३६७ ॥ वञ्चितश्च दृढं मित्र!, धूर्तलोकेन पापिना । अरत्नानि गृहीतानि, रत्नबुद्ध्या यतस्त्वया ॥ ३६८ ॥ इदं कचवरं सर्वं, तच्छीघ्रं संपरित्यज । सुरत्नानि गृहाण त्वं, तेषामेतच्च लक्षणम् ॥ ३६९ ॥ ततो यावत्किलाचष्टे, स चारू रत्नलक्षणम् । तावदुत्तेजितो मूढस्तं प्रतीदमभाषत ॥ ३७० ॥ नाहं यास्यामि गच्छ त्वं, प्रवृत्तो यत्र कुत्रचित् । वयस्य! एवमेव त्वं, यस्त्वमेवं प्रभाषसे ॥ ३७१ ॥ निराकरोषि त्वं तावदेकं मुत्कलचारिताम् । द्वितीयं मामकं रत्नसञ्चयं दूषयस्यलम् ॥ ३७२ ॥ प्रभास्वराणि यद्येवं, रत्नानि न भवन्ति ते । पर्याप्तमपरैस्तात!, तावकैर्मम रत्नकैः ॥ ३७३ ॥ ततश्चारुः पुनर्यावद्भापणे स्फुरिताधरः ।

प्रवृत्तस्तावदितरस्तं प्रतीदमवोचत ॥ ३७४ ॥ कृतं कृतं ममानेन, तावकीनेन मित्रक! । शिक्षणेन निजस्थानं, गच्छ शीघ्रं निराकुलः
॥ ३७५ ॥ तदाकर्ण्य निजे चित्ते, चारुणा परिचिन्तितम् । नैवास्य शिक्षणं कर्तुं, मूढस्य यत पार्यते ॥ ३७६ ॥ इतश्च—उपदेशं सदा
तस्य, चारोः कुर्वाणयोर्मुदा । ते भृते रत्नबोहित्थे, तयोर्योग्यहितज्ञयोः ॥ ३७७ ॥ ततश्चारुः परित्यज्य, तं मूढं कृतनिश्चयः । सार्धं
योग्यहितज्ञाभ्यां, गतः स्वस्थानमुच्चकैः ॥ ३७८ ॥ रत्नानां विनियोगं च, कुर्वाणास्तत्र ते त्रयः । अनन्तानन्दसन्दोहपूरिताः सुखमासते
॥ ३७९ ॥ मूढस्तु दुःखदारिद्र्यभाजनं समजायत । निष्कासितस्ततो द्वीपात्, केनचित्क्रुद्धभूभुजा ॥ ३८० ॥ प्रक्षिप्तः सागरे घोरे,
यादोभिः परिपूरिते । अदृष्टतलपर्यन्ते, दुरन्तावर्तभीषणे ॥ ३८१ ॥ तदिदं ते मयाऽऽख्यातं, सूरिप्रोक्तं कथानकम् । यत्तदा मम सं-
जातं, भद्र! वैराग्यकारणम् ॥ ३८२ ॥ ततो गृहीतभावार्थः प्रोत्फुल्लमुखपङ्कजः । सोऽकलङ्को मुनिं नत्वा, प्रवृत्तोऽन्यमुनिं प्रति ॥ ३८३ ॥
मयोक्तं—आख्याहि मित्र! भावार्थं, पृष्टे वैराग्यकारणे । असंबद्धं किमाख्यातं, मुनिनेदं कथानकम्? ॥ ३८४ ॥ अकलङ्केनोक्तं—
भद्र! घनवाहन नेदमसंबद्धमुदाहरणं, आकर्णय त्वमस्य भावार्थं मयोक्तं, एष दत्तावधानोऽस्मि, अकलङ्केनोक्तं—वसन्तपुरस्थानीयोऽ-
सांव्यवहारिको जीवराशिः वाणिजकाः पुनर्यथार्थनामानस्ततो निर्गताश्चतुर्विधा जीवाः, समुद्रः पुनरत्र जन्मजरामरणसलिलो मिथ्या-
दर्शनाविरतिगम्भीरो महाभीषणकषायपातालः सुदुर्लङ्घ्यमहामोहावर्तरौद्रो विचित्रदुःखौघदुष्टजलचरपूरितो रागद्वेषजवनपवनविक्षोभितः
संयोगवियोगवीचीनिचयचटुलः प्रबलमनोरथवेलाकुलोऽनवलोकितपरापरपारः संसारविस्तारो विज्ञेयः, रत्नद्वीपस्थानीयोऽयं मनुष्यभवो
मन्तव्यः काननादिकुतूहलं तु विषयाभिलाषो द्रष्टव्यः अक्षशङ्खकपर्दककाचशकलादिकल्पाः सर्वज्ञप्रणीतधर्मविपरीताः कुधर्मा बोद्धव्याः
धूर्तलोकः कुतीर्थिकवर्गो ज्ञातव्यः, बोहित्थस्थानीयानि पुनरत्र जीवस्वरूपाणि वर्तन्ते, स्वस्थानगमनं मोक्षावाप्तिर्मन्तव्या आत्मलाभरूप-

त्वात्तस्याः, यस्तु मूढस्योपरि क्रुद्धो नरेन्द्रः स स्वकर्मपरिणामो विज्ञेयः, समुद्रमध्यप्रक्षेपस्तु मूढस्यानन्तभवभ्रमणं द्रष्टव्यमिति । एवं च स्थिते भो भो घनवाहन!—सर्वः कथानकस्यास्य, भावार्थः सुपरिस्फुटः । तथापि ते प्रबोधाय, विशेषेणाभिधीयते ॥ ३८५ ॥ तत्र यथा तेन चारुणा निर्गत्य वसन्तपुराल्लङ्घयित्वा समुद्रं समासाद्य रत्नद्वीपं विज्ञातः कृत्रिमाकृत्रिमरत्नविशेषः न कृतं काननादिषु कौतुकं लक्षिता धूर्तलोकाः न गृहीतानि कृत्रिमरत्नानि कृतं विशिष्टरत्नग्रहणवाणिज्यं उपात्तः सुन्दररत्ननिचयः आवर्जिता विशिष्टलोकाः पूरितं बोहित्थं संजातः स्वार्थसाधक इति, तथा भद्र! भव्यतया सुन्दरतमा जीवा निष्क्रम्यासांव्यवहारिकजीवराशेरतीत्यानन्तं संसारविस्तारं संप्राप्य मनुष्यभावं लघुकर्मतया विजानन्ति हेयोपादेयविभागं चिन्तयन्ति च ते—"यथाऽतिदुर्लभमिदं मानुष्यमाकरो भावरत्नानां का-"रणं निर्वाणसुखस्य संप्राप्तमिदमधुनाऽस्माभिः समारूढा वयं महत्तरां कोटिं तत्र युक्तोऽस्माकमधुना विषादपि विषमतरो विपाकेषु विष-"यधनादिषु प्रतिबन्धः, समासादयन्ति च ते सर्वज्ञोपज्ञं धर्ममार्गं, ततो न विप्रलभ्यन्ते कुतीर्थिकैः न प्रवर्तन्ते कुधर्मग्रहणे कुर्वन्ति "साधुधर्माङ्गीकरणलक्षणं वाणिज्यं गृह्णन्ति क्षान्तिमार्दवार्जवमुक्तितपःसंयमसत्यशौचाकिञ्चनत्वब्रह्मचर्यसन्तोषप्रशमादिकं प्रतिक्षणं गुण-"रत्ननिचयं आवर्जयन्ति सद्गुरुसाधुसाधर्मिकजनं पूरयन्ति सद्गुणानामात्मानं संजायन्ते स्वकार्यनिष्पादका" इति १ । यथा च योग्येन तत्र रत्नद्वीपे विज्ञातं गुणदोषविचारणं कृतं किंचित्तद्ग्रहणार्थं वाणिज्यं केवलं संजातमस्य काननादिदर्शनव्यसनं तत्परायत्तेन गमितोऽनर्थको बहुः कालो मीलितानि कालेन भूयसा कियन्त्यपि रत्नकानि न विहितो विशिष्टरत्नसंचय इति, तथा भद्र! घनवाहन भव्यतया सुन्दरतरा जीवाः संप्राप्य मनुष्यजन्म लघुकर्मतया जानन्ति गुणागुणपरीक्षणं कुर्वन्ति सर्वज्ञदर्शनमवाप्य श्रावकोचितं कियदपि सद्गुणग्रहणवाणिज्यं केवलं दुर्जयत्वेन लोभस्य चटुलतयेन्द्रियग्रामस्य संजायते तेषां धनविषयादिषु ममत्वव्यसनं तत्परायत्ताश्च ते गमयन्ति

निरर्थकं भूयांसं कालं तथापि मीलयन्ति ते भूयसा कालेन श्रावकधर्मोचितानि कियन्त्यपि गुणरत्नकानि न विदधति साधुधर्मसाध्यं विशिष्टगुणरत्नसञ्चयमिति २। यथा च तेन हितज्ञेन प्राप्तेनापि रत्नद्वीपे विज्ञाय स्वयं रत्नपरीक्षणं धारिता परोपदेशयोग्यता कृतं विहारारामादिषु महत्तरं कौतुकं न विहितं सुरत्नमहणं न लक्षितास्ते वञ्चका धूर्तलोकाः गृहीतानि चिकिचिकायमानानि काचशकलादीनि जनिता तेषु सुन्दराणीति बुद्धिः वञ्चितश्चारूपदेशात्पूर्वमात्मेति, तथा भद्र घनवाहन! भव्यतया सुन्दरा जीवाः समासाद्य मनुष्यभावं मनाग्गुरुकर्मतया न विजानन्ति स्वयं कर्तुं धर्मगुणदोषपरीक्षणं धारयन्ति परोपदेशयोग्यतां कुर्वन्ति विषयधनादिषु महत्तरं प्रतिबन्धं न विदधति सर्वज्ञप्रणीतसद्धर्मोपार्जनं न लक्षयन्ति कुतीर्थिकवञ्चकतां गृह्णन्ति प्रशमदयादमादिसाररहितानि दम्भप्रधानतया बहिश्चिकिचिकायमानकृत्रिमरत्नतुल्यानि कुधर्मानुष्ठानानि जनयन्ति तेषु सुन्दराणीति बुद्धिं वञ्चयन्ति च सद्गुरूपदेशात्पूर्वमात्मानमिति ३। यथा च तेन मूढेन रत्नद्वीपगतेनापि न विहितं स्वयं रत्नगुणदोषपरीक्षणं नापि प्रतिपन्नं परोपदेशेन अनुशीलितं वनदेवकुलादिगोचरमत्यन्तकौतुकं विद्विष्टानि सत्यरत्नानि गृहीतानि काचशकलादीनि कृतस्तेषु सद्रत्नाभिनिवेशः मोपितो धूर्तलोकेन वञ्चितो नितान्तमात्मेति, तथा भद्र! घनवाहन लब्ध्वापि मनुष्यभवमभव्यतया दूरभव्यतया वाऽतिक्लिष्टतमा जीवाः गुरुतरकर्मभराक्रान्ततया न विदन्त्येव स्वयं कर्तुं धर्मगुणदोषपरीक्षणं नापि प्रतिपद्यन्ते परोपदेशेन अनुशीलयन्ति विषयधनादिषु गाढलौल्यं विद्विषन्ति प्रशमदयादीनि सद्भूतानुष्ठानानि गृह्णन्ति धर्मबुद्ध्या स्नानहोमयागादीनि जीवघातोपमर्दकारीणि कदनुष्ठानानि कुर्वन्ति तेषु तत्त्वाभिनिवेशं मोपयन्ति कुतीर्थिकैः तदेवं वञ्चयन्ति ते नितान्तमात्मानमिति ४। यथा च स चारुः पूरयित्वा बोहित्थं कृतकृत्यः स्वयं गन्तुकामः स्वस्थाने योग्यं प्रत्याह —यथाऽहं गमिष्यामि मित्र! किं वर्तते तवेति, योग्येनोक्तं—न पूर्यते ममाद्यापि बोहित्थं स्तोकान्येव मयोपार्जितानि रत्नानि, चारु-

स्वात्तस्याः, यस्तु मूढस्योपरि क्रुद्धो नरेन्द्रः स स्वकर्मपरिणामो विज्ञेयः, समुद्रमध्यप्रक्षेपस्तु मूढस्यानन्तभवभ्रमणं द्रष्टव्यमिति । एवं च
स्थिते भो भो घनवाहन!—सर्वः कथानकस्यास्य, भावार्थः सुपरिस्फुटः । तथापि ते प्रबोधाय, विशेषेणाभिधीयते ॥ ३८५ ॥ तत्र यथा
तेन चारुणा निर्गत्य वसन्तपुराल्लङ्घयित्वा समुद्रं समासाद्य रत्नद्वीपं विज्ञातः कृत्रिमाकृत्रिमरत्नविशेषः न कृतं काननादिषु कौतुकं उ-
क्षिता धूर्तलोकाः न गृहीतानि कृत्रिमरत्नानि कृतं विशिष्टरत्नग्रहणवाणिज्यं उपात्तः सुन्दररत्ननिचयः आवर्जिता विशिष्टलोकाः पूरितं
बोहित्थं संजातः स्वार्थसाधक इति, तथा भद्र! भव्यतया सुन्दरतमा जीवा निष्कम्यासांव्यवहारिकजीवराशेरतीत्यानन्तं संसारविस्तारं
संप्राप्य मनुष्यभावं लघुकर्मतया विजानन्ति हेयोपादेयविभागं चिन्तयन्ति च ते—"यथाऽतिदुर्लभमिदं मानुष्यमाकरो भावरत्नानां का-
"रणं निर्वाणसुखस्य संप्राप्तमिदमधुनाऽस्माभिः समारूढा वयं महत्तरां कोटिं तन्न युक्तोऽस्माकमधुना विषादपि विषमतरो विपाकेषु विष-
"यधनादिषु प्रतिबन्धः, समासादयन्ति च ते सर्वज्ञोपज्ञं धर्ममार्गं, ततो न विप्रलभ्यन्ते कुतीर्थिकैः न प्रवर्तन्ते कुधर्मग्रहणे कुर्वन्ति
"साधुधर्माङ्गीकरणलक्षणं वाणिज्यं गृह्णन्ति क्षान्तिमार्दवार्जवमुक्तितपःसंयमसत्यशौचाकिञ्चनत्वब्रह्मचर्यसन्तोषप्रशमादिकं प्रतिक्षणं गुण-
"रत्ननिचयं आवर्जयन्ति सद्गुरुसाधुसाधर्मिकजनं पूरयन्ति सद्गुणानामात्मानं संजायन्ते स्वकार्यनिष्पादका" इति १ । यथा च योग्येन
तत्र रत्नद्वीपे विज्ञातं गुणदोषविचारणं कृतं किंचिद्रत्नग्रहणार्थं वाणिज्यं केवलं संजातमस्य काननादिदर्शनव्यसनं तत्परायत्तेन गमितोऽन-
र्थको बहुः कालो मीलितानि कालेन भूयसा कियन्त्यपि रत्नकानि न विहितो विशिष्टरत्नसंचय इति, तथा भद्र! घनवाहन भव्यतया
सुन्दरतरा जीवाः संप्राप्य मनुष्यजन्म लघुकर्मतया जानन्ति गुणागुणपरीक्षणं कुर्वन्ति सर्वज्ञदर्शनमवाप्य श्रावकोचितं कियदपि सद्गुण-
ग्रहणवाणिज्यं केवलं दुर्जयत्वेन लोभस्य चटुलत्वेनेन्द्रियग्रामस्य संजायते तेषां धनविषयादिषु ममत्वव्यसनं तत्परायत्ताश्च ते गमयन्ति

"वार्ता अनादिजीववस्त्रमलक्षालनसलिलं तपो दायकं निःसङ्गादिसन्दोहानामनागतकर्मकचवरनिवारकः संयमो भावको भवभ्रमणभया-
"भावितभूरिभावहर्षाणां, तदेवमपि जानतां भवतां भो भद्राः! केयमविद्या कोऽयं मोहः केयमात्मवञ्चनता केयमात्मवैरिकता केन यूयं
"गृध्यथ विषयेषु मुह्यथ कलत्रेषु लुभ्यथ धनेषु स्निह्यथ स्वजनेषु हृष्यथ यौवनेषु तुष्यथ निजरूपेषु पुष्यथ प्रियसङ्गतेषु रुष्यथ हितोप-
"देशेषु दूष्यथ गुणेषु नश्यथ सन्मार्गोत्सत्स्वप्यसादरेषु सहायेषु प्रीयथ सांसारिकसुखेषु न पुनर्यूयमभ्यस्यथ ज्ञानं नानुशीलयथ दर्शनं
"नानुतिष्ठथ चारित्रं नाचरथ तपः न कुरुथ संयमं न संपादयथ सद्भूतगुणसम्भारभाजनमात्मानमिति, एवं च तिष्ठतां भवतां भो
"भद्रा! निरर्थकोऽयं मनुष्यभवो निष्फलमस्मादृशसन्निधानं निष्प्रयोजनो भवतां परिज्ञानाभिमानोऽकिंचित्करमिव भगवद्दर्शनासादनं, एवं
"हि स्वार्थभ्रंशः परमवशिष्यते, स च भवतामज्ञत्वमालक्षयति, न पुनश्चिरादपि विषयादिषु सन्तोषः, तन्न युक्तमेवमासितुं भवादृशां,
"अतो मुञ्चत विषयप्रतिबन्धं परिहरत स्वजनस्नेहादिकं विरहयत धनभवनममत्वव्यसनं परित्यजत निःशेषं सांसारिकमलजाम्बालं गृ-
"ह्णीत भागवतीं भावदीक्षां विधत्त सज्ज्ञानादिगुणगणसञ्चयं पूरयत तेनात्मानं भवत स्वार्थसाधका यावत्सन्निहिता भवतां वयं । अन्य-
"थाऽसदुपदेशाभावे सद्बुद्धिविकला यूयं स्वार्थभ्रष्टा एव सर्वथा भविष्यथेति" । तदिदं भगवतां सन्मुनीनामुपदेशवचनामृतमुपालम्भगर्भ-
मुपलभ्य ते योग्यकल्पा देशविरता नितरां लज्जन्ते स्वचरितेन न ददती वष्टोत्तराणि न कुर्वन्ति मनोदुष्प्रणिधानं, किं तर्हि?, प्रतिप-
द्यन्ते हितमिति तत्साधुवचनं आचरन्ति यथोक्तविधानेन स्वीकुर्वन्ति पारमेश्वरं महाव्रतं तिष्ठन्ति पूरयन्तो गुणरत्नैरात्मयानपात्रमिति
२ । यथा च स चारुर्गतो हितज्ञाभ्यर्णं विहितं स्वस्थानगमनार्थं तदामन्त्रणं ततो दर्शितं तस्मै हितज्ञेन स्वयमुपार्जितं तत्काचशकलादिकं
निवेदितं काननादिकौतुकसारमात्मचेष्टितं, तथा भद्र घनवाहन! भद्रकेभ्यो भव्यमिथ्यादृष्टिभ्यः संपूर्णगुणाः सुसाधवो यदत्र सद्धर्मैक-

णोक्तं—किं पुनरत्र कारणं?, ततो योग्येन कथितं तदुपार्जनविघ्नभूतमात्मनः काननादिकुतूहलं, तथा भद्र! घनवाहन चारुतुल्या भगवन्तो मुनयो भूत्वाऽस्मानं तपःसंयमप्रशमसन्तोपज्ञानदर्शनादीनां भावरत्नानां निष्ठितार्थाः स्वयं जिगमिषवो मोक्षलक्षणे स्वस्थाने योग्यरूपाणां देशविरतानां मोक्षगमनार्थमामन्त्रणमिव कुर्वाणाः कुर्वन्ति धर्मदेशनां, ते तु निवेदयन्त्यात्मनः स्तोकगुणत्वं, ततः साधवो ब्रुवते भो भद्रा! मनुष्यभावे स्वाधीनं सर्वेषां सद्गुणार्जनं तत्किं न संपूर्णगुणा जाता यूयं यथा वयं?, ततः कथयन्ति ते देशविरताः संपूर्णगुणोपार्जनविघ्नभूतमात्मनो धनविषयादिषु ममत्वव्यसनं, ततो यथा चारुणा योग्यं प्रत्युक्तं—यथा भद्र! न युक्तं ते प्राप्तस्य रत्नद्वीपे काननादिकुतूहलं कर्तुं वञ्चनमिदमात्मनो महाविघ्नः सुरत्नग्रहणस्य जानासि च त्वं सुरत्नानां सुखहेतुतां तथाप्यनादरमेवं तेषु कुर्वाणः किमात्मनो वैरिकायसे?, न च चिरेणापि ते कौतुकपरिपूर्तिस्तद्वरं स्वार्थे यतितमितरथा निरर्थकं रत्नद्वीपागमनं, ततो भद्र! मुञ्च वनादिकौतुकं कुरु मयि सन्निहिते सुरत्नोपार्जनमन्यथा स्वार्थभ्रष्टो भविष्यसि, ततोऽत्यन्तलज्जितो योग्यः प्रतिपन्नं चारुवचनमनुष्ठितं विधानेन संजातः सुरत्नानां बोहित्थभरणेन स्वार्थसाधक इति, तथा भद्र! घनवाहन मुनयोऽपि देशविरतानेवमाचक्षते, यथा "भो भद्रा! न "युक्तं युष्मादृशामवाप्ते मनुष्यभावे जानतां जिनवचनामृतरसं लक्षयतां भवनैर्गुण्यमाकलयतां कायकलिलमलाविलतां वेदयतां यौवनस्य "सन्ध्याभ्ररागभङ्गुरतां पश्यतां जीवितस्य धर्मोपतप्तशकुनिगलचञ्चलतां भावयतां स्वजनवर्गस्नेहादेरचिरद्युतिविलसितदृष्टनष्टतां कर्तुमी"दृशं धनविषयादिममत्वव्यसनं वञ्चनमिदमात्मनो महान्तरायो ज्ञानादिसाधनस्य जानन्ति च भद्राः यथा परिणामदारुणा विषयाः "कारणं चित्तविप्लवानां तरलहृदया योषितोऽभूमिः सद्भावसुखानां हेतुभूतमार्तरौद्रध्यानानां सुगतिमार्गप्रदीपो ज्ञानं जनकं मानसाह्लादानां कुयोनिगर्तातिपातहस्तावलम्बो दर्शनं सम्पादनमनन्तमनःप्रमोदानां सुक्षेमाक्षेपमोक्षनिक्षेपणं चारित्रं समर्पकं निरन्तरचित्तोत्स-

"वानां अनादिजीववस्त्रमलक्षालनसलिलं तपो दायकं निःसङ्गादिसन्दोहानामनागतकर्मकचवरनिवारकः संयमो भावको भवभ्रमणभया-
"भावितभूरिभावद्दर्पाणां, तदेवमपि जानतां भवतां भो भद्राः! केयमविद्या कोऽयं मोहः केयमात्मवञ्चनता केयमात्मवैरिकता केन यूयं
"गृध्यथ विषयेषु मुह्यथ कलत्रेषु लुभ्यथ धनेषु स्निह्यथ स्वजनेषु हृष्यथ यौवनेषु तुष्यथ निजरूपेषु पुष्यथ प्रियसङ्गतेषु रुष्यथ हितोप-
"देशेषु दूष्यथ गुणेषु नश्यथ सन्मार्गोत्सत्स्वप्यस्मादृशेषु सहायेषु भीयथ सांसारिकसुखेषु न पुनर्यूयमभ्यस्यथ ज्ञानं नानुशीलयथ दर्शनं
"नानुतिष्ठथ चारित्रं नाचरथ तपः न कुरुथ संयमं न संपादयथ सद्भूतगुणसम्भारभाजनमात्मानमिति, एवं च तिष्ठतां भवतां भो
"भद्रा! निरर्थकोऽयं मनुष्यभवो निष्फलमस्मादृशसन्निधानं निष्प्रयोजनो भवतां परिज्ञानाभिमानोऽकिंचित्करमिव भगवद्दर्शनासादनं, एवं
"हि स्वार्थभ्रंशः परमवशिष्यते, स च भवतामज्ञत्वमालक्षयति, न पुनश्चिरादपि विषयादिषु सन्तोषः, तन्न युक्तमेवमासितुं भवादृशां,
"अतो मुञ्चत विषयप्रतिबन्धं परिहरत स्वजनस्नेहादिकं विरहयत धनभवनममत्वव्यसनं परित्यजत निःशेषं सांसारिकमलजाम्बालं गृ-
"ह्णीत भागवतीं भावदीक्षां विधत्त सज्ज्ञानादिगुणगणसञ्चयं पूरयत तेनात्मानं भवत स्वार्थसाधका यावत्सन्निहिता भवतां वयं। अन्य-
"थाऽसदुपदेशाभावे सद्बुद्धिविकला यूयं स्वार्थभ्रष्टा एव सर्वथा भविष्यथेति"। तदिदं भगवतां सन्मुनीनामुपदेशवचनामृतमुपालम्भगर्भ-
मुपलभ्य ते योग्यकल्पा देशविरता नितरां लज्जन्ते स्वचरितेन न ददती वक्रोत्तराणि न कुर्वन्ति मनोदुष्प्रणिधानं, किं तर्हि?, प्रतिप-
द्यन्ते हितमिति तत्साधुवचनं आचरन्ति यथोक्तविधानेन स्वीकुर्वन्ति पारमेश्वरं महाव्रतं तिष्ठन्ति पूरयन्तो गुणरत्नैरात्मयानपात्रमिति
२। यथा च स चारुर्गतो हितज्ञाभ्यर्णं विहितं स्वस्थानगमनार्थं तदामन्त्रणं ततो दर्शितं तस्मै हितज्ञेन स्वयमुपार्जितं तत्काचशकलादिकं
निवेदितं काननादिकौतुकसारमात्मचेष्टितं, तथा भद्र घनवाहन! भद्रकेभ्यो भव्यमिथ्यादृष्टिभ्यः संपूर्णगुणाः सुसाधवो यदत्र सद्धर्मक-

धनायाभिमुखीभवन्ति तच्चारुणा हितज्ञसमीपगमनमभिधीयते, ततः कुर्वन्ति ते साधवस्तेषां भद्रकभव्यमिथ्यादृष्टीनां धर्मदेशनया मोक्षगमनं प्रत्यामन्त्रणं, तेऽपि च तेभ्यो दर्शयन्ति यथा वयमपि कुर्म एव धर्मं यतोऽनुतिष्ठामो नित्यस्नानं जुहुमोऽग्निहोत्रं दद्मस्तिलसमिधः प्रयच्छामो गोभूमिहिरण्यादीनि कारयामो वापीकूपतडागप्रभृतीनि परिणयामः कन्यका इत्यादिकं काचशकलादिदर्शनं, अन्यच्च—ते सुसाधुभ्यो निवेदयन्ति यथा—भो भट्टारकाः! सुखेन वयमास्महे यतो भक्षयामो मांसं पिबामो मद्यं आस्वादयामो विचित्रं सुरसं भोजनं रमयामो वरस्त्रियः परिदध्मः सुकुमारोज्ज्वलवसनानि मानयामः पञ्चसुगन्धिकोन्मिश्रं ताम्बूलं विलसामो विविधमाल्यविलेपनैः मीलयामो धननिचयं विचरामो यथेष्टचेष्टया न सहामो रिपुगन्धं उल्लासयामो निजकीर्तिं दर्शयामः स्वस्य देवरूपतां अनुभवामो मनुष्यभवसारमित्यादि, तदिदं काननादिकौतुकसारमात्मचेष्टितकथनं, ततो यथा तेन चारुणा कृपापरिगतहृदयेन हितज्ञं प्रत्यभिहितं यदुत—वयस्य! वञ्चितोऽसि त्वं पापिना धूर्तलोकेन मुग्धतया न जानीषे विधातुं रत्नगुणदोषपरीक्षां, अन्यच्च न युक्तं तव कर्तुं रत्नद्वीपमागतस्य काननादिकुतूहलं विप्रलम्भस्तवैष परमार्थेन, ततो हितज्ञेन निश्चित्य तदीयवत्सलतां लक्षितः परिज्ञानातिरेकः, ततो निवर्तितं काननादिकौतुकं, पृष्टश्च स चारू रत्नलक्षणं दर्शितः शिष्यभावः, चारुरपि रञ्जितस्तद्गुणैः निवेदितं रत्नलक्षणं प्राहितस्तदुपार्जनोपायं हितज्ञश्चारुणा संजातो विचक्षणः परीक्षको रत्नानां, ततः परिहृत्य कृत्रिमरत्नानि संपन्नः सत्यरत्नग्रहणोद्यत इति, तथा भद्र! घनवाहन सन्मुनयोऽपि करुणापरिगतमानसास्तानेवं वदतो भद्रकभव्यमिथ्यादृष्टीनित्थमाचक्षते, यदुत—भो भद्राः सत्यं धर्मशीला यूयं कुरुथ धर्ममात्मबुद्ध्या केवलं मुग्धतया न जानीथ तद्विशेषं वञ्चिता यूयं कुधर्मशास्त्रकारैः, न खलु हिंस्रकर्माणि धर्मसाधनानि भवन्ति, सर्वभूतदयाप्रधानो हि भगवान् विशुद्धधर्मः, तद्विरोधीनि च यागहोमादीनि, तन्न युक्तं धर्मबुद्ध्या भवतामधर्मासेवनं, यत्पुनर्मूढ यूयं यथा

—सुखेन वयं तिष्ठामो यतो भक्षयामो मांसमित्यादि, तदपि मुग्धताविजृम्भितमेव भवतां हास्यप्रायं विवेकिनां, यतः "सन्निहिताशेषापाये "काये वल्लात्सु विविधरोगेषु त्वरागामिन्यां जरायां मनःशरीरसन्तापकारिषु राजाद्युपद्रवेषु यायावरे यौवने सर्वव्यसनकारिणीषु स- "म्पत्सु मनोदाहिनीष्टवियोगे चित्तवैधुर्यकारिणि विप्रियसम्प्रयोगे सततमागामुके मरणे सर्वथाऽशुचिनिधाने शरीरे पुद्गलपरिणाममात्र- "निःसारेषु विषयेषु असंख्यदुःखलक्षपरिपूरिते जगति वर्तमानानामसुमतां कीदृशं नाम सुखं ?, परमार्थतो दुःखेऽपि सुखविपर्यास एष "भवतां, कर्मजनितः त्वेष विभ्रमः कारणमनन्तभवभ्रमणस्य, ततो भो भद्राः! कृच्छ्रेण प्राप्ते मनुष्यभवे सन्निहितायां धर्मसामग्र्यां "सत्यसदुपदेशे स्वाधीने गुणाधाने प्रकटे ज्ञानादिमोक्षमार्गे अनन्तानन्दरूपे जीवे तस्य स्वरूपलाभलक्षणे मोक्षे ज्ञानश्रद्धानुष्ठानमात्रायत्ते "तल्लाभे न युक्तं भवतामीदृशमात्मवञ्चनं कर्तुं" तदिदं सन्मुनिवचनमाकर्ण्य ते हितज्ञतुल्या भद्रकभव्यमिथ्यादृष्टयो जीवा निश्चिन्वन्ति तेषां भगवतां सन्मुनीनां वत्सलतां लक्षयन्ति परिज्ञानातिरेकं, ततो निवर्तयन्ति तदुपदेशेनावाप्तशुभवासनाविशेषाः सन्तो धनविषय- गृद्धिप्रतिबन्धं पृच्छन्ति च विशेषतो मुनिजनं ते धर्ममार्गं दर्शयन्ति शिष्यभावं रञ्जयति गुरूनपि विनयादिगुणैः, ततः प्रसन्नहृदया गुरवस्तेभ्यो गृहस्थावस्थोचितं साधुदशायोग्यं च प्रतिपादयन्ति धर्ममार्गं ग्राहयन्ति तदुपार्जनोपायं महायत्नेन यदुत—भो भद्राः! सद्धर्म- साधनयोग्यत्वमात्मनोऽभिलषद्भिर्भवद्भिस्तावदिदमादौ कर्तव्यं भवति यदुत "सेवनीया दयालुता न विधेयः परपरिभवः मोक्तव्या को- "पनता वर्जनीयो दुर्जनसंसर्गः विरहितव्याऽलीकवादिता अभ्यसनीयो गुणानुरागः न कार्या चौर्यबुद्धिः त्यजनीयो मिथ्याभिमानः "वारणीयः परदाराभिलाषः परिहर्तव्यो धनादिगर्वः विधेया दुःखितदुःखत्राणेच्छा पूजनीया गुरवः वन्दनीया देवसङ्घाः सन्माननीयः "परिजनः पूरणीयः प्रणयिलोकः अनुवर्तनीयो मित्रवर्गः न भाषणीयः परावर्णवादो ग्रहीतव्याः परगुणाः लज्जनीयं निजगुणविकत्थनेन

थनायाभिमुखीभवन्ति तथारुणा हितज्ञसमीपगमनमभिधीयते, ततः कुर्वन्ति ते साधवस्तेषां भद्रकभव्यमिथ्यादृष्टीनां धर्मदेशनया मोक्षगमनं प्रत्यामन्त्रणं, तेऽपि च तेभ्यो दर्शयन्ति यथा वयमपि कुर्म एव धर्मं यतोऽनुतिष्ठामो नित्यस्नानं जुहुमोऽग्निहोत्रं दद्मस्तिलसमिधः प्रयच्छामो गोभूमिहिरण्यादीनि कारयामो वापीकूपतडागप्रभृतीनि परिणयामः कन्यका इत्यादिकं काचशकलादिदर्शनं, अन्यच्च—ते सुसाधुभ्यो निवेदयन्ति यथा—भो भट्टारकाः! सुखेन वयमासहे यतो भक्षयामो मांसं पिबामो मद्यं आस्वादयामो विचित्रं सुरसं भोजनं रमयामो वरस्त्रियः परिदध्मः सुकुमारोज्ज्वलवसनानि मानयामः पञ्चसुगन्धिकोन्मिश्रं ताम्बूलं विलसामो विविधमाल्यविलेपनैः मीलयामो धननिचयं विचरामो यथेष्टचेष्टया न सहामो रिपुगन्धं उल्लासयामो निजकीर्तिं दर्शयामः स्वस्य देवरूपतां अनुभवामो मनुष्यभवसारमित्यादि, तदिदं काननादिकौतुकसारमात्मचेष्टितकथनं, ततो यथा तेन चारुणा कृपापरिगतहृदयेन हितज्ञं प्रत्यभिहितं यदुत—वयस्य! वञ्चितोऽसि त्वं पापिना धूर्तलोकेन मुग्धतया न जानीषे विधातुं रत्नगुणदोषपरीक्षां, अन्यथ न युक्तं तव कर्तुं रत्नद्वीपमागतस्य काननादिकुतूहलं विप्रलम्भस्त्वैष परमार्थेन, ततो हितज्ञेन निश्चित्य तदीयवत्सलतां लक्षितः परिज्ञानातिरेकः, ततो निवर्तितं काननादिकौतुकं, पृष्टश्च स चारू रत्नलक्षणं दर्शितः शिष्यभावः, चारुरपि रञ्जितस्तद्गुणैः निवेदितं रत्नलक्षणं माहितस्तदुपार्जनोपायं हितज्ञश्चारुणा संजातो विचक्षणः परीक्षको रत्नानां, ततः परिहृत्य कृत्रिमरत्नानि संपन्नः सत्यरत्नग्रहणोद्यत इति, तथा भद्र! घनवाहन सन्मुनयोऽपि करुणापरिगतमानसास्तानेवं वदतो भद्रकभव्यमिथ्यादृष्टीनित्थमाचक्षते, यदुत—भो भद्राः सत्यं धर्मशीला यूयं कुरुथ धर्ममात्मबुद्ध्या केवलं मुग्धतया न जानीथ तद्विशेषं वञ्चिता यूयं कुधर्मशास्त्रकारैः, न खलु हिंस्रकर्माणि धर्मसाधनानि भवन्ति, सर्वभूतदयाप्रधानो हि भगवान् विशुद्धधर्मः, तद्विरोधीनि च यागहोमादीनि, तन्न युक्तं धर्मबुद्ध्या भवतामधर्मासेवनं, यत्पुनर्ब्रूथ यूयं यथा

—सुखेन वयं तिष्ठामो यतो भक्षयामो मांसमित्यादि, तदपि मुग्धताविजृम्भितमेव भवतां हास्यप्रायं विवेकिनां, यतः "सन्निहिताशेषापाये "काये वल्गत्सु विविधरोगेषु त्वरागामिन्यां जरायां मनःशरीरसन्तापकारिषु राजाद्युपद्रवेषु यायावरे यौवने सर्वव्यसनकारिणीषु स- "म्पत्सु मनोदाहिनीष्टवियोगे चित्तवैधुर्यकारिणि विप्रियसम्प्रयोगे सततमागामुके मरणे सर्वथाऽशुचिनिधाने शरीरे पुद्गलपरिणाममात्र- "निःसारेषु विषयेषु असंख्यदुःखलक्षपरिपूरिते जगति वर्तमानानामसुमतां कीदृशं नाम सुखं ?, परमार्थतो दुःखेऽपि सुखविपर्यास एष "भवतां, कर्मजनितः खल्वेष विभ्रमः कारणमनन्तभवभ्रमणस्य, ततो भो भद्राः! कृच्छ्रेण प्राप्ते मनुष्यभवे सन्निहितायां धर्मसामग्र्यां "सत्यसदुपदेशे स्वाधीने गुणाधाने प्रकटे ज्ञानादिमोक्षमार्गे अनन्तानन्दरूपे जीवे तस्य स्वरूपलाभलक्षणे मोक्षे ज्ञानश्रद्धानुष्ठानमात्रायत्ते "तल्लाभे न युक्तं भवतामीदृशमात्मवञ्चनं कर्तुं" तदिदं सन्मुनिवचनमाकर्ण्य ते हितज्ञतुल्या भद्रकभव्यमिथ्यादृष्टयो जीवा निश्चिन्वन्ति तेषां भगवतां सन्मुनीनां वत्सलतां लक्षयन्ति परिज्ञानातिरेकं, ततो निवर्तयन्ति तदुपदेशेनावाप्तशुभवासनाविशेषाः सन्तो धनविषय- गृद्धिप्रतिबन्धं पृच्छन्ति च विशेषतो मुनिजनं ते धर्ममार्गं दर्शयन्ति शिष्यभावं रञ्जयति गुरूनपि विनयादिगुणैः, ततः प्रसन्नहृदया गुरवस्तेभ्यो गृहस्थावस्थोचितं साधुदशायोग्यं च प्रतिपादयन्ति धर्ममार्गं ग्राहयन्ति तदुपार्जनोपायं महायत्नेन यदुत—भो भद्राः! सद्धर्म- साधनयोग्यत्वमात्मनोऽभिलषद्भिर्भवद्भिस्तावदिदमादौ कर्तव्यं भवति यदुत "सेवनीया दयालुता न विधेयः परपरिभवः मोक्तव्या को- "पनता वर्जनीयो दुर्जनसंसर्गः विरहितव्याऽलीकवादिता अभ्यसनीयो गुणानुरागः न कार्या चौर्यबुद्धिः त्यजनीयो मिथ्याभिमानः "वारणीयः परदाराभिलाषः परिहर्तव्यो धनादिगर्वः विधेया दुःखितदुःखत्राणेच्छा पूजनीया गुरवः वन्दनीया देवसङ्घाः सन्माननीयः "परिजनः पूरणीयः प्रणयिलोकः अनुवर्तनीयो मित्रवर्गः न भाषणीयः परावर्णवादो ग्रहीतव्याः परगुणाः लज्जनीयं निजगुणविकत्थनेन

“सर्वव्यमणीयोऽपि सुकृतं यतितव्यं परार्थे संभाषणीयः प्रथमं विशिष्टलोकः अनुमोदनीयो धार्मिकजनः न विधेयं परमर्मोद्घट्टनं भवि-
“तव्यं सुवेषाचारैः”, ततो भविष्यति भवतां सर्वज्ञोपज्ञसद्धर्मानुष्ठानयोग्यता, तत्र च “गृहस्थैः सद्भिः परिहर्तव्योऽकल्याणमित्रयोगः
“सेवितव्यानि कल्याणमित्राणि न लङ्घनीयोचितस्थितिः अपेक्षितव्यो लोकमार्गः माननीया गुरुसंहतिः भवितव्यमेतत्तन्त्रैः प्रवर्तितव्यं
“दानादौ कर्तव्योदारपूजा भगवतां निरूपणीयः साधुविशेषः श्रोतव्यं विधिना धर्मशास्त्रं भावनीयं महायत्नेन अनुष्ठेयस्तदर्थो विधानेन
“अवलम्बनीयं धैर्यं पर्यालोचनीयाऽऽयतिः अवलोकनीयो मृत्युः भवितव्यं परलोकप्रधानैः सेवितव्यो गुरुजनः कर्तव्यं योगपट्टदर्शनं
“स्थापनीयं तद्रूपादि मानसे निरूपयितव्या धारणा परिहर्तव्यो विक्षेपमार्गः प्रयतितव्यं योगशुद्धौ कारयितव्यं भगवद्भुवनबिम्बादिकं
“लेखनीयं भुवनेशवचनं कर्तव्यो मङ्गलजपः प्रतिपत्तव्यं चतुःशरणं गर्हितव्यानि दुष्कृतानि अनुमोदयितव्यं कुशलं पूजनीया मन्त्रदेवताः
“श्रोतव्यानि सच्चेष्टितानि भावनीयमौदार्यं वर्तितव्यमुत्तमज्ञातेन” ततो भविष्यति भवतां साधुधर्मानुष्ठानभाजनता । ततः “कृतबहिर-
“न्तरङ्गसङ्गत्यागैः परदत्तभोजिभिर्भावमुनिभिः सद्भिर्भवद्भिरासेवनीया ग्रहणशिक्षा विधेया वस्तुतत्त्वजिज्ञासा मृगणीयः स्वपरतन्त्रवे-
“दिना परहितनिरतेन पराशयवेदिना यथार्थाभिमानेन गुरुणा सम्यक् सम्बन्धः प्रयोक्तव्यो गुरुविनयः अनुष्ठेया विधिपरता कर्तव्यो
“मण्डलीनिषद्याक्षादौ यत्नः अनुपालनीयो ज्येष्ठक्रमो भजनीयोचिताशनक्रिया हेयो विकथादिविक्षेपः शीलनीया भावसारमुपयोगप्रधा-
“नता शिक्षणीयोऽयं श्रवणविधिः आचरणीया बोधपरिणतिः यतितव्यं सम्यग्ज्ञानस्थिरतायां कार्यं मनःस्थैर्यं न विधेयो ज्ञानलवोत्सेकः
“नोपहसनीयास्तदज्ञाः परित्याज्यो विवादः परिहार्यमबुद्धबुद्धिभेदकरणं न विधेयः कुपात्रे शास्त्रनियोगः” ततो भविष्यति भवतां पात्रता
बहुमता गुणज्ञानां विमहवती शमश्रीः स्थाश्रयो भावसम्पदां, यतः संजनिष्यन्ते भवतामुपरि सप्रसादा गुरवः संप्रदापयिष्यन्ति सिद्धा-

न्तसाराणि प्रवर्धिष्यन्ते भवतां शुश्रूषाश्रवणग्रहणधारणोहापोहतत्त्वाभिनिवेशाः प्रज्ञागुणा इति । तथा "अनुशीलनीया भवद्भिरासेवना-
"शिक्षा समाचरणीया प्रत्युपेक्षणा भजनीया प्रमार्जना सात्म्यीभावमानेतव्या भिक्षाचर्या प्रतिक्रमणीयेर्यापथिका दातव्याऽऽलोचना
"शिक्षणीया निर्दोषभोजनता विधेया भाजनपरिकर्मणा अनुष्ठेयाऽऽगमिकी विचारचर्या निरीक्षणीयाः स्थण्डिलभूमयः कर्तव्यं समस्तो-
"पाधिविशुद्धमावश्यकं प्रवर्तितव्यं यथागमं कालग्रहणे आम्नातव्यः पञ्चविधः स्वाध्यायः तदेवमभ्यसनीया प्रतिदिनक्रिया पालनीयः पञ्च-
"विधोऽप्याचारः आसेवनीये चरणकरणे अङ्गाङ्गीभावमानेयोऽप्रमादः स्थातव्यमत्युग्रविहारितया" ततो भविष्यति भवतां मोक्षगमनप्र-
वणो गुणसन्दोहः, तदेवं ते भगवन्तः सन्मुनयो दर्शयन्ति तेभ्यः सद्गुणार्जनोपायं, ततस्ते तदुपदेशेन भद्रकभव्यमिथ्यादृष्टयः संजा-
यन्ते विचक्षणाः भवन्ति परीक्षका भावरत्नानां विरहयन्ति कुधर्मासेवनं रमन्ते सद्गुणोपादाने वदन्ति च—यथा भो भो भट्टारकाः !—
अपायहेतुभिर्भोगैर्धूर्ताकारैश्च तीर्थिकैः । एतावन्तं वयं कालं, वञ्चिता मोहदोषतः ॥ ३८६ ॥ अधुना बोधिता धन्यैर्भवद्भि-
रतिवत्सलैः । यथाऽऽदिष्टं करिष्यामो, नाथाः ! सर्वं पुरोदितम् ॥ ३८७ ॥ अथोपबृंहिता वाक्यैः, साधुभिस्ते मनोहरैः । यथोपदिष्टं
कुर्वाणा, जायन्ते स्वार्थसाधकाः ॥ ३८८ ॥ ३। यथा च स चारुर्गतो मूढसमीपं कृतं गमनार्थमामन्त्रणं, मूढेनोक्तं—वयस्य ! किं गतेन
करिष्यसि ? रमणीयतममिदं द्वीपं, तथाहि—पश्य पश्य भूषितमिदं पद्मखण्डैर्विराजितं गृहोद्यानैर्मण्डितं सरोवरैः कमनीयं विहारा-
रामैः स्पृहणीयं सुगन्धिपुष्पभरबन्धुराभिर्वनराजिभिरभिलषणीयं सुन्दरलोकयोगेन तदत्र मानयित्वा सुचिरं सुखं पश्चात्स्वस्थानगमनं
करिष्यामो, न च मे गमनं रोचते, भृतं च मयाऽपि बोहित्थं वर्तते, ततो दर्शितं तत्काचशकलादिपूरितं चारोः, अनेन संजाता चारोः
करुणा, दत्तस्तस्योपदेशो यथा—न युक्तं ते काननादिकौतुकं कुरत्नानि च त्वया गृहीतानि रत्नबुद्ध्या तत्परित्यज मित्रामूनि गृहाण

"सर्तव्यमणीयोऽपि सुकृतं यतितव्यं परार्थे संभाषणीयः प्रथमं विशिष्टलोकः अनुमोदनीयो धार्मिकजनः न विधेयं परमर्मोद्घट्टनं भवि-
"तव्यं सुवेषाचारैः", ततो भविष्यति भवतां सर्वज्ञोपज्ञसद्धर्मानुष्ठानयोग्यता, तत्र च "गृहस्थैः सद्भिः परिहर्तव्योऽकल्याणमित्रयोगः
"सेवितव्यानि कल्याणमित्राणि न लङ्घनीयोचितस्थितिः अपेक्षितव्यो लोकमार्गः माननीया गुरुसंहतिः भवितव्यमेतत्तन्त्रैः प्रवर्तितव्यं
"दानादौ कर्तव्योदारपूजा भगवतां निरूपणीयः साधुविशेषः श्रोतव्यं विधिना धर्मशास्त्रं भावनीयं महायत्नेन अनुष्ठेयस्तदर्थो विधानेन
"अवलम्बनीयं धैर्यं पर्यालोचनीयाऽऽयतिः अवलोकनीयो मृत्युः भवितव्यं परलोकप्रधानैः सेवितव्यो गुरुजनः कर्तव्यं योगपट्टदर्शनं
"स्थापनीयं तद्रूपादि मानसे निरूपयितव्या धारणा परिहर्तव्यो विक्षेपमार्गः प्रयतितव्यं योगशुद्धौ कारयितव्यं भगवद्भुवनबिम्बादिकं
"लेखनीयं भुवनेशवचनं कर्तव्यो मङ्गलजपः प्रतिपत्तव्यं चतुःशरणं गर्हितव्यानि दुष्कृतानि अनुमोदयितव्यं कुशलं पूजनीया मन्त्रदेवताः
"श्रोतव्यानि सच्चेष्टितानि भावनीयमौदार्यं वर्तितव्यमुत्तमज्ञातेन" ततो भविष्यति भवतां साधुधर्मानुष्ठानभाजनता । ततः "कृतबहिर-
"न्तरङ्गसङ्गत्यागैः परदत्तभोजिभिर्भावमुनिभिः सद्भिर्भवद्भिरासेवनीया ग्रहणशिक्षा विधेया वस्तुतत्त्वजिज्ञासा मृगणीयः स्वपरतत्त्ववे-
"दिना परहितनिरतेन पराशयवेदिना यथार्थाभिमानेन गुरुणा सम्यक् सम्बन्धः प्रयोक्तव्यो गुरुविनयः अनुप्रेया विधिपरता कर्तव्यो
"मण्डलीनिषद्याक्षादौ यत्नः अनुपालनीयो ज्येष्ठक्रमो भजनीयोचिताशनक्रिया हेयो विकथादिविक्षेपः शीलनीया भावसारमुपयोगप्रधा-
"नता शिक्षणीयोऽयं श्रवणविधिः आचरणीया बोधपरिणतिः यतितव्यं सम्यग्ज्ञानस्थिरतायां कार्यं मनःस्थैर्यं न विधेयो ज्ञानलवोत्सेकः
"नोपहसनीयास्तदज्ञाः परित्याज्यो विवादः परिहार्यमबुद्धबुद्धिभेदकरणं न विधेयः कुपात्रे शास्त्रनियोगः" ततो भविष्यति भवतां पात्रता
बहुमता गुणज्ञानां विग्रहवती शमश्रीः स्थाश्रयो भावसम्पदां, ततः संजनिष्यन्ते भवतामुपरि सप्रसादा गुरवः संप्रदापयिष्यन्ति सिद्धा-

न्तसाराणि प्रवर्धिष्यन्ते भवतां शुश्रूषाश्रवणग्रहणधारणोहापोहतत्त्वाभिनिवेशाः प्रज्ञागुणा इति । तथा "अनुशीलनीया भवद्भिरासेवना- "शिक्षा समाचरणीया प्रत्युपेक्षणा भजनीया प्रमार्जना सात्मीभावमानेतव्या भिक्षाचर्या प्रतिक्रमणीयेर्यापथिका दातव्याऽऽलोचना "शिक्षणीया निर्दोषभोजनता विधेया भाजनपरिकर्मणा अनुष्ठेयाऽऽगमिकी विचारचर्या निरीक्षणीयाः स्थण्डिलभूमयः कर्तव्यं समस्तो- "पाधिविशुद्धमावश्यकं प्रवर्तितव्यं यथागमं कालग्रहणे आम्नातव्यः पञ्चविधः स्वाध्यायः तदेवमभ्यसनीया प्रतिदिनक्रिया पालनीयः पञ्च- "विधोऽप्याचारः आसेवनीये चरणकरणे अङ्गाङ्गीभावमानेयोऽप्रमादः स्थातव्यमत्युग्रविहारितया" ततो भविष्यति भवतां मोक्षगमनप्र- वणो गुणसन्दोहः, तदेवं ते भगवन्तः सन्मुनयो दर्शयन्ति तेभ्यः सद्गुणार्जनोपायं, ततस्ते तदुपदेशेन भद्रकभव्यमिथ्यादृष्टयः संजा- यन्ते विचक्षणाः भवन्ति परीक्षका भावरत्नानां विरहयन्ति कुधर्मासेवनं रमन्ते सद्गुणोपादाने वदन्ति च—यथा भो भो भट्टारकाः !— अपायहेतुभिर्भोगैर्धूर्ताकारैश्च तीर्थिकैः । एतावन्तं वयं कालं, वञ्चिता मोहदोषतः ॥ ३८६ ॥ अधुना बोधिता धन्यैर्भवद्भि- रतिवत्सलैः । यथाऽऽदिष्टं करिष्यामो, नाथाः! सर्वं पुरोदितम् ॥ ३८७ ॥ अथोपबृंहिता वाक्यैः, साधुभिस्ते मनोहरैः । यथोपदिष्टं कुर्वाणा, जायन्ते स्वार्थसाधकाः ॥ ३८८ ॥ ३। यथा च स चारुर्गतो मूढसमीपं कृतं गमनार्थमामन्त्रणं, मूढेनोक्तं—वयस्य! किं गतेन करिष्यसि ? रमणीयतममिदं द्वीपं, तथाहि—पश्य पश्य भूषितमिदं पद्मखण्डैर्विराजितं गृहोद्यानैर्मण्डितं सरोवरैः कमनीयं विहारा- रामैः स्पृहणीयं सुगन्धिपुष्पभरबन्धुराभिर्वनराजिभिरभिलषणीयं सुन्दरलोकयोगेन तदत्र मानयित्वा सुचिरं सुखं पश्चात्स्वस्थानगमनं करिष्यामो, न च मे गमनं रोचते, भृतं च मयाऽपि बोहित्थं वर्तते, ततो दर्शितं तत्काचशकलादिपूरितं चारोः, अनेन संजाता चारोः करुणा, दत्तस्तस्योपदेशो यथा—न युक्तं ते काननादिकौतुकं कुरत्नानि च त्वया गृहीतानि रत्नबुद्ध्या तत्परित्यज मित्रामूनि गृहाण

"सर्वत्र्यमणीयोऽपि सुकृतं यतितव्यं परार्थे संभापणीयः प्रथमं विशिष्टलोकः अनुमोदनीयो धार्मिकजनः न विधेयं परमर्मोद्घट्टनं भवि-
"तव्यं सुवेपाचारैः", ततो भविष्यति भवतां सर्वज्ञोपज्ञसद्धर्मानुष्ठानयोग्यता, तत्र च "गृहस्थैः सद्भिः परिहर्तव्योऽकल्याणमित्रयोगः
"सेवितव्यानि कल्याणमित्राणि न लङ्घनीयोचितस्थितिः अपेक्षितव्यो लोकमार्गः माननीया गुरुसंहतिः भवितव्यमेतत्तन्त्रैः प्रवर्तितव्यं
"दानादौ कर्तव्योदारपूजा भगवतां निरूपणीयः साधुविशेषः श्रोतव्यं विधिना धर्मशास्त्रं भावनीयं महायत्नेन अनुष्ठेयस्तदर्थो विधानेन
"अवलम्बनीयं धैर्यं पर्यालोचनीयाऽऽयतिः अवलोकनीयो मृत्युः भवितव्यं परलोकप्रधानैः सेवितव्यो गुरुजनः कर्तव्यं योगपट्टदर्शनं
"स्थापनीयं तद्रूपादि मानसे निरूपयितव्या धारणा परिहर्तव्यो विक्षेपमार्गः प्रयतितव्यं योगशुद्धौ कारयितव्यं भगवद्भुवनविम्बादिकं
"लेखनीयं भुवनेशवचनं कर्तव्यो मङ्गलजपः प्रतिपत्तव्यं चतुःशरणं गर्हितव्यानि दुष्कृतानि अनुमोदयितव्यं कुशलं पूजनीया मन्त्रदेवताः
"श्रोतव्यानि सच्चेष्टितानि भावनीयमौदार्यं वर्तितव्यमुत्तमज्ञातेन" ततो भविष्यति भवतां साधुधर्मानुष्ठानभाजनता । ततः "कृतबहिर-
"न्तरङ्गसङ्गत्यागैः परदत्तभोजिभिर्भावमुनिभिः सद्भिर्भवद्भिरासेवनीया ग्रहणशिक्षा विधेया वस्तुतत्त्वजिज्ञासा मृगणीयः स्वपरतत्त्ववे-
"दिना परहितनिरतेन पराशयवेदिना यथार्थाभिमानेन गुरुणा सम्यक् सम्बन्धः प्रयोक्तव्यो गुरुविनयः अनुष्ठेया विधिपरता कर्तव्यो
"मण्डलीनिपद्याक्षादौ यत्नः अनुपालनीयो ज्येष्ठक्रमो भजनीयोचिताशनक्रिया हेयो विकथादिविक्षेपः शीलनीया भावसारमुपयोगप्रधा-
"नता शिक्षणीयोऽयं श्रवणविधिः आचरणीया वोधपरिणतिः यतितव्यं सम्यग्ज्ञानस्थिरतायां कार्यं मनःस्थैर्यं न विधेयो ज्ञानद्युत्सेकः
"नोपहसनीयास्तदज्ञाः परित्याज्यो विवादः परिहार्यमबुद्धबुद्धिभेदकरणं न विधेयः कुपात्रे शास्त्रनियोगः" ततो भविष्यति भवतां पात्रता
बहुमता गुणज्ञानां विग्रहवती शमश्रीः स्थाश्रयो भावसम्पदां, ततः संजनिष्यन्ते भवतामुपरि सप्रसादा गुरवः संप्रदापयिष्यन्ति सिद्धा-

न्तसाराणि प्रवर्धिष्यन्ते भवतां शुश्रूषाश्रवणग्रहणधारणोहापोहतत्त्वाभिनिवेशाः प्रज्ञागुणा इति । तथा "अनुशीलनीया भवद्भिरासेवना-
"शिक्षा समाचरणीया प्रत्युपेक्षणा भजनीया प्रमार्जना सात्म्यीभावमानेतव्या भिक्षाचर्या प्रतिक्रमणीयेर्यापथिका दातव्याऽऽलोचना
"शिक्षणीया निर्दोषभोजनता विधेया भाजनपरिकर्मणा अनुष्ठेयाऽऽगमिकी विचारचर्या निरीक्षणीयाः स्थण्डिलभूमयः कर्तव्यं समस्तो-
"पाधिविशुद्धमावश्यकं प्रवर्तितव्यं यथागमं कालग्रहणे आम्नातव्यः पञ्चविधः स्वाध्यायः तदेवमभ्यसनीया प्रतिदिनक्रिया पालनीयः पञ्च-
"विधोऽप्याचारः आसेवनीये चरणकरणे अङ्गाङ्गीभावमानेयोऽप्रमादः स्थातव्यमत्युग्रविहारितया" ततो भविष्यति भवतां मोक्षगमनप्र-
वणो गुणसन्दोहः, तदेवं ते भगवन्तः सन्मुनयो दर्शयन्ति तेभ्यः सद्गुणार्जनोपायं, ततस्ते तदुपदेशेन भद्रकभव्यमिथ्यादृष्टयः संजा-
यन्ते विचक्षणाः भवन्ति परीक्षका भावरत्नानां विरहयन्ति कुधर्मासेवनं रमन्ते सद्गुणोपादाने वदन्ति च—यथा भो भो भट्टारकाः !—
अपायहेतुभिर्भोगैर्धूर्ताकारैश्च तीर्थिकैः । एतावन्तं वयं कालं, वञ्चिता मोहदोषतः ॥ ३८६ ॥ अधुना बोधिता धन्यैर्भवद्भि-
रतिवत्सलैः । यथाऽऽदिष्टं करिष्यामो, नाथाः ! सर्वं पुरोदितम् ॥ ३८७ ॥ अथोपबृंहिता वाक्यैः, साधुभिस्ते मनोहरैः । यथोपदिष्टं
कुर्वाणा, जायन्ते स्वार्थसाधकाः ॥ ३८८ ॥ ३। यथा च स चारुर्गतो मूढसमीपं कृतं गमनार्थमामन्त्रणं, मूढेनोक्तं—वयस्य ! किं गतेन
करिष्यसि ? रमणीयतममिदं द्वीपं, तथाहि—पश्य पश्य भूषितमिदं पद्मखण्डैर्विराजितं गृहोद्यानैर्मण्डितं सरोवरैः कमनीयं विहारा-
रामैः स्पृहणीयं सुगन्धिपुष्पभरबन्धुराभिर्वनराजिभिरभिलषणीयं सुन्दरलोकयोगेन तदत्र मानयित्वा सुचिरं सुखं पश्चात्स्वस्थानगमनं
करिष्यामो, न च मे गमनं रोचते, भृतं च मयाऽपि बोहित्थं वर्तते, ततो दर्शितं तत्काचशकलादिपूरितं चारोः, अनेन संजाता चारोः
करुणा, दत्तस्तस्योपदेशो यथा—न युक्तं ते काननादिकौतुकं कुरत्नानि च त्वया गृहीतानि रत्नबुद्ध्या तत्परित्यज मित्रामूनि गृहाण

सुरत्नानि तेषां चेदं लक्षणं, ततः मद्विष्टो मूढः प्राह च—नाहं यास्यामि गच्छ त्वं यत्र प्रवृत्तोऽसि, मित्रमेव न भवसि त्वं मे यस्त्वं मामकीनानि भास्वररत्नानि दूषयसि अलं मे तावकरत्नैः पुनः कृपयोपदेशदानोद्यतो निराकृतश्चारुः, अनेन संजातश्चारोरप्रज्ञापनीयोऽयमिति निश्चयः, तथा भद्र! धनवाहन चारुकल्पा भगवन्तो मुनयो मूढस्थानीयेभ्यो दूरभव्येभ्योऽभव्येभ्यो वा यदा धर्मोपदेशार्थमभिमुखीभवन्ति तदा तेषां तत्तत्समीपगमनमभिधीयते, ततः कुर्वन्ति ते सद्धर्मदेशनया मोक्षगमनं प्रति सद्दामन्त्रणं, ततस्ते मूढकल्पा जन्तवः खल्वेवमाचक्षीरन्—यदुत भो भोः श्रमणकाः! किं तेन यौष्माकीणेन मोक्षेण नः प्रयोजनं?, भवतामप्यलमेव तत्र गमनेन, तथाहि—न तत्र खाद्यं नो पेयं, न विलासा न भूतयः। न दिव्यः प्रियसंयोगो, न कान्ताः कमलेक्षणाः ॥ ३८९ ॥ न भाषणं सविश्रम्भं, न गीतं नापि नर्तनम्। न हास्यं हन्त यौष्माकः, स मोक्षो ननु बन्धनम् ॥ ३९० ॥ अत्यन्तरमणीयोऽयमस्माकं प्रतिभासते। सदा संसारविस्तारश्चित्ताह्लादविधायकः ॥ ३९१ ॥ यतोऽत्र सन्ति संसारे, खाद्यं पेयं विभूतयः। विलासा भूषणं नार्यः, कामदाः पद्मलोचनाः ॥ ३९२ ॥ यथेष्टचेष्टाचारित्वं, गीतं नृत्यं विलेपनम्। विद्यते सर्वमेवात्र, संपूर्णं सुखसाधनम् ॥ ३९३ ॥ अतो विमुच्य संसारं, सुखसम्भारपूरितम्। भो भोः श्रमणका! यूयं, न मोक्षं गन्तुमर्हथ ॥ ३९४ ॥ तदलं मोक्षवादेन, संसारे सुन्दरा स्थितिः। मानयित्वा सुखं दिव्यं, पश्चान्मोक्षे गमिष्यथ ॥ ३९५ ॥ यश्च सद्धर्मवादोऽयं, भवतां मनसि स्थितः। अस्माकमपि सोऽस्त्येव, किं यूयं धर्मगर्विताः? ॥ ३९६ ॥ तथाहि—भूरिभिर्महिषैश्छागैः, शूकरैश्च निपातितैः। कुर्मेहे चण्डिकादीनां, वयं रुधिरतर्पणम् ॥ ३९७ ॥ गोमेधमश्वमेधं च, नरमेधं तथाऽजकैः। कुर्मो यागं चतुर्भेदं, भूतसङ्घातमर्दनम् ॥ ३९८ ॥ कुयोनिवर्तिनः सत्त्वान्, निःशेषान् दुःखपीडितान्। हत्वा हत्वा वयं दुःखान्मोचयामः कृपापराः ॥ ३९९ ॥ पापर्द्ध्यां जीवसङ्घातं, मारयित्वा दिने दिने। मांसावारितसत्रं च,

प्रयच्छामो यथेच्छया ॥ ४०० ॥ इत्येवमादिभिर्धर्मैः, कृतकृत्यतया वयम् । भावत्कस्यास्य धर्मस्य, न तप्तिं बत कुर्महे ॥ ४०१ ॥ त-
दिदं मूढकल्पानामभव्यानां प्रभाषितम् । आकर्ण्य मुनयो धीरा, जायन्ते करुणापराः ॥ ४०२ ॥ ततस्ते तत्प्रबोधार्थमित्थमाचक्षते
तदा । भो भद्रा! नैव युक्तोऽयं, भवतां भवविभ्रमः ॥ ४०३ ॥ "एते हि भोगा नागानां, भोगा इव सुदारुणाः । पर्यन्तकटुकाः पा-
"पास्तीव्रसंक्लेशवर्धनाः ॥ ४०४ ॥ नार्योऽनार्याः कृताकार्याः, सर्वमायाकरण्डिकाः । विलासनृत्तसङ्गीतविब्बोकाद्या विडम्बनाः ॥४०५॥
"मोक्षस्तु भद्राः सततमनन्तानन्दसुन्दरः । जीवस्यात्मव्यवस्थानं, निःशेषक्लेशवर्जितः ॥ ४०६ ॥ मनुष्यभवमासाद्य, तन्न युक्तं भवा-
"दृशाम् । खाद्यपेयविलासादिकौतुकेनात्मवञ्चनम् ॥ ४०७ ॥ एतेषु सक्ता भोगेषु, कतिचिद्दिनभाविषु । मा मोक्षमार्गमुत्सृज्य, गच्छ-
"तानन्तके भवे ॥ ४०८ ॥ धर्मानुष्ठानबुद्ध्या च, यदिदं मारणादिकम् । यूयं कुरुथ तत्पापं, सर्वं संसारवर्धनम् ॥ ४०९ ॥ कुशास्त्र-
"कारमोहेन, मा कुरुध्वमथेदृशम् । अहिंसाद्यात्मकं धर्मं, कुरुध्वं दोषसूदनम् ॥ ४१० ॥" अथेदृशं मुनीनां ते, वाक्यमाकर्ण्य पेशलम् ।
मूढकल्पा जनास्तूर्णं, प्रद्वेषं यान्ति पापिनः ॥ ४११ ॥ वदन्ति च ततो रुष्टा, भो भोः श्रमणका! वयम् । शिक्षणीया न युष्माभिर्यात
यात यथाऽऽगताः ॥ ४१२ ॥ भोगान्निन्दथ पापिष्ठा, धर्मं चास्मन्निषेवितम् । ततो नो वैरिका यूयं, नेष्यामोऽन्तकमन्दिरम् ॥ ४१३ ॥
ईदृशोऽपीह सद्धर्मो, यद्ययं वो न रोचते । ततोऽलं युष्मदीयेन, धर्मेण पुरुषाधमाः! ॥ ४१४ ॥ निवेदयत सद्धर्मं, निजेभ्यः श्रमणा-
धमाः । आत्मीयजनकेभ्यो भो, न त्वस्माकं प्रयोजनम् ॥ ४१५ ॥ तदिदं मूढजन्तूनां, वाक्यमाकर्ण्य साधवः । ब्रूयुः करुणया याव-
द्भूयो धर्मस्य लक्षणम् ॥ ४१६ ॥ तावत्ते नितरां क्रुद्धा, दष्टौष्ठा रक्तलोचनाः । गाढप्रहारदानादौ, प्रवर्तन्ते न संशयः ॥ ४१७ ॥ तत-
स्तत्तादृशं वीक्ष्य, मुनयो मूढचेष्टितम् । निश्चिन्वन्ति निजे चित्ते, नैते साध्याः कथंचन ॥ ४१८ ॥ ततस्ते साधवस्तेषामुपेक्षां कुर्वते

सुरत्नानि तेषां चेदं लक्षणं, ततः प्रद्विष्टो मूढः प्राह च—नाहं यास्यामि गच्छ त्वं यत्र प्रवृत्तोऽसि, मित्रमेव न भवसि त्वं मे यस्त्वं मामकीनानि भास्वररत्नानि दूषयसि अलं मे तावकरत्नैः पुनः कृपयोपदेशदानोद्यतो निराकृतश्चारुः, अनेन संजातश्चारोरप्रज्ञापनीयोऽयमिति निश्चयः, तथा भद्र! घनवाहन चारुकल्पा भगवन्तो मुनयो मूढस्थानीयेभ्यो दूरभव्येभ्योऽभव्येभ्यो वा यदा धर्मोपदेशार्थमभिमुखीभवन्ति तदा तेषां तत्तत्समीपगमनमभिधीयते, ततः कुर्वन्ति ते सद्धर्मदेशनया मोक्षगमनं प्रति तदामन्त्रणं, ततस्ते मूढकल्पा जन्तवः खल्वेवमाचक्षीरन्—यदुत भो भोः श्रमणकाः! किं तेन यौष्माकीणेन मोक्षेण नः प्रयोजनं?, भवतामप्यलमेव तत्र गमनेन, तथाहि—न तत्र खाद्यं नो पेयं, न विलासा न भूतयः। न दिव्यः प्रियसंयोगो, न कान्ताः कमलेक्षणाः ॥ ३८९ ॥ न भाषणं सविश्रम्भं, न गीतं नापि नर्तनम्। न हास्यं हन्त यौष्माकः, स मोक्षो ननु बन्धनम् ॥ ३९० ॥ अत्यन्तरमणीयोऽयमस्माकं प्रतिभासते। सदा संसारविस्तारश्चित्ताह्लादविधायकः ॥ ३९१ ॥ यतोऽत्र सन्ति संसारे, खाद्यं पेयं विभूतयः। विलासा भूषणं नार्यः, कामदाः पद्मलोचनाः ॥ ३९२ ॥ यथेष्टचेष्टाचारित्वं, गीतं नृत्यं विलेपनम्। विद्यते सर्वमेवात्र, संपूर्णं सुखसाधनम् ॥ ३९३ ॥ अतो विमुच्य संसारं, सुखसम्भारपूरितम्। भो भोः श्रमणका! यूयं, न मोक्षं गन्तुमर्हथ ॥ ३९४ ॥ तदलं मोक्षवादेन, संसारे सुन्दरा स्थितिः। मानयित्वा सुखं दिव्यं, पश्चान्मोक्षे गमिष्यथ ॥ ३९५ ॥ यश्च सद्धर्मवादोऽयं, भवतां मनसि स्थितः। अस्माकमपि सोऽस्त्येव, किं यूयं धर्मगर्विताः? ॥ ३९६ ॥ तथाहि—भूरिभिर्महिषैश्छागैः, शूकरैश्च निपातितैः। कुर्महे चण्डिकादीनां, वयं रुधिरतर्पणम् ॥३९७॥ गोमेधमश्वमेधं च, नरमेधं तथाऽऽजकैः। कुर्मो यागं चतुर्भेदं, भूतसङ्घातमर्दनम् ॥ ३९८ ॥ कुयोनिवर्तिनः सत्त्वान्, निःशेषान् दुःखपीडितान्। हत्वा हत्वा वयं दुःखान्मोचयामः कृपापराः ॥ ३९९ ॥ पापर्ध्या जीवसङ्घातं, मारयित्वा दिने दिने। मांसावारितसत्रं च,

प्रयच्छामो यथेच्छया ॥ ४०० ॥ इत्येवमादिभिर्धर्मैः, कृतकृत्यतया वयम् । भावत्कस्यास्य धर्मस्य, न तप्तिं बत कुर्महे ॥ ४०१ ॥ त-
दिदं मूढकल्पानामभव्यानां प्रभाषितम् । आकर्ण्य मुनयो धीरा, जायन्ते करुणापराः ॥ ४०२ ॥ ततस्ते तत्प्रबोधार्थमित्थमाचक्षते
तदा । भो भद्रा! नैव युक्तोऽयं, भवतां भवविभ्रमः ॥ ४०३ ॥ "एते हि भोगा नागानां, भोगा इव सुदारुणाः । पर्यन्तकटुकाः पा-
"पास्तीव्रसंक्लेशवर्धनाः ॥ ४०४ ॥ नार्योऽनार्याः कृताकार्याः, सर्वमायाकरण्डिकाः । विलासनृत्तसङ्गीतविब्बोकाद्या विडम्बनाः ॥४०५॥
"मोक्षस्तु भद्राः सततमनन्तानन्दसुन्दरः । जीवस्यात्मव्यवस्थानं, निःशेषक्लेशवर्जितः ॥ ४०६ ॥ मनुष्यभवमासाद्य, तन्न युक्तं भवा-
"दृशाम् । खाद्यपेयविलासादिकौतुकेनात्मवञ्चनम् ॥ ४०७ ॥ एतेषु सक्ता भोगेषु, कतिचिद्दिनभाविषु । मा मोक्षमार्गमुत्सृज्य, गच्छ-
"तानन्तके भवे ॥ ४०८ ॥ धर्मानुष्ठानबुद्ध्या च, यदिदं मारणादिकम् । यूयं कुरुथ तत्पापं, सर्वं संसारवर्धनम् ॥ ४०९ ॥ कुशास्त्र-
"कारमोहेन, मा कुरुध्वमथेदृशम् । अहिंसाद्यात्मकं धर्मं, कुरुध्वं दोषसूदनम् ॥ ४१० ॥" अथेदृशं मुनीनां ते, वाक्यमाकर्ण्य पेशलम् ।
मूढकल्पा जनास्तूर्णं, प्रद्वेषं यान्ति पापिनः ॥ ४११ ॥ वदन्ति च ततो रुष्टा, भो भोः श्रमणका! वयम् । शिक्षणीया न युष्माभिर्यात
यात यथाऽऽगताः ॥ ४१२ ॥ भोगान्निन्दथ पापिष्ठा, धर्मं चास्मन्निषेवितम् । ततो नो वैरिका यूयं, नेष्यामोऽन्तकमन्दिरम् ॥ ४१३ ॥
ईदृशोऽपीह सद्धर्मो, यद्ययं वो न रोचते । ततोऽलं युष्मदीयेन, धर्मेण पुरुषाधमाः! ॥ ४१४ ॥ निवेदयत सद्धर्मं, निजेभ्यः श्रमणा-
धमाः । आत्मीयजनकेभ्यो भो, न त्वस्माकं प्रयोजनम् ॥ ४१५ ॥ तदिदं मूढजन्तूनां, वाक्यमाकर्ण्य साधवः । ब्रूयुः करुणया याव-
द्भूयो धर्मस्य लक्षणम् ॥ ४१६ ॥ तावत्ते नितरां क्रुद्धा, दष्टौष्ठा रक्तलोचनाः । गाढप्रहारदानादौ, प्रवर्तन्ते न संशयः ॥ ४१७ ॥ तत-
स्तादृशं वीक्ष्य, मुनयो मूढचेष्टितम् । निश्चिन्वन्ति निजे चित्ते, नैते साध्याः कथंचन ॥ ४१८ ॥ ततस्ते साधवस्तेषामुपेक्षां कुर्वते

यतः । न भवेद्दोहने चित्तं, वन्ध्याभावे विनिश्चिते ॥ ४१९ ॥ ४ । ततो यथा चारूपदेशं कुर्वतोस्तयोर्योग्यहितज्ञयोर्भूते रत्नानां वोहित्थे ते तौ च गृहीत्वा गतश्चारुः स्वस्थाने जातास्त्रयोऽपि रत्नविनियोगेन सततमनन्तानन्दभाजनं, मूढस्तु दुश्चरितक्रुद्धेन नरपतिना निष्कासितस्ततो द्वीपात् प्रक्षिप्तः समुद्रे संजातोऽनन्तदुःखभरभाजनमिति, तथा भद्र! घनवाहन मुनीनामुपदेशं पूर्वोक्तं कुर्वतां तेषां देशविरतानां भद्रकभव्यमिथ्यादृष्टीनां च क्रमेण कृते पारमेश्वरे व्रतग्रहणे वर्तन्ते ज्ञानादयो गुणाः भ्रियन्ते तेषामात्मानः ततः सर्वेऽपि गच्छन्ति परमपदे जायन्ते सततमनन्तानन्दसन्दोहभाजो ज्ञानदर्शनचारित्रविनियोगेन, मूढजन्तवस्तु कुर्वन्ति पापभरपूरणं, ततः क्रुद्धेनैव स्वकर्मपरिणामभूभुजा निर्वास्यन्ते मनुष्यभवरत्नद्वीपात् पात्यन्ते संसारसागरे भवन्ति निरन्तरदुःखसम्भारभाजनमिति । ततश्च—एवं कथानकस्यास्य, ज्ञात्वा भावार्थमीदृशम् । अयं प्रव्रजितो जातः, साधुर्भो घनवाहन! ॥ ४२० ॥ एवंविधविवेकस्य, कारणे कर्मदारणे । को वा कथानके ह्यत्र, श्रुते नो मुनितां भजेत्? ॥ ४२१ ॥ रत्नद्वीपसमे प्राप्ते, मानुष्ये भद्र! भाविकैः । रत्नैर्भृत्वाऽऽत्मबोहित्थं, को न गच्छेच्छिवालयम्? ॥ ४२२ ॥ ततो भद्रेऽगृहीतसङ्केते! तदिदमीदृशमकलङ्कवचनमाकर्णयतो मे ह्रसिता यद्यपि कर्मस्थितिः संजातो भद्रकभावः सुखायितं मनागाकलङ्कं वचनं तथापि स्थितोऽहं मौनेनैव, प्राप्तोऽकलङ्कः सहितो मया पद्ममुनिसमीपं वन्दितो मुनिवरः धर्मलाभितोऽनेन कृता प्रस्तावना पृष्टः सोऽपि वैराग्यकारणं, मुनिनोक्तं—नगरी संसृतिर्नाम, अस्त्यनादिरजन्तिका । तदीयो हट्टमार्गो मे, जातो वैराग्यकारणम् ॥ ४२३ ॥ अकलङ्केन चिन्तितं—अरघट्टः पुरा यादृग्, मुनिना मे निवेदितः । नूनं भो हट्टमार्गोऽपि, तादृशोऽयं भविष्यति ॥ ४२४ ॥ ततः प्रोक्तमकलङ्केन—निवेदय महाभाग!, मह्यमेनं स्फुटाक्षरैः । हट्टमार्गः स संजातो, यस्ते वैराग्यकारणम् ॥ ४२५ ॥ मुनिराह महाभागो, योऽयं ध्यानस्थितो मुनिः । अनेन जन्मसतानः, स हट्टो मम दर्शितः ॥ ४२६ ॥ विराजितः

सुदीर्घाभिर्भवावपनपंक्तिभिः । भूरिभिः सुखदुःखाख्यैः, स पण्यैः परिपूरितः ॥ ४२७ ॥ आकुलैः सञ्चयोद्युक्तैः, क्रयविक्रयतत्परैः । जीववाणिजकैर्नित्यं, स्वार्थनिष्ठैर्निषेवितः ॥ ४२८ ॥ पुण्यापुण्याभिधानैश्च, स्तोकोत्कृष्टविमध्यमैः । मूल्यैः पण्यानि लभ्यन्ते, स्वानुरूपाणि तत्र भोः! ॥ ४२९ ॥ नित्यं व्यवहरत्येष, सदैवोद्घाटितापणः । अपुण्यजीवरोरैश्च, भूरिभिः परिपूरितः ॥ ४३० ॥ महामोहाभिधानोऽत्र, बलाधिकृत उच्यते । कामकोपादयस्तस्य, पुरुषाः परिचारकाः ॥ ४३१ ॥ घोरैर्जीवाधमर्णानां, कर्माख्यैर्धनिकैः सदा । क्रियते धरणकं तत्र, दुर्मोचमतिदारुणम् ॥ ४३२ ॥ सदा कलकलायन्ते, लोकोद्वेगविधायिनः । मत्ताः कषायनामानस्तत्र दुर्दान्तडिम्भकाः ॥ ४३३ ॥ अनेकाश्चर्यभूयिष्ठो, विचित्रः सतताकुलः । नान्यो जगति तादृक्षो, हट्टमार्गो नरोत्तम! ॥ ४३४ ॥ केवलं ते मया लोका, यावत्सम्यङ् निरीक्षिताः । हट्टे सर्वेऽपि विज्ञातास्तावदत्यन्तदुःखिताः ॥ ४३५ ॥ अथानेन महाभाग!, मुनिना मम लोचने । अञ्जिते कृपया भद्र!, ज्ञानाञ्जनशलाकया ॥ ४३६ ॥ ततो विमलदृष्टित्वाद्दृष्टो दूरे व्यवस्थितः । मया हट्टात्समुत्तीर्णो, मठो नाम शिवालयः ॥ ४३७ ॥ तत्रानन्ता मया दृष्टाः, सततानन्दसुन्दराः । सद्बुद्धिदृष्टा भो लोका!, मुक्ताख्या बाधवर्जिताः ॥ ४३८ ॥ ततो मे तत्र संपन्नो, हट्टमार्गे बृहत्तमः । वसतो भद्र! निर्वेदो, मठोन्माथक एव च ॥ ४३९ ॥ ततश्चायं महाभागो, मुनिः प्रोक्तस्तदा मया । हट्टमेनं परित्यज्य, मठे यामः शिवालये ॥ ४४० ॥ यतः—नास्ति मे क्षणमप्यत्र, रतिर्नाथ! सुदारुणे । हट्टमार्गे व्रजामोऽतस्त्वया सार्धं शिवालये ॥४४१॥ मुनिनोक्तं यदीच्छा ते, मठे गन्तुं नरोत्तम! । गृहाण मामिकां दीक्षां, ततोऽस्य प्रापिकामरम्॥ ४४२ ॥ मयोक्तं दीयतां नाथ!, मा विलम्बो विधीयताम् । ततो दत्ता ममानेन, दीक्षेयं पारमेश्वरी ॥ ४४३ ॥ उपदिष्टं च कर्तव्यं, मठप्रापणकारणम् । अहं तदेव कुर्वाणो, भद्र! तिष्ठामि साम्प्रतम् ॥ ४४४ ॥ अकलङ्केनोक्तं—कीदृशं नाथ! कर्तव्यं, गुरुणा ते निवेदितम् ।

हट्टमार्गतोदितिभवस्य

यद्बलेन मठे तत्र, भगवन्गन्तुमिच्छसि ? ॥ ४४५ ॥ मुनिनोक्तं—आकर्णय—अभिहितोऽहं भगवता तदाऽनेन गुरुणा यथा सौम्य! अस्ति तावद्भवतः परिग्रहे कायाभिधानः पञ्चाक्षनामगवाक्षो निवासार्थमपवरकः, तत्र च कार्मणशरीरनामकमपवरकगवाक्षाभिमुखक्षयोपशमाभिधानरन्ध्रं गर्भगृहकं, तत्र च चित्ताभिधानमतितरलं वानरलीवरूपं ?, मयोक्तं—बाढं समस्तमस्ति, गुरुणोक्तं—यद्येवं ततो गृहीतेनैव तेन सर्वेण तावद्भवता प्रव्रजितव्यं यतो न शक्यते तदकाण्ड एव विरहयितुं, मयोक्तं—यदाज्ञापयति नाथः, ततः प्रव्रजितोऽहं, गुरुणोक्तं—भद्र! त्वयेदं वानरलीवरूपं सुरक्षितं कर्तव्यं, मयोक्तं—यदादिशति नाथः, केवलं कुतो भयमिति कथयन्तु भगवन्तः, ततोऽभिहितमनेन मुनिना—यथा "सौम्य! विद्यन्ते तत्र गर्भगृहके वसतोऽस्य भूयांसः सद्धुपद्रवकारिणो यतो भक्ष्यते वराकमिदं "कषायनामकैश्चटुलमूषकैः तरलतरीक्रियते नोकषायाख्यैर्बधपटुभिर्दुष्टवृश्चिकैः खाद्यते संज्ञाख्याभिः क्रूरमार्जारीभिः विलुप्यते रागद्वेष"नामकाभ्यां भीषणकोलोन्दुराभ्यां ग्रस्यते महामोहसंज्ञेनातिरौद्रमार्जारेण उपताप्यते परीषहोपसर्गाख्यैः सततं त्रोटयद्भिर्दंशमशकैः विह्व"लीक्रियते दुष्टाभिसन्धिवितर्काख्यैर्वज्रतुण्डैर्भक्षयद्भिर्मत्कुणैः उपद्रूयतेऽलीकचिन्तासंज्ञाभिर्गृहकोकिलिकाभिः अभिभूयते दारुणाकारैः "प्रमादकृकलासैः तुद्यतेऽनवरतमविरतिजाम्बालनामकेन षट्पदिकाजालेन अन्धीक्रियते मिथ्यादर्शनसंज्ञेनातिघोरेण तमसा" तदेवमेते भद्र! तत्र गर्भगृहके सततस्थायिनोऽस्य वराकस्योपद्रवविशेषाः, तदिदमेवमादिभिरुपद्रवैरुपद्रुतं चित्ताभिधानं वानरलीवरूपं वेदनाभरनिःसहतया निपतति रौद्रध्यानाभिधाने सुज्वलितखादिराङ्गारकुण्डे क्वचित्पुनः प्रविशत्यनेककुविकल्पाख्यलूतातन्तुजालावनद्धमुखे भीषणे गाढमार्तध्यानाभिधाने महाबिले, तदिदमप्रमत्तेन भवता सततं रक्षणीयं, मयोक्तं—भदन्त! कः पुनरस्य रक्षणोपायः, गुरुराह—भद्र! ये ते विद्यन्ते तत्रापवरके पञ्च गवाक्षास्तेषां द्वारेषु विषयनामानः पञ्चैव विषवृक्षा विद्यन्ते, ते चातिदारुणाः स्वरूपेण, यतस्ते नाम्ना-

ऽपीदं वानरलीवरूपं विह्वलयन्ति गन्धेनापि घूर्णयन्ति दर्शनेनापि तरलयन्ति स्मरणेनापि मारयन्ति स्पर्शनेनास्वादनेन च पुनर्यदिदं निपातयन्ति तत्र किमाश्चर्यं ?, ते चास्यामीभिरुपद्रवैरुपद्रुतस्य विह्वलतया सहकाराम्रका इति प्रतिभासन्ते, ततो निर्गच्छति तदभिमुखं लौतैर्गवाक्षकैर्गाढाभिलापेण रज्यते सुन्दराणीति बुद्ध्या केषुचित्तत्फलेषु विद्वेष्टि न सुन्दराणीति बुद्ध्या कानिचित्तत्फलानि बंभ्रमीति ल्यातिरेकेणानवरतं तच्छाखान्तरेषु लुठति नितरामर्थनिचयसंज्ञे तदधोवर्तिनि पत्रफलकुसुमरजःकचवरे, ततस्तेषु परिभ्रमदिदमुद्गुण्ड्य कर्मपरमाणुनिचयसंज्ञेन तदीयफलकुसुमरेणुना आर्द्रीक्रियते भोगस्नेहनामकेन मकरन्दबिन्दुनिस्यन्दसन्दोहवर्षेण, ततो मया गृहीतवचनभावार्थेन चिन्तितं—अये ! वृक्षास्तावदेते सामान्यरूपाः शब्दरूपरसगन्धस्पर्शा भविष्यन्ति कुसुमानि पुनरपरिस्फुटास्तद्विशेषाः फलानि तु परिस्फुटास्तद्विशेषा एव शाखान्तराणि पुनस्तदाधारवस्तुस्थानानि, तेषु च सञ्चरणं चित्तवानरलीवरूपस्य लोकोपचारेणाभिहितं, यदाहुर्लौकिकाः 'अमुत्र गतं मे चित्त'मिति, एवं च स्थिते बुद्धं मयेदं तावत्समस्तं मुनिना भाषितं भोत्स्यते चेति विचिन्त्य मयाऽभिहितं—भदन्त ! ततस्ततः ?, गुरुराह—ततो भद्र ! भोगस्नेहार्द्रीभूते कर्मपरमाणुप्रचयरजोगुण्डिते तत्र चित्तवानरलीवरूपशरीरे विकलतया स्थैर्यस्य भेदकतया विषरूपत्वात्तस्य रजसः संजायन्ते क्षतानि संपद्यते जर्जरीभावः व्याप्यते समन्तान्मध्यदेशः दह्यते विषरूपेण तेन रजसा, ततो भजते कृष्णरूपतां तच्छरीरं क्वचित्संपद्यते रक्तीभावः, ततस्तत्र गर्भगृहके वर्तमानं तत्तेषां सर्वेषां पूर्वोक्तानामुपद्रवविशेषाणां गम्यं भवति ततो बाध्यते नानाविधं तैरिति, तदेष भद्र ! तस्य चित्तवानरलीवरूपस्य संरक्षणोपायो यदुत—गृहीत्वा स्ववीर्यसंज्ञेनात्महस्तेन दृढमप्रमादनामकं वज्रदण्डं तच्चित्तवानरलीवरूपं तैरक्षनामकैर्गवाक्षैर्विषयवृक्षफलभक्षणस्पृहया निर्गच्छदास्फोट्य निवारणीयं तथापि चटुलतया निस्सरत्पुनः पुनराक्रोशनीयं, ततो निषिद्धबहिर्गमनस्य निवृत्तसहकाराम्रकाभिलाषस्य तस्य शोषमुपयास्यत्यसौ

यद्गुलेन मठे तत्र, भगवन्गन्तुमिच्छसि ? ॥ ४४५ ॥ मुनिनोक्तं—आकर्णय—अभिहितोऽहं भगवता तदाऽनेन गुरुणा यथा सौम्य! अस्ति तावद्भवतः परिग्रहे कायाभिधानः पञ्चाक्षनामगवाक्षो निवासार्थमपवरकः, तत्र च कार्मणशरीरनामकमपवरकगवाक्षाभिमुखक्षयोपशमाभिधानरन्ध्रं गर्भगृहकं, तत्र च चित्ताभिधानमतितरलं वानरलीवरूपं?, मयोक्तं—बाढं समस्तमस्ति, गुरुणोक्तं—यद्येवं ततो गृहीतेनैव तेन सर्वेण तावद्भवता प्रव्रजितव्यं यतो न शक्यते तदकाण्ड एव विरहयितुं, मयोक्तं—यदाज्ञापयति नाथः, ततः प्रव्रजितोऽहं, गुरुणोक्तं—भद्र! त्वयेदं वानरलीवरूपं सुरक्षितं कर्तव्यं, मयोक्तं—यदादिशति नाथः, केवलं कुतो भयमिति कथयन्तु भगवन्तः, ततोऽभिहितमनेन मुनिना—यथा "सौम्य! विद्यन्ते तत्र गर्भगृहके वसतोऽस्य भूयांसः स्वल्पद्रवकारिणो यतो भक्ष्यते वराकमिदं "कषायनामकैश्चटुलमूषकैः तरलतरीक्रियते नोकषायाख्यैर्वेधपटुभिर्दुष्टवृश्चिकैः खाद्यते संज्ञाख्याभिः क्रूरमार्जारीभिः विलुप्यते रागद्वेष"नामकाभ्यां भीषणकोलेन्दुराभ्यां भ्रस्यते महामोहसंज्ञेनातिरौद्रमार्जारेण उपताप्यते परीषहोपसर्गाह्वैः सततं श्रोटयद्भिर्दंशमशकैः विह्व"लीक्रियते दुष्टाभिसन्धिवितर्काख्यैर्वज्रतुण्डैर्भक्षयद्भिर्मत्कुणैः उपद्रूयतेऽलीकचिन्तासंज्ञाभिर्गृहकोकिलिकाभिः अभिभूयते दारुणाकारैः "प्रमादकृकलासैः तुद्यतेऽनवरतमविरतिजाम्बालनामकेन षट्पदिकाजालेन अन्धीक्रियते मिथ्यादर्शनसंज्ञेनातिघोरेण तमसा" तदेवमेते भद्र! तत्र गर्भगृहके सततस्थायिनोऽस्य वराकस्योपद्रवविशेषाः, तदिदमेवमादिभिरुपद्रवैरुपद्रुतं चित्ताभिधानं वानरलीवरूपं वेदनाभरनिःसहतया निपतति रौद्रध्यानाभिधाने सुज्वलितरागादिराङ्गारकुण्डे क्वचित्पुनः प्रविशत्यनेककुविकल्पाख्यलूतातन्तुजालावनद्धमुखे भीषणे गाढमार्तध्यानाभिधाने महाबिले, तदिदमप्रमत्तेन भवता सततं रक्षणीयं, मयोक्तं—भदन्त! कः पुनरस्य रक्षणोपायः, गुरुराह—भद्र! ये ते विद्यन्ते तत्रापवरके पञ्च गवाक्षास्तेषां द्वारेषु विषयनामानः पञ्चैव विषवृक्षा विद्यन्ते, ते चातिदारुणाः स्वरूपेण, यतस्ते नाम्ना-

चित्तवानरलीवरक्षा

अङ्गाङ्गीभावमाधत्ते, सा भोगस्नेहवासना । ततः संसारसंस्काराः, संजायन्ते क्षतोपमाः ॥ ४५७ ॥ ततोऽत्र प्रभवन्त्येव,
सर्वे रागाद्युपद्रवाः । मूषकादिसमास्ते च, विवर्धन्ते प्रतिक्षणम् ॥ ४५८ ॥ भूयश्च प्रेर्यमाणं तैर्विषयेष्वेव धावति । पुनः
कर्म पुनः स्नेहः, पुनः सर्वेऽप्युपद्रवाः ॥ ४५९ ॥ अदृष्टतलपर्यन्ते, तदेवंविधचक्रके । निमग्नं दुःखकोटीभिश्चित्तमेतन्न मुच्यते
॥ ४६० ॥ वज्रदण्डः समाख्यातो, गुरुणाऽनेन रक्षकः । गृहीतो वीर्यहरतेन, सोऽप्रमादोऽस्य सत्तमः ॥ ४६१ ॥ ततश्चैवं करिष्यामि,
सततं सुसमाहितः । गुरूद्दिष्टाप्रमादस्य, तस्याहमनुशीलनम् ॥ ४६२ ॥ यदुत—"स्वप्नोऽयमिन्द्रजालं वा, हरिश्चन्द्रपुरं तथा । शरीरं
"भूतयो भोगा, यथान्यत्स्वजनादिकम् ॥ ४६३ ॥ एवं निश्चित्य सद्बुद्ध्या, भावयिष्यामि तत्त्वतः । ततः संसारजालान्मे, चित्तबन्धो
"निवर्त्स्यति ॥ ४६४ ॥ अनाद्यभ्यासयोगेन, निरस्तश्च पुनः पुनः । आत्मन्येवाऽऽहितं चित्तं, धारयिष्यामि यत्नतः ॥ ४६५ ॥ तथेदं
"शिक्षयिष्यामि, चित्त किं निर्गतेन ते ? । बहिः स्वरूपे तिष्ठ त्वं, येनानन्दे निलीयसे ॥ ४६६ ॥ संसारस्ते बहिश्चारः, स च दुःखभ-
"राकरः । मोक्षः स्वरूपेऽवस्थानं, स चानन्दभराकरः ॥ ४६७ ॥ ततो बहिर्न युक्तं ते, निर्गन्तुं सुखलिप्सया । युक्तमात्मन्यवस्थानं,
"चित्त ! हित्वा बहिर्भ्रमम् ॥ ४६८ ॥ आत्मन्यवस्थितस्येह, जन्मन्येव सुखं तव । बहिर्निःसरतोऽत्रैव, दुःखं तद्यदि बुध्यसे ॥ ४६९ ॥
"तथाहि—सर्वं दुःखं परायत्तं, सर्वमात्मवशं सुखम् । बहिश्च ते पराधीनं, स्वाधीनं सुखमात्मनि ॥ ४७० ॥ अन्यच्च—य-
"दात्मनो बहिर्भूतं, वस्तुजातं तव प्रियम् । तत्सर्वं नश्वरं दुःखं, निःस्वभावं मलाविलम् ॥ ४७१ ॥ अतस्तदर्थं हे चित्त,! किं
"वृथा परिताम्यसि । किं वाऽऽत्मानं विमुच्येत्थं, बंभ्रमीषि पुनः पुनः ॥४७२॥ यदि स्यात्सुन्दरं किंचिद्बहिस्तस्य निवारणम् । संभवेत्तव
"दुःखा(सौख्या)य, तच्च चित्त ! न विद्यते ॥ ४७३ ॥ दह्यमानं पुनर्घोरैर्भोगाङ्गारैर्निवारितम् । आत्मन्यानन्दरूपे त्वं, मुधा ताम्यसि धारि-

चित्तानुशासनं

भोगस्नेहसंपादितः शरीरार्द्रीभावः, ततः शुष्कशरीरात्परिशटिष्यति प्रतिक्षणं तद्रजो रोक्ष्यन्ति क्षतानि अपयास्यति जर्जरता न भविष्यति कृष्णता विनङ्क्ष्यति रक्तीभावः आविर्भविष्यति धवलता संपत्स्यते शरीरस्थैर्यं संजनिष्यते दर्शनीयता, ततो न प्रभविष्यन्ति ते प्रागुपवर्णिताः तत्रापि गर्भगृहके वर्तमानस्य तस्योपद्रवविशेषाः, किं च तेऽपि मार्जारमूषककोलोन्दुरादयस्तस्य वानरलीवरूपस्योपद्रवकारिणः समस्तास्तेनैवाप्रमादनामकेन वज्रदण्डेन भवता चूर्णनीयाः, ततस्तेषु संचूर्णितेषु तद्गर्भगृहकमार्गस्थचरिष्णु वानरलीवरूपं निर्बाधं भविष्यति, तदयं भद्र! तस्य संरक्षणोपायः, मयोक्तं—भदन्त! तत्किं पुनस्तेनेत्थं संरक्षितेन मम सेत्स्यति प्रयोजनं?, भगवताऽभिहितं—ननु भद्र! यद्भवतोऽभिप्रेतं शिवालयमठगमनं तस्यैतदेव चित्तवानरलीवरूपं सुसंरक्षितमुपायभूतं वर्तते ॥ एतद्धि रक्षितं सम्यक्, संभवत्येव कारणम् । निर्बाधं गमनस्योच्चैः, पुरुषस्य शिवालये ॥ ४४६ ॥ ततश्चेत्र ते भद्र!, विद्यते गमने मतिः । अस्य संरक्षणेऽप्येवं, ततो यत्नं समाचर ॥ ४४७ ॥ किं च—चक्रकं बहुकालीनं, वर्तते भद्र! दुस्तरम् । अस्य वानरलीवस्य, यदिदं ते मयोदितम् ॥ ४४८ ॥ तथाहि—तत्तैरुपद्रवैर्गाढं, पीडितं मूषकादिभिः । वेदनाविह्वलं मोहादाम्रकेषु प्रवर्तते ॥ ४४९ ॥ ततश्च—गुण्ड्यते रजसा भूयो, भिद्यते स्यन्दविन्दुभिः । ततः क्षतानि जायन्ते, बाध्यते मूषिकादिभिः ॥ ४५० ॥ ततस्तद्भक्षणासक्ता, वर्धन्ते मूषिकादयः । भूयश्च बाध्यमानं तैराम्रकेष्वेव धावति ॥ ४५१ ॥ पुनर्गुण्डनमेवास्य, स्नेहेन पुनरार्द्रता । पुनश्च क्षतसम्पत्तिः, पुनः सर्वेऽप्युपद्रवाः ॥ ४५२ ॥ तदेवं चक्रके भद्र!, गतमेतदनिष्ठिते । न मुक्त्वा तावकीं रक्षां, निर्बाधं हन्त जायते ॥ ४५३ ॥ ततो योऽयं मया प्रोक्तो, हेतुः संरक्षणे वरः । स एव भवता नित्यमनुष्ठेयो नरोत्तम! ॥ ४५४ ॥ ततो गृहीतभावार्थस्तदाऽहं पर्यचिन्तयम् । इदं मह्यं भदन्तेन, प्रपञ्चेन निवेदितम् ॥४५५॥ यदुत—रागाद्युपद्रुतं चित्तं, विषयेषु प्रवर्तते । तेषु चास्य प्रवृत्तस्य, वर्धते कर्मसञ्चयः ॥४५६॥

विपर्यास-रागविपयाकाङ्क्षा-स्नेहकर्म-चक्रकं

॥ ४९० ॥ तच्चित्तं नियमाज्जीवो, जीवश्चित्तं न वा भवेत्। यतः केवलिनो जीवा, भावचित्तविवर्जिताः ॥ ४९१ ॥ एवं च स्थिते—
मिथ्याज्ञानविपर्यासाज्जीवो रागादिसंगतः। सततं दुःखरूपेषु, सुखबुद्ध्या प्रवर्तते ॥ ४९२ ॥ ततः कर्माणुसङ्घातमादत्ते स्नेह-
तन्तुभिः। ततो जन्मान्तरारम्भं, विधत्ते तद्वशादयम् ॥ ४९३ ॥ पुनस्तत्र विपर्यासः, पुना रागादिसन्ततिः। पुनश्च विषयाकांक्षा,
पुनस्ते स्नेहतन्तवः ॥ ४९४ ॥ पुनश्च कर्मग्रहणं, पुनर्जन्मसमुद्भवः। पुनस्तत्र विपर्यासः, पुना रागादिकः क्रमः ॥ ४९५ ॥ एवं या-
वदविच्छिन्नं, विपर्यासादिचक्रकम्। जीवस्य वर्तते तावदनिष्ठा भवपद्धतिः ॥ ४९६ ॥ इदमभ्यूहितं नाथ!, मया चक्रकमञ्जसा। यु-
क्तमेतदयुक्तं वा, यूयं विज्ञातुमर्हथ ॥ ४९७ ॥ मुनिनोक्तं महाभाग!, युक्तमेतन्न संशयः। कथं वाऽयुक्तवेत्तारो, भवन्तीह भवादृशाः?
॥ ४९८ ॥ मयाऽपीदं ततो ज्ञातं, गुरुभिश्च समर्थितम्। अनिष्ठितभवे हेतुर्विपर्यासादिचक्रकम् ॥ ४९९ ॥ अत एव परित्याज्यो, वि-

विवेकः

पर्यासो विवेकिना। तदुच्छेदे प्रलीयन्ते, निर्मूलत्वेन शेषकाः ॥ ५०० ॥ अयमेव विवेकोऽत्र, तत्त्वज्ञानमिदं मतम्। अयं निरास्रवो
धर्मो, यद्विपर्यासवर्जनम् ॥ ५०१ ॥ अविपर्यस्तविज्ञातुः, पुरुषस्याप्रमादिनः। मनोविकारजालं हि, स्वसाक्षिकं प्रकाश्यते
॥ ५०२ ॥ ततो विविक्तमात्मानं, सदानन्दं प्रपश्यतः। नास्य संजायते द्वेषो, दुःखे नापि सुखे स्पृहा ॥ ५०३ ॥ निरभिष्वङ्ग-
चित्तोऽसौ, ततः कर्माणुसञ्चयम्। विषयस्नेहमुक्तत्वान्न विधत्ते कदाचन ॥ ५०४ ॥ ततोऽसौ बीजविरहान्निःस्पृहत्वाद्भवान्तरम्। सु-
ष्ठुवन्नारभेतातश्चक्रकं विनिवर्तते ॥ ५०५ ॥ एवं च स्थिते—यत्कर्मबन्धनं प्रोक्तं, यच्चेदं भवचक्रकम्। अनयोर्यो विजानाति, प्रवर्त-
ननिवर्तने ॥ ५०६ ॥ स किं शरीरे भोगेषु, धने वा भवभाविनि। अन्यत्र वा पदार्थे भो!, रागं कुर्यात्कदाचन? ॥ ५०७ ॥ युग्मम्।
यश्च सांसारिके कुर्यात्पदार्थे चित्तनिर्वृतिम्। नाद्यापि तत्त्वतो ज्ञातं, तेनेदं चक्रकद्वयम् ॥ ५०८ ॥ यतः—फलं ज्ञानक्रियायोगे,

"तम् ॥ ४७४ ॥ अनन्तदर्शनज्ञानवीर्यानन्दप्रपूरिते । चित्त! कृत्वाऽऽत्मनि स्थानं, भव शीघ्रं निराकुलः ॥ ४७५ ॥ अत्र "ते तिष्ठतो नित्यं, भोगस्नेहस्य शोषणे । संजाते जायतेऽवश्यं, रजःपातो न संशयः ॥ ४७६ ॥ ततश्च—संक्लिष्टवासनाजन्या, व्रणा "रोहन्ति दारुणाः । ततस्तद्बाधनिर्मुक्तं, न त्वं भोगेषु रज्यसे ॥ ४७७ ॥ पिण्डीप्राया बुधैः प्रोक्ता, भोगाश्चित्तक्षतेषु ते । अत एव मु- "हूर्तं ते, भासन्ते स्वास्थ्यकारिणः ॥ ४७८ ॥ मुहूर्तसुखमाधाय, ते भुक्ताः क्षतवर्धनम् । संक्लिष्टवासनाध्यानाज्जनयन्ति सुदा- "रुणम् ॥ ४७९ ॥ इतरथा—संक्लिष्टवासनोन्मुक्ते, रूढे तव शरीरके । निर्बाधे सततानन्दे, तदिच्छैव न जायते ॥ ४८० ॥ तदेवं "संस्थिते चित्त!, हित्वा सर्वं बहिर्भ्रमम् । स्वरूपे सततं तिष्ठ, लीनं हन्त निरातुरम् ॥ ४८१ ॥" एवं च शिक्षयित्वेदं, चित्तं सम्यग्विधानतः । अस्यैव रक्षणोद्युक्तो, भविष्यामि समाहितः ॥ ४८२ ॥ तथाऽनुशिष्टमप्येतच्चलत्वेव दुरात्मकम् । यत्नान्निराकरिष्यामि, यद्विधो-वस्तुनः पुनः ॥ ४८३ ॥ कषायनोकषायाद्या, ये चोपद्रवकारिणः । अस्य तानपि निःशेषान्, हनिष्याम्यप्रमादतः ॥ ४८४ ॥ विद्योदयेन ध्यानेन, प्रतिपक्षनिषेवया । यास्यन्ति प्रलयं सर्वे, तूर्णं रागाद्युपद्रवाः ॥ ४८५ ॥ ततस्तेषु प्रलीनेषु, भविष्यन्ति न बाधकाः । परीषहोपसर्गाद्या, बहिस्थास्तदुपद्रवाः ॥ ४८६ ॥ आत्मारामं ततो भूत्वा, मच्चित्तमबहिश्चरम् । रागाद्युपद्रवैर्मुक्तं, मोक्षायैव घटिष्यते ॥ ४८७ ॥ एवं परिकल्प्याहं, हृदये सुविनिश्चितः । तदेव कुर्वन्ननिशमेष तिष्ठामि साम्प्रतम् ॥ ४८८ ॥ अकलङ्केनोक्तं—साधु भदन्त! साधु सम्यग् बुद्धं भदन्तेन गुरुवचनं सम्यक् चारब्धं तदाचरणं मयाऽपीदं चक्रकं भगवन्निवेदितमाकर्ण्यान्यदपि चक्रकमभ्यूहितं तद्युक्तमयुक्तं वाऽऽकर्णयतु भगवान्, मुनिनोक्तं—निवेदयतु भद्रः, अकलङ्केनोक्तं—चित्तमेतद् द्विधा तावद्द्रव्यतो भावतस्तथा । आद्यं पर्याप्तियुक्तात्माऽऽगृहीतं पुद्गलात्मकम् ॥ ४८९ ॥ तत्र प्रयुक्तो जीवस्तु, भावचित्तं निगद्यते । तत्कार्मणशरीरस्थं, तेन भिन्नं निवेद्यते

चित्तानुशासनं

विपर्यासरागविपाकाह्लादस्नेहकर्मचक्रकं

विपर्यास-रागविपयाकाङ्क्षा-स्नेहकर्म-चक्रकं

॥ ४९० ॥ तच्चित्तं नियमाज्जीवो, जीवश्चित्तं न वा भवेत् । यतः केवलिनो जीवा, भावचित्तविवर्जिताः ॥ ४९१ ॥ एवं च स्थिते—
मिथ्याज्ञानविपर्यासाज्जीवो रागादिसंगतः । सततं दुःखरूपेषु, सुखबुद्ध्या प्रवर्तते ॥ ४९२ ॥ ततः कर्माणुसङ्घातमादत्ते स्नेह-
तन्तुभिः । ततो जन्मान्तरारम्भं, विधत्ते तद्वशादयम् ॥ ४९३ ॥ पुनस्तत्र विपर्यासः, पुना रागादिसन्ततिः । पुनश्च विपयाकांक्षा,
पुनस्ते स्नेहतन्तवः ॥ ४९४ ॥ पुनश्च कर्मग्रहणं, पुनर्जन्मसमुद्भवः । पुनस्तत्र विपर्यासः, पुना रागादिकः क्रमः ॥ ४९५ ॥ एवं या-
वदविच्छिन्नं, विपर्यासादिचक्रकम् । जीवस्य वर्तते तावदनिष्ठा भवपद्धतिः ॥ ४९६ ॥ इदमभ्यूहितं नाथ !, मया चक्रकमञ्जसा । यु-
क्तमेतदयुक्तं वा, यूयं विज्ञातुमर्हथ ॥ ४९७ ॥ मुनिनोक्तं महाभाग !, युक्तमेतन्न संशयः । कथं वाऽयुक्तवेत्तारो, भवन्तीह भवादृशाः ?
॥ ४९८ ॥ मयाऽपीदं ततो ज्ञातं, गुरुभिश्च समर्थितम् । अनिष्ठितभवे हेतुर्विपर्यासादिचक्रकम् ॥ ४९९ ॥ अत एव परित्याज्यो, वि-
पर्यासो विवेकिना । तदुच्छेदे प्रलीयन्ते, निर्मूलत्वेन शेपकाः ॥ ५०० ॥ अयमेव विवेकोऽत्र, तत्त्वज्ञानमिदं मतम् । अयं निरास्रवो
धर्मो, यद्विपर्यासवर्जनम् ॥ ५०१ ॥ अविपर्यस्तविज्ञातुः, पुरुपस्याप्रमादिनः । मनोविकारजालं हि, स्वस्माद्भिन्नं प्रकाशयते
॥ ५०२ ॥ ततो विविक्तमात्मानं, सदानन्दं प्रपश्यतः । नास्य संजायते द्वेपो, दुःखे नापि सुखे स्पृहा ॥ ५०३ ॥ निरभिष्वङ्ग-
चित्तोऽसौ, ततः कर्माणुसञ्चयम् । विपयस्नेहमुक्तत्वान्न विधत्ते कदाचन ॥ ५०४ ॥ ततोऽसौ बीजविरहान्निःस्पृहत्वाद्भवान्तरम् । मु-
क्त्वन्नारभेतातश्चक्रकं विनिवर्तते ॥ ५०५ ॥ एवं च स्थिते—यत्कर्मबन्धनं प्रोक्तं, यच्चेदं भवचक्रकम् । अनयोर्यो विजानाति, प्रवर्त-
ननिवर्तने ॥ ५०६ ॥ स किं शरीरे भोगेषु, धने वा भवभाविनि । अन्यत्र वा पदार्थे भो !, रागं कुर्यात्कदाचन ? ॥ ५०७ ॥ युग्मम् ।
यश्च सांसारिके कुर्यात्पदार्थे चित्तनिर्वृतिम् । नाद्यापि तत्त्वतो ज्ञातं, तेनेदं चक्रकद्वयम् ॥ ५०८ ॥ यतः—फलं ज्ञानक्रियायोगे,

विवेकः

"तम् ॥ ४७४ ॥ अनन्तदर्शनज्ञानवीर्यानन्दप्रपूरिते । चित्त! कृत्वाऽऽत्मनि स्थानं, भव शीघ्रं निराकुलः ॥ ४७५ ॥ अत्र
"ते विष्ठतो नित्यं, भोगस्नेहस्य शोषणे । संजाते जायतेऽवश्यं, रजःपातो न संशयः ॥ ४७६ ॥ तत्र—संक्लिष्टवासनाऽन्या, प्रमा
"रोहन्ति दारुणाः । ततस्तद्बाधनिर्मुक्तं, न त्वं भोगेषु रज्यसे ॥ ४७७ ॥ पिण्डीमाया सुधैः प्रोक्ता, भोगाभिष्वङ्गतेषु वे । अत एव मु-
"हूर्तं ते, भासन्ते स्वास्थ्यकारिणः ॥ ४७८ ॥ मुहूर्तसुखमाधाय, ते भुक्ताः क्षतवर्धनम् । संक्लिष्टवासनाध्यानाज्जनयन्ति सुदा-
"रुणम् ॥ ४७९ ॥ इतरथा—संक्लिष्टवासनोन्मुक्ते, रूढे तव शरीरके । निर्बाधे सततानन्दे, तदिच्छैव न जायते ॥ ४८० ॥ तदेवं
"संस्थिते चित्त!, हित्वा सर्वं बहिर्भ्रमम् । स्वरूपे सततं तिष्ठ, लीनं हन्त निरातुरम् ॥ ४८१ ॥" एवं च शिक्षयित्वेदं, चित्तं सम्यग्-
विधानतः । अस्यैव रक्षणोद्युक्तो, भविष्यामि समाहितः ॥ ४८२ ॥ तथाऽनुशिष्टमप्येतच्चलत्वेव दुरात्मकम् । यस्मान्निराकरिष्यामि, बहिर्भा-
वतुनः पुनः ॥ ४८३ ॥ कषायनोकषायाद्या, ये चोपद्रवकारिणः । अस्य तानपि निःशेषान्, हनिष्याम्यप्रमादतः ॥ ४८४ ॥ विद्योदयेन
ध्यानेन, प्रतिपक्षनिषेवया । यास्यन्ति प्रलयं सर्वे, तूर्णं रागाद्युपद्रवाः ॥ ४८५ ॥ ततस्तेषु प्रलीनेषु, भविष्यन्ति न बाधकाः ।
परीषहोपसर्गाद्या, बहिस्थास्तदुपद्रवाः ॥ ४८६ ॥ आत्मारामं ततो भूत्वा, भवित्तमबहिर्भ्रमम् । रागाद्युपद्रवैर्मुक्तं, मोक्षायैव घटिष्यते
॥ ४८७ ॥ एवं परिकल्प्याहं, हृदये सुविनिश्चितः । तदेव कुर्वन्ननिशमेव तिष्ठामि साम्प्रतम् ॥ ४८८ ॥ अकलङ्केनोक्तं—साधु भ-
दन्त! साधु सम्यग् बुद्धं भदन्तेन गुरुवचनं सम्यक् चारब्धं तदाचरणं मयाऽपीदं चक्रकं भगवन्निवेदितमाकर्ण्यान्यदपि चक्रकमभ्यू-
हितं तद्युक्तमयुक्तं वाऽऽकर्णयतु भगवान्, मुनिनोक्तं—निवेदयतु भद्रः, अकलङ्केनोक्तं—चित्तमेतद् द्विधा तावद्द्रव्यतो भावतस्तथा ।
आद्यं पर्याप्तियुक्तात्माऽऽगृहीतं पुद्गलात्मकम् ॥ ४८९ ॥ तत्र प्रयुक्तो जीवस्तु, भावचित्तं निगद्यते । तत्कार्मणशरीरस्थं, तेन भिन्नं निवेद्यते

भिक्षानु-
शासनं

विपर्यास-
रागविप-
याकाङ्क्षा-
स्नेहकर्म-
चक्रकं

क्रमसंख्येयाः समस्ता अप्यसंख्येया विद्यन्ते अध्यवसायस्थानाभिधानाः पदिकाः, तया प्रथमया विरचितास्तावदसंख्येयाः प्रथमाः कृष्णवर्णाः एवं द्वितीयया द्वितीया नीलावभासाः तृतीयया तृतीयाः कपोताभाः चतुर्थ्या च चतुर्थ्यस्तेजोभास्वराः पञ्चम्या पञ्चम्यो धवलपद्मच्छायाः षष्ठ्या षष्ठयो विशुद्धस्फटिकनिर्मलास्ताः पदिका इति, तत्राद्ययोषित्रितयनिर्मितासु पदिकासु वर्तमानं तद्वानरलीवरूपमुल्लुत्योत्सुत्य बलात् धावति गवाक्षकैस्तेष्वाम्रकेषु लुठति तत्र रजःकचवरे गुण्ड्यते तेन रजसा भिद्यते तैः स्नेहनिष्यन्दबिन्दुभिः, ततस्तथा क्षतशतैर्जर्जरीभूतं तेषां मूषकमार्जारकोलोन्दुरादीनां सर्वेषामुपद्रवविशेषाणामभिभवनीयं भवति, ततः क्वचिन्नष्टमिव लक्ष्यते क्वचिद् घूर्णितमवतिष्ठते क्वचित्क्रूरतां धारयति सर्वथा सततसंतप्तं तदास्त इति तवापि चानन्तदुःखपरम्पराकारणं संपद्यते, तस्माद्भवता तद्वानरलीवं ताभ्यः पदिकाभ्यो निःसारणीयमुपर्यारोहणीयं, ततश्चतुर्थयोषित्रिर्मितासु तासु पदिकासु प्रतिक्षणमारोहतस्तस्य वानरलीवरूपस्य स्तोकीभविष्यति सन्तापः प्रतनुतां यास्यन्ति बाधाकारिणस्ते मूषकादयः क्षुद्रोपद्रवाः मनाक् स्वल्पीभविष्यत्याम्रकाभिलापः ततः शोषमीषदुपयास्यति सा मकरन्दनिष्यन्दार्द्रता परिशटिष्यति किंचिद्रजः ततो लप्स्यते मनाक् सुखासिकां भविष्यति तदपि तेजोभास्वरं वर्णेन, ततः पञ्चमाङ्गनाघटितपदिकासु भवता तदारोहणीयं, तासु चारोहतस्तस्य स्तोकतरीभविष्यति संतापः प्रतनुतरा भविष्यन्त्युपद्रवाः स्वल्पतरः संपत्स्यतेऽपथ्याम्रकाभिलापः शुष्कतरं भविष्यति शरीरकं निपतिष्यति तस्माद् बहुतरो रेणुनिचयः, ततो मनागस्य रोक्ष्यन्ति क्षतविशेषाः आस्कन्दिष्यतीदं महाह्लादं धारयिष्यति धवलतां वर्धिष्यति शरीरेण भविष्यति विशालतरं, ततः षष्ठललनाविरचितपदिकासु भवता तदारोहणीयं, तासु चारोहतस्तस्य स्तोकतमीभविष्यति दुःखासिका प्रलयं यास्यन्त्युपद्रवविशेषाः अत्यन्तं स्वल्पतमीभविष्यत्याम्रकाभिलापः त्रुटिष्यति रजःकचवरलोठनेच्छा सर्वथा शोषमुपयास्यति मकरन्दरसार्द्रता, ततः शुष्कतरशरीराद्वि-

सर्वमेवोपपद्यते । तयोरपि च तद्भावः, परमार्थेन नान्यथा ॥ ५०९ ॥ साध्यमर्थं परिज्ञाय, यदि सम्यक् प्रवर्तते । ततस्तत्साधयत्येव, तथा चाह महामतिः ॥ ५१० ॥ सम्यक्प्रवृत्तिः साध्यस्य, प्राप्त्युपायोऽभिधीयते । तदप्राप्तावुपायत्वं, न तस्य उपपद्यते ॥५११॥ असाध्यारम्भिणस्तेन, सम्यग्ज्ञानं न जातुचित् । साध्यानारम्भिणश्चेति, द्वयमन्योऽन्यसंश्रयम् ॥ ५१२ ॥ अत एवागमज्ञस्य, या क्रिया सा क्रियोच्यते । आगमज्ञोऽपि यस्तस्यां, यथाशक्त्या प्रवर्तते ॥ ५१३ ॥ चिन्तामणिस्वरूपज्ञो, दौर्गत्योपहतो न हि । तत्प्राप्त्युपायवैचित्र्ये, सत्यन्यत्र प्रवर्तते ॥५१४॥ न चासौ तत्स्वरूपज्ञो, योऽन्यत्रापि प्रवर्तते । मालतीगन्धगुणविद्भ्रमे न रमते ह्यलिः ॥ ५१५ ॥ तदेवं स भवाभावान्मुक्तिमाप्नोति सन्नरः । अलमत्र प्रसङ्गेन, सम्यगभ्यूहितं त्वया ॥ ५१६ ॥ तदिदं गुरुभिर्भद्र!, कर्तव्यं मे निवेदितम् । तस्य वानरलीवस्य, सततं परिरक्षणम् ॥ ५१७ ॥ अकलङ्केनोक्तं—केनोपायेन तन्नाथ!, वानरं नयनक्षमम् । शिवालयमठे तत्र, गुरुणा प्रतिपादितम् ॥ ५१८ ॥ मुनिनोक्तं—आकर्णयतु भद्रः, प्रोक्तोऽहं तदाऽनेन भगवता यथा—सौम्य! तत्र गर्भगृहके लेश्या इति गोत्रेण प्रसिद्धाः कृष्णनीलकपोततैजसीपद्मशुक्लनामानः षडङ्गनाः परिपालिका विद्यन्ते, ताश्च तत्रैव गर्भगृहके समुत्पन्नास्तस्यैव सम्बद्धा संवर्धितास्तस्यैव चोपचयकारिण्यो वर्तन्ते, तासां च मध्ये प्रथमास्तिस्रो नार्यो यथाक्रमं क्रूरतमक्रूरतरक्रूराः स्वरूपेण कारणमनर्थपरम्पराणां शत्रुभूतास्तस्य वानरलीवरूपस्याशुभवृद्धिहेतुभूतास्तस्य गर्भगृहकस्य धारिकास्तथाप्यत्रैव दुःखसङ्कुले हट्टमार्गे निवारिकाः मठगमनस्य, उपरितनाः पुनर्भद्र! तिस्रो नार्यो यथाक्रमं शुद्धशुद्धतरशुद्धतमाः स्वरूपेण कारणमाह्लादपरम्पराणां बन्धुभूतास्तस्य वानरलीवरूपस्य शुद्धवृद्धिहेतुभूतास्तस्य गर्भगृहकस्य निःसारिकास्तथाप्यस्मादसातसन्ततिपूरिताद्धट्टमार्गादनुकूलकारिका मठगमनस्य, ताभिश्च षड्भिरपि नारीभिर्विरचितस्तत्र गर्भगृहके स्वसामर्थ्यादुपर्युपर्यारोहणार्थं परिणामो नाम दर्दरः, तत्र च ताभिरेव नारीभिर्यथानुपूर्वं उपर्युपरि विरचिताः प्रत्ये-

कमसंख्येयाः समस्ता अप्यसंख्येया विद्यन्ते अध्यवसायस्थानाभिधानाः पदिकाः, तया प्रथमया विरचितास्तावदसंख्येयाः प्रथमाः कृष्णवर्णाः एवं द्वितीयया द्वितीया नीलावभासाः तृतीयया तृतीयाः कपोताभाः चतुर्थ्या च चतुर्थ्यस्तेजोभास्वराः पञ्चम्या पञ्चम्यो धवलवर्णाः पष्ठ्या पष्ठ्यो विशुद्धस्फटिकनिर्मलास्ताः पदिका इति, तत्राद्ययोपित्रितयनिर्मितासु पदिकासु वर्तमानं तद्वानरलीवरूपमुत्सुत्सोपद्मच्छायाः त्सुल्य बलात् धावति गवाक्षकैस्तेष्वाम्रकेषु लुठति तत्र रजःकचवरे गुण्ड्यते तेन रजसा भिद्यते तैः स्नेहनिष्यन्दबिन्दुभिः, ततस्तथा क्षतशतैर्जर्जरीभूतं तेषां मूषकमार्जारकोलोन्दुरादीनां सर्वेषामुपद्रवविशेषाणामभिभवनीयं भवति, ततः कचिन्नष्टमिव लक्ष्यते कचिद् घूर्णितमवतिष्ठते कचित्क्रूरतां धारयति सर्वथा सततसंतप्तं तदास्त इति तत्रापि चानन्तदुःखपरम्पराकारणं संपद्यते, तस्माद्भवता तद्वानरलीवं ताभ्यः पदिकाभ्यो निःसारणीयमुपर्यारोहणीयं, ततश्चतुर्थयोपित्रिर्मितासु तासु पदिकासु प्रतिक्षणमारोहतस्तस्य वानरलीवरूपस्य स्तोकीभविष्यति सन्तापः प्रतनुतां यास्यन्ति बाधाकारिणस्ते मूषकादयः क्षुद्रोपद्रवाः मनाक् स्वल्पीभविष्यत्याम्रकाभिलापः ततः शोपमीपदुपयास्यति सा मकरन्दनिष्यन्दार्द्रता परिशटिष्यति किंचिद्रजः ततो लप्स्यते मनाक् सुखासिकां भविष्यति तदपि तेजोभास्वरं वर्णेन, ततः पञ्चमाङ्गनाघटितपदिकासु भवता तदारोहणीयं, तासु चारोहतस्तस्य स्तोकतरीभविष्यति संतापः प्रतनुतरा भविष्यन्त्युपद्रवाः स्वल्पतरः संपत्स्यतेऽपथ्याम्रकाभिलापः शुष्कतरं भविष्यति शरीरकं निपतिष्यति तस्माद् बहुतरो रेणुनिचयः, ततो मनागस्य रोक्ष्यन्ति क्षतविशेषाः आस्कन्दिष्यतीदं महाह्लादं धारयिष्यति धवलतां वर्धिष्यति शरीरेण भविष्यति विशालतरं, ततः पष्ठललनाविरचितपदिकासु भवता तदारोहणीयं, तासु चारोहतस्तस्य स्तोकतमीभविष्यति दुःखासिका प्रलयं यास्यन्त्युपद्रवविशेषाः अत्यन्तं स्वल्पतमीभविष्यत्याम्रकाभिलापः त्रुटिष्यति रजःकचवरलोठनेच्छा सर्वथा शोपमुपयास्यति मकरन्दरसार्द्रता, ततः शुष्कतरशरीराद्वि-

लेश्यापादकाः

श्लेषमनुभविष्यति भूयिष्ठो रेणुनिचयः संजनिष्यते तत्सततालादं भविष्यति शुद्धस्फटिकनिर्मलता । अन्यच्च—तत्र योषित्रितयसंपादितपदिकामार्गेऽनुक्षणमारोहतस्तस्य लगिष्यति मन्दः सुरतकारितया शीतः सन्तापहारितया सुरभिः सद्भूतगुणगणकमलवनमकरन्दरेणुधारितया धर्मध्यानाभिधानः पवनः, तत्सम्बन्धे भविष्यति तत्सततं प्रमुदितं, इतश्च भीतमिव तेभ्योऽधस्तनेभ्यो मूषकमार्जारकोटोन्दुरवृश्चिककृकलासगृहकोकिलिकादिभ्यो नानाविधोपद्रवेभ्यः समुद्विग्नमिव तेन विततेन बहलान्धकारेण आद्यनारीत्रयविरचितं पदिकामार्गमपहाय तत्र पश्चिमयोषित्त्रयविनिर्मिते भयविरहिते सततप्रकाशे पदिकामार्गे निलीनमास्ते तस्य वानरलीवरूपस्य सम्बन्धि वानरयूथं, ततस्तत्रारोहतस्तस्य तदशेषमधिष्ठितं प्रशमदमसन्तोषसंयमसद्बोधादिनामकवानरपरिवारेण विशुद्धधर्ममहावानरेण समन्वितं धृतिभद्रामुखासिकाविविदिषाविज्ञप्तिस्मृतिबुद्धिधारणामेधाक्षान्तिनिःस्पृहतादिसंज्ञाभिर्वरवानरीभिः सङ्कुलं धैर्यवीर्यौदार्यगाम्भीर्यशौण्डीर्यज्ञानदर्शनतपःसत्यवैराग्याकिञ्चन्यमार्दवार्जवब्रह्मशौचादिनामकैर्वरवानरलीवरूपैराविर्भविष्यति किंचित्कदाचित्कस्यांचित्पदिकायां, यच्च तस्य भवदीयवानरलीवरूपस्य शरीरं जीवितं सर्वस्वं सहजमतिहितकरणशीलं वर्तते, किंच—तद्वानरयूथमपि स्थिरं स्वरूपेण दिनकरभास्वरं यर्णेनाह्लादहेतुर्जगतो निरभिलाषुकं तेषु गवाक्षद्वारस्थितेषु सहकाराम्ररूपतया कल्पितेषु विषयवृक्षेषु विगतस्पृहं यथार्थनिचयसम्पत्फलकुसुमरजःकचवरलोठने, ततस्तेनात्मीयवानरयूथेन सह मीलितं तत्तावकं चित्तवानरलीवमत्यन्तप्रमुदितं शीघ्रं यास्यत्युपर्युपरिपदिकासु यावत्पर्यन्तनारीविरचितपदिकामार्गं, तत्र च करिष्यति तस्य तद्वानरयूथं शुक्लध्यानाभिधानेन गोशीर्षचन्दनरसेन सेचनं, ततोऽतिक्रान्तेऽर्धमार्गमात्रे गाढानन्दनिर्भरं भविष्यति तन्निःसहं, ततो नारोक्ष्यत्युपरितनपदिकासु, तस्मिंश्चारूढे भद्र! त्वमप्यारूढो भविष्यसि यतस्ते जीवितमन्तर्धनमात्मभूतं च तद्वानरकं, ततो निःसहीभूतं तद्विमुच्य भवतोपरितनपदिकासु स्वयमेवारोहणीयं, ततः पर्यन्ते पदि-

कामार्गमपि परित्यज्य स्वसामर्थ्येन स्थित्वा पञ्चह्रस्वाक्षरोद्गिरणमात्रकालं निरालम्बनतया गगने ततो विमुच्यापवरकमवरुज्य गर्भगृहकं परित्यज्य वानरकं विधायोत्प्लवनं लङ्घयित्वा हट्टमार्गं गन्तव्यमेकक्रमेणोड्डीय तत्र मठे स्थातव्यमनन्तकालं पूर्वगतलोकमध्येऽनुभाव्योऽनन्तानन्द इति, मयोक्तं—यदाज्ञापयति नाथः, तदेवमनेनोपायेन भद्र! तद्वानरकं तत्र मठे नयनक्षमं गुरुभिर्मे निवेदितमिति—अथ निश्चित्य मौनीन्द्रं, सभावार्थमिदं वचः। ततोऽकलङ्कस्तं नत्वा, मुनिमित्थमवोचत ॥ ५१९ ॥ चारु चारूपदिष्टं ते, गुरुणा मुनिसत्तम!। सुन्दरं भवताऽऽरम्भि, युक्तमेतद्भवादृशाम् ॥ ५२० ॥ ततोऽगृहीतसङ्केते!, सम्यग्बोधविधित्सया। सोऽकलङ्को महाभागो, मां प्रतीदमभाषत ॥ ५२१ ॥ एवं स्फुटाक्षरैः सर्वं, यदनेन निवेदितम्। तत्त्वया विदितं भद्र!, किं वा नो? घनवाहन! ॥ ५२२ ॥ अनेन हि समाख्यातं, क्लेशनिर्मुक्तमञ्जसा। **चित्तमेवात्मनो मुख्यं, संसारोत्तारकारणम्** ॥५२३॥ तल्लेश्यापरिणामेन, क्लेशनिर्मोचनक्षमम्। विशुद्धाध्यवसायेषु, गच्छदेवोपपद्यते ॥ ५२४ ॥ किंच—न केवलं शिवस्योच्चैश्चित्तमेवेह कारणम्। भवस्यापि तदेवेति, मुनयः संप्रचक्षते ॥ ५२५ ॥ यतोऽपवरको योऽयं, यश्चेदं गर्भगेहकम्। यच्च वानरकं भद्र!, तत्सर्वं प्राणिनां समम् ॥ ५२६ ॥ ततश्च—यास्ता भो वर्णिताः पूर्वं, पदिकास्तत्र दर्दरे। तद्वानरं तदारूढं, विचित्रभवकारणम् ॥ ५२७ ॥ यस्यां यस्यां तदारुह्य, करोत्युत्प्लवनं किल। शीघ्रं तत्पदिकास्थेषु, हट्टे नयति देहिनः ॥ ५२८ ॥ मयोक्तं—वयस्य! कोऽस्य भावितस्यार्थः?, अकलङ्केनोक्तं—आकर्णय—यल्लेश्याध्यवसायेषु, म्रियन्ते किल देहिनः। आरूढचित्तास्तादृक्षु, जायन्ते ते भवान्तरे ॥ ५२९ ॥ असह्याध्यवसायेषु, तच्चित्तं वर्तमानकम्। विचित्रयोनिरूपस्य, भवस्यास्य विधायकम् ॥ ५३० ॥ सदोषं भवहेतुस्ते, ममान्येषां च देहिनाम्। निर्दोषं मोक्षहेतुस्ते, चित्तं भो घनवाहन! ॥ ५३१ ॥ रक्षेदं चित्तसद्रत्नं, तस्मादन्तर्धनं परम्। धर्मोऽधर्मः सुखं दुःखं, यत्र सर्वं प्रतिष्ठितम् ॥ ५३२ ॥ जीवाश्च

भावचित्ताश्च, नास्ति भेदः परस्परम् । आत्माऽतो रक्षितस्तेन, चित्तं येनेह रक्षितम् ॥ ५३३ ॥ अर्थार्थं भोगलौल्येन, यावद्धावति सर्वतः । चित्तं कुतस्त्यस्ते तावत्सुखगन्धोऽपि विद्यते ? ॥ ५३४ ॥ "यदेदं निःस्पृहं भूत्वा, परित्यज्य बहिर्भ्रमम् । स्थिरं संपत्स्यते चित्तं, "तदा ते परमं सुखम् ॥ ५३५ ॥ भक्ते स्तोतरि कोपान्धे, निन्दाकर्तरि घोत्थिते । यदा समं भवेच्चित्तं, तदा ते परमं सुखम् ॥ ५३६ ॥ "स्वजने स्नेहसम्बद्धे, रिपुवर्गेऽपकारिणि । स्यात्तुल्यं ते यदा चित्तं, तदा ते परमं सुखम् ॥ ५३७ ॥ शब्दादिविषयग्रामे, सुन्दरेऽसु-"न्दरेऽपि च । एकाकारं यदा चित्तं, तदा ते परमं सुखम् ॥ ५३८ ॥ गोशीर्षचन्दनालेपिवासीच्छेदकयोर्यदा । अभिन्नचित्तवृत्तिः "स्यात्तदा ते परमं सुखम् ॥ ५३९ ॥ सांसारिकपदार्थेषु, जलकल्पेषु ते यदा । अश्लिष्टं चित्तपद्मं स्यात्तदा ते परमं सुखम् ॥ ५४० ॥ "दृष्टपूर्वामलावण्यबन्धुराङ्गेषु योषिताम् । निर्विकारं यदा चित्तं, तदा ते परमं सुखम् ॥ ५४१ ॥ यदा सत्त्वैकसारत्वादर्थकामपराङ्मु-"खम् । धर्मे रतं भवेच्चित्तं, तदा ते परमं सुखम् ॥ ५४२ ॥ रजस्तमोविनिर्मुक्तं, स्तिमितोदधिसन्निभम् । निष्कल्लोलं यदा चित्तं, तदा "ते परमं सुखम् ॥ ५४३ ॥ मैत्रीकारुण्यमाध्यस्थ्यप्रमोदोद्दामभावनम् । यदा मोक्षैकतानं स्यात्तदा ते परमं सुखम् ॥ ५४४ ॥" इति चित्तं विहायान्यो, नास्ति भो घनवाहन ! । नरस्य सुखसन्दोहे, सिद्धो हेतुर्जगत्त्रये ॥ ५४५ ॥ ततोऽहमकलङ्कस्य, तादृशैर्वचनामृतैः । सिक्तोऽगृहीतसङ्केते !, मनाक् प्रह्लादमागतः ॥ ५४६ ॥ यतः—निविडाऽपीह तादृक्षैर्मम दृष्टान्तमुद्गरैः । विदारिताऽकलङ्केन, भूयसी कर्मपद्धतिः ॥ ५४७ ॥ कर्मस्थितिमतीत्याहं, भूयिष्ठां पूर्ववर्तिनीम् । अभ्यर्णः संस्थितो भद्रे !, कर्मग्रन्थेः सुदुर्भिदः ॥ ५४८ ॥ इतश्च—यद्वामदेवप्रस्तावे, मया पूर्वं निवेदितम् । स्मरसि त्वं विशालाक्षि !, बुधसूरिवचस्तदा ॥ ५४९ ॥ ततोऽगृहीतसङ्केता, तं प्रतीदमभा-षत । न स्मरामि विशेषेण, स्मारयातस्त्वमेव मे ॥ ५५० ॥ ततः संसारिजीवेन, सा प्रोक्ता तारलोचना । इदं निवेदितं भद्रे !, स्ववृत्तं

बुधसूरिणा ॥ ५५१ ॥ यथा मत्पुत्रकः पूर्वं, देशकालिकया गतः । आगतश्च बहोः कालाद्विचारो नाम दारकः ॥ ५५२ ॥ मार्गानुसारितायुक्तो, भवचक्रं निरीक्ष्य सः । समागतो रहस्यसो, मह्यमेतन्न्यवेदयत् ॥ ५५३ ॥ यदुत—चारित्रधर्मराजेन, महामोहनरेश्वरः । सबलो बलयुक्तेन, युध्यमानो मयेक्षितः ॥ ५५४ ॥ ततश्चारित्रधर्मीयं, सैन्यं निर्जित्य दर्पितः । वेष्टयित्वा स्थितस्तात!, महामोहनराधिपः ॥ ५५५ ॥ अथ तत्तादृशं वीक्ष्य, निरुद्धं तेन दर्पिणा । बलं चारित्रधर्मीयमागतोऽहं तवान्तिके ॥ ५५६ ॥ अगृहीतसङ्केतयोक्तं—स्मृतं स्मृतं मया तात!, सर्वमेतन्निवेदितम् । पूर्वमेव त्वया प्राणदोपदर्शनकाम्यया ॥ ५५७ ॥ अतः परं पुनर्यच, तात! किंचिद्विवक्षितम् । तन्मह्यं स्मृतपूर्वायै, सर्वमाख्यातुमर्हसि ॥ ५५८ ॥ ततः संसारिजीवेन, सा प्रोक्ता मृगवीक्षणा । एषोऽहं कथयिष्यामि, समाकर्णय साम्प्रतम् ॥५५९॥ चित्तवृत्तिमहाटव्यां, तन्निरुद्धं समन्ततः । स्थितं चारित्रधर्मस्य, सैन्यं कालमनन्तकम् ॥ ५६० ॥ ततस्तदाऽकलङ्कस्य, समीपे मम तिष्ठतः । सैन्ये यस्तत्र वृत्तान्तः, संपन्नस्तं निबोध मे ॥ ५६१ ॥ सर्वं विपण्णमालोक्य, तद्बलं रिपुपीडितम् । चारित्रधर्ममुद्दिश्य, सद्बोधः समभापत ॥ ५६२ ॥ न कर्तव्यो विपादोऽत्र, देवास्माभिर्यतोऽधुना । मन्मनोरथवृक्षस्य, दृश्यते कुसुमोद्गमः ॥ ५६३ ॥ तथाहि—यावत्संसारिजीवोऽस्मान्, न जानीते महाप्रभुः । विपदस्तावदेवैता, देवास्माकं रिपूद्भवाः ॥ ५६४ ॥ यदा तु स विजानीयादस्माकं रूपमञ्जसा । तदा संपोषितास्तेन, भवामो रिपुघातकाः ॥ ५६५ ॥ इयं च दृश्यते देव!, चित्तवृत्तिमहाटवी । यथाऽधुना मनाक् शुभ्रा, गाढतामसवर्जिता ॥ ५६६ ॥ तथाऽहं तर्कयामीदं, देवोऽसौ सर्वनायकः । असद्विशेषविज्ञानसमीपे ननु वर्तते ॥ ५६७ ॥ युग्मम् । वयं हि तामसे मग्ना, न दृष्टास्तेन जातुचित् । अधुना दर्शनस्यास्ति, वैमल्यं तस्य कारणम् ॥ ५६८ ॥ एवं च स्थिते—तं कर्मपरिणामाख्यं, पृष्ट्वा राजानमुत्तमम् । पार्श्वे संसारिजीवस्य, प्रेष्यतां कोऽपि मानवः ॥ ५६९ ॥ ततोऽनुकूलित-

घनवाहनस्य सदागमेन संगमः

भावचित्ताच्च, नास्ति भेदः परस्परम् । आत्माऽतो रक्षितस्तेन, चित्तं येनेह रक्षितम् ॥ ५३३ ॥ अर्थार्थं भोगलौल्येन, यावद्धावति सर्वतः । चित्तं कुतस्त्यस्ते तावत्सुखगन्धोऽपि विद्यते ? ॥ ५३४ ॥ "यदेदं निःस्पृहं भूत्वा, परित्यज्य बहिर्भ्रमम् । स्थिरं संपत्स्यते चित्तं, "तदा ते परमं सुखम् ॥ ५३५ ॥ भक्ते स्तोतरि कोपान्धे, निन्दाकर्तरि चोत्थिते । यदा समं भवेच्चित्तं, तदा ते परमं सुखम् ॥ ५३६ ॥ "स्वजने स्नेहसम्बद्धे, रिपुवर्गेऽपकारिणि । स्यात्तुल्यं ते यदा चित्तं, तदा ते परमं सुखम् ॥ ५३७ ॥ शब्दादिविषयग्रामे, सुन्दरेऽसु- "न्दरेऽपि च । एकाकारं यदा चित्तं, तदा ते परमं सुखम् ॥ ५३८ ॥ गोशीर्षचन्दनालेपिवासीच्छेदकयोर्यदा । अभिन्नचित्तवृत्तिः "स्यात्तदा ते परमं सुखम् ॥ ५३९ ॥ सांसारिकपदार्थेषु, जलकल्पेषु ते यदा । अश्लिष्टं चित्तपद्मं स्यात्तदा ते परमं सुखम् ॥ ५४० ॥ "दृष्टेषूद्दामलावण्यबन्धुराङ्गेषु योषिताम् । निर्विकारं यदा चित्तं, तदा ते परमं सुखम् ॥ ५४१ ॥ यदा सत्त्वैकसारत्वादर्थकामपराङ्मु- "खम् । धर्मे रतं भवेच्चित्तं, तदा ते परमं सुखम् ॥ ५४२ ॥ रजस्तमोविनिर्मुक्तं, स्तिमितोदधिसन्निभम् । निष्कल्लोलं यदा चित्तं, तदा "ते परमं सुखम् ॥ ५४३ ॥ मैत्रीकारुण्यमाध्यस्थ्यप्रमोदोद्दामभावनम् । यदा मोक्षैकतानं तत्तदा ते परमं सुखम् ॥ ५४४ ॥" इति चित्तं विहायान्यो, नास्ति भो घनवाहन ! । नरस्य सुखसन्दोहे, सिद्धो हेतुर्जगत्त्रये ॥ ५४५ ॥ ततोऽदमकलङ्कस्य, तादृशैर्वचनामृतैः । सिक्तोऽगृहीतसङ्केते !, मनाक् प्रह्लादमागतः ॥ ५४६ ॥ यतः—निबिडाऽपीह तादृक्षैर्मम दृष्टान्तमुद्गरैः । विदारिताऽकलङ्केन, भूयसी कर्मपद्धतिः ॥ ५४७ ॥ कर्मस्थितिमतीत्याहं, भूयिष्ठां पूर्ववर्तिनीम् । अभ्यर्णः संस्थितो भद्रे !, कर्मग्रन्थेः सुदुर्भिदः ॥ ५४८ ॥ इतश्च— यद्वामदेवप्रस्तावे, मया पूर्वं निवेदितम् । स्मरसि त्वं विशालाक्षि !, बुधसूरिवचस्तदा ॥ ५४९ ॥ ततोऽगृहीतसङ्केता, तं प्रतीदमभाषत । न स्मरामि विशेषेण, स्मारयातस्त्वमेव मे ॥ ५५० ॥ ततः संसारिजीवेन, सा प्रोक्ता तारलोचना । इदं निवेदितं भद्रे !, स्ववृत्तं

चित्तरक्षोपदेशः

घनवाहनभद्रकता

घनवाहनस्य सदागमेन संगमः

सन्निधौ । गुरोस्तस्य मया सार्धं, विहितं पादवन्दनम् ॥ ५८८ ॥ समाप्तध्यानयोगेन, धर्मलाभपुरःसरम् । सूरिणा कोविदाख्येन, तेन सम्भाषणं कृतम् ॥ ५८९ ॥ अथाकलङ्कपृष्टस्य, कुर्वतो धर्मदेशनाम् । तस्य पार्श्वे महात्मैष, मया दृष्टः सदागमः ॥ ५९० ॥ ज्ञापित-श्चाकलङ्केन, यथा भो घनवाहन! । आराधनीयः साधूनामेषामेष सदागमः ॥ ५९१ ॥ एते ह्यस्य सदाऽऽदेशं, कुर्वन्ति नतमस्तकाः । एषोऽस्य सूरिर्जानीते, गुणसम्भारगौरवम् ॥ ५९२ ॥ तदेष ते हितो भद्र!, धर्माधर्मविवेचकः । अतः सदुपदेशार्थमेनं विज्ञातुमर्हसि ॥ ५९३ ॥ ममामीषां च साधूनां, सूरेश्चास्य परिस्फुटम् । यज्ज्ञानं भद्र! तज्जातमस्मादेव सदागमात् ॥ ५९४ ॥ अतोऽयं कोविदाचार्यः, सम्बन्धं ते करिष्यति । सार्धं सदागमेनोच्चैरमुना हितकारिणा ॥ ५९५ ॥ ततस्त्वमस्य सम्बन्धात्सर्वमात्महिताहितम् । क्रमेण ज्ञास्यसे तात!, तदेनं शीघ्रमाश्रय ॥ ५९६ ॥ ततस्तदुपरोधेन, मया भद्रे! सदागमः । प्रतिपन्नस्तदा किंचित्तुष्टेनैवान्तरात्मना ॥ ५९७ ॥ ज्ञापिताश्च गुणाः केचित्तेन कोविदसूरिणा । दर्शितं चास्य विज्ञानं, श्रद्धानं मम नाभवत् ॥ ५९८ ॥ केवलं—अकलङ्कोपरोधेन, विदधे चैत्यवन्दनम् । ददामि दानं साधुभ्यो, भावशून्यमहं सदा ॥ ५९९ ॥ एवं च भद्रकः किंचिदकलङ्कानुरोधतः । संजातोऽहं तदा भद्रे!, नमस्कारादिपाठकः ॥ ६०० ॥ अकलङ्कस्तु संभाल्य, मातापित्रादिकं जनम् । प्रतिपन्नस्तदा दीक्षां, कोविदाचार्यसन्निधौ ॥ ६०१ ॥ ततश्च—सुसाधुपरिवारेण, तेन कोविदसूरिणा । सार्धं गतो विहाराय, सोऽन्यत्र मुनिचर्यया ॥ ६०२ ॥ इतश्च—यावत्सदागमस्तत्र, मत्समीपमुपागतः । महामोहबले तावज्जातं यत्तन्निबोध मे ॥ ६०३ ॥ ज्ञानसंवरणं ज्ञात्वा, सदागमभयातुरम् । ततः प्रोक्तो महामोहो, रागकेसरिमन्त्रिणा ॥ ६०४ ॥ एतावन्तं वयं कालं, निश्चिन्ता देव! संस्थिताः । यद्बलेन स वित्रस्तो, ज्ञानसंवरणो नृपः ॥ ६०५ ॥ यतः—वष्टः सदागमस्तत्र, गत्वाऽभ्यर्णे व्यवस्थितः । देव! संसारिजीवस्य, विरुद्धः स च भूपतेः ॥ ६०६ ॥ नोपेक्षणीयं देवेन, त-

मोहपरिग्रहागमः

स्तेन, देव! कालेन भूयसा। भविष्यत्येव निर्भिध्यं, सोऽस्मद्दर्शनलालसः ॥ ५७० ॥ ततश्चारित्रधर्मेण, सद्बोधं प्रति भाषितम्। साधु भो गदितं साधु, ब्रूहि कः प्रेषणोचितः? ॥ ५७१ ॥ ततश्चारित्रधर्माय, सद्बोधेन निवेदितम्। अयं सदागमस्तत्र, देव! प्रस्थापनोचितः ॥ ५७२ ॥ बहुशः परिचयस्तस्य, यदाऽनेन भविष्यति। तदाऽस्मद्दर्शनाकांक्षा, तस्य संपत्स्यते ध्रुवम् ॥ ५७३ ॥ स कर्मपरिणामाख्यस्ततोऽस्मान् ज्ञापयिष्यति। तस्मै वयं भविष्यामस्ततः शत्रुविघातुकाः ॥ ५७४ ॥ ततश्चारित्रधर्मेण, प्रपन्नं मन्त्रिभाषितम्। प्रवर्तितो यथादिष्टं, मां प्रत्येष सदागमः ॥ ५७५ ॥ उक्तश्च राज्ञा सद्बोधः, किमेषोऽपि प्रहीयताम्? । सम्यग्दर्शनसन्नामा, तस्य पार्श्वे महत्तमः? ॥ ५७६ ॥ सद्बोधेनोदितं देव!, चारुरेष महत्तमः। तस्य संसारिजीवस्य, गतः पार्श्वे न संशयः ॥ ५७७ ॥ किं च—सदागमोऽपि सफलो, युक्तोऽनेनोपपद्यते। अनेन सहितः सोऽस्मान्, सर्वानप्यवभोत्स्यते ॥ ५७८ ॥ किं तु नावसरोऽद्यापि, तेन नैष प्रहीयते। प्रस्तावरहितं कार्यं, न कुर्वन्ति विचक्षणाः ॥ ५७९ ॥ नृपतिनोक्तं—कदा पुनरहो मन्त्रिन्!, प्रस्तावोऽस्य भविष्यति। सद्बोधेनोदितं देव!, समाकर्णय कथ्यते ॥ ५८० ॥ यदा सदागमेनोच्चैः, रञ्जितोऽसौ भविष्यति। पार्श्वे तस्य तदा देव!, प्रेषणीयो महत्तमः ॥ ५८१ ॥ भूयो भूयो युतोऽनेन, वीर्यमासादयेद्यदा। संसारिजीवः प्रस्तावस्तदाऽस्याप्युपपत्स्यते ॥ ५८२ ॥ ततोऽभ्युपगते वाक्ये, मन्त्रिणस्तेन भूभुजा। समागतः क्रमेणायं, मत्समीपे सदागमः ॥ ५८३ ॥ इतश्च—प्रयुक्तः पूर्वमेवासीन्महामोहादिभिर्बली। ज्ञानसंवरणो नाम, मत्समीपे नराधिपः ॥ ५८४ ॥ स हि चारित्रधर्मीयं, तिरोधत्ते सदा बलम्। महामोहमहानीकं, सर्वदा पोषयत्यलम् ॥ ५८५ ॥ एवं च स्थिते—तद्बलेनैव निश्चिन्ता, निर्नष्टभयकारणाः। स्थिता रिपूनिराकृत्य, महामोहादयः सदा ॥ ५८६ ॥ ततः सदागमं वीक्ष्य, प्रत्यासन्नं समागतम्। ज्ञानसंवरणः शीघ्रं, लीनलीनो व्यवस्थितः ॥ ५८७ ॥ अथाकलङ्कः संप्राप्तो, ध्यानारूढस्य

सदागमस्तदाचष्टे, यथेदं क्षणभङ्गुरम् । दुःखात्मकं मलक्लिन्नं, निःस्वभावं
भूतयः । यच्च पौद्गलिकं किंचिच्चित्तावन्धविधायकम् ॥ ६२५ ॥ आत्मा ते ज्ञानसद्वीर्यदर्शनानन्दपूरितः ॥ ६२७ ॥ ततस्तत्रैव युक्तस्ते,
यद्विश्वरम् ॥ ६२६ ॥ तदत्र मूर्च्छां मा कार्षीर्मा कार्षीर्घनवाहन! । आत्मा ते ज्ञानसद्वीर्यदर्शनानन्दपूरितः ॥ ६२७ ॥ चतुर्भिः कलापकम् । महामोहस्तु मे सर्वं, तद्राज्यं ताश्च
चित्तावन्धो नरोत्तम! । येन त्वं निर्वृतिं यासि, सतताह्लादसुन्दराम् ॥ ६२८ ॥ चतुर्भिः कलापकम् । महामोहस्तु मे सर्वं, तद्राज्यं ताश्च
सम्पदः । गात्रं शब्दादिभोगांश्च, यच्चान्यदपि तादृशम् ॥ ६२९ ॥ स्थिरं सुखात्मकं चारु, निर्मलं हितमुत्तमम् । इत्येवं कथयत्युच्चैरुपदेशं
च यच्छति ॥ ६३० ॥ युग्मम् । यदुत—नास्ति जीवो न वा देवो, न मोक्षो न पुनर्भवः । न पुण्यपापे सद्भूते, भूतमात्रमिदं जगत्
॥ ६३१ ॥ अतो यावदयं देहो, विद्यते घनवाहन! । यथेष्टचेष्टया तावत्पिव खाद दिवानिशम् ॥ ६३२ ॥ सद्भोगैः प्रीणयाऽऽत्मानं,
मानयामललोचनाः । सुखं भुंक्ष्व यथाकामं, मा मूढवचनं कृथाः ॥ ६३३ ॥ परिग्रहस्तु मां ब्रूते, यथा भो घनवाहन! । हिरण्यधा-
न्यरत्नादिसम्भारं कुरु यत्नतः ॥ ६३४ ॥ यः प्राप्तं पालयत्यर्थमप्राप्तं ढौकयत्यलम् । न च सन्तोषमादत्ते, तस्य सौख्यम-
नारतम् ॥ ६३५ ॥ अहं तु त्रितयस्यापि, वाक्यमाकर्ण्य तादृशम् । ईषद्दोलायितश्चित्ते, यावज्जातः सुलोचने! ॥ ६३६ ॥ महामोह-
बलेनासौ, ज्ञानसंवरणो नृपः । तावद्द्वयं परित्यज्य, मम पार्श्वे व्यवस्थितः ॥ ६३७ ॥ ततः सदागमेनोक्तं, यत्तद्वाक्यं मनोहरम् ।
तस्यार्थो न मया ज्ञातस्तेन चित्तं न रञ्जितम् ॥ ६३८ ॥ यदाहतुः पुनर्भद्रे!, महामोहपरिग्रहौ । तलग्नं मामके चित्ते, यथा रङ्गः
सुपासिते ॥ ६३९ ॥ ततोऽहं तत्परित्यज्य, देववन्दनपूजनम् । नमस्कारादिपाठं च, संजातो भोगमूर्च्छितः ॥ ६४० ॥ दानं च साधु-
वर्गादेर्विनिवार्य ततः परम् । धनसङ्ग्रहणे रक्तः, पीडयामि करैर्जनम् ॥ ६४१ ॥ सर्वसांसारिकार्थेषु, मूर्च्छा गाढं विवर्धते । स महा-
मोहवीर्येण, रोचते न सदागमः ॥ ६४२ ॥ तथाऽपि—परिग्रहस्य वीर्येण, सर्वथा न्यूनचेतसः । न ममेच्छा तदा पूर्णा, प्राप्तैः सर्वधनै-

सदागम-
महामोह-
परिग्रहो-
दितिः

॥ ६६१ ॥

स्यादेतत्प्रयोजनम् । कुठारच्छेद्यतां कुर्यान्नखच्छेद्यं न पण्डितः ॥ ६०७ ॥ अथामात्यवचः श्रुत्वा, महामोही महासभा । सा सदागमरोषेण, सर्वा क्षोभमुपागता ॥ ६०८ ॥ कृतभ्रुकुटिहुङ्कारा, दष्टोष्ठा भूमिताडिनः । एककालं महायोधाः, सर्वे भाषितुमुद्यताः ॥ ६०९ ॥ कथं!—मया स देव! हन्तव्यो, गत्वा पापः सदागमः । इत्येकैको महायोधो, महामोहमभाषत ॥ ६१० ॥ तेनापि गदितं वत्साः!, कुर्वन्तीदं भवादृशाः । किं तु स्वयं स हन्तव्यो, मया गत्वा दुरात्मकः ॥ ६११ ॥ येनाभिभूतः पापेन, ज्ञानसंवरणो नृपः । मत्प्रयुक्तः स्वहस्तेन, स मे घर्षणमर्हति ॥ ६१२ ॥ अन्यच्च—समुदायात्मको वत्सा!, वर्तेऽहं भो भवादृशाम् । अतो मया हतः सर्वैर्युष्माभिर्हत एव सः ॥ ६१३ ॥ तथा—गते मयि गताः सर्वे, यूयं घातार्थमर्थतः । अतो गच्छाम्यहं वत्सा!, यूयमत्रैव तिष्ठत ॥ ६१४ ॥ किं तु—प्रतिजागरणीयोऽहं, गतस्तत्रान्तरान्तरा । सर्वैरेव यथायोगं, भवद्भिः स्वामिवत्सलैः ॥ ६१५ ॥ अन्यच्च—योऽयं परिग्रहो वत्सा!, वल्लभो मे विशेषतः । रागकेसरिपुत्रस्य, सागरस्य वयस्यकः ॥ ६१६ ॥ नाहमेनं परित्यज्य, तत्र गन्तुं समुत्सहे । अयमेव महावीर्यः, सहायो मम सुन्दरः ॥६१७॥ युग्मम् । ततश्च—अहमेकं गृहीत्वैनं, सत्सहायं परिग्रहम् । गच्छामि त्वरितं तत्र, सदागमजिघांसया ॥ ६१८ ॥ ततो विज्ञाय निर्बन्धं, सर्वैः प्रणतमस्तकैः । एवं विधीयतां देव!, तद्वचः परिपूरितम् ॥ ६१९ ॥ ततः समागतौ भद्रे!, महामोहपरिग्रहौ । मत्समीपं कृतोत्साहौ, मया चेमौ विलोकितौ ॥ ६२० ॥ ततो मे स्नेहसम्बन्धस्ताभ्यां सार्धं सुनिर्भरः । अनाद्यभ्यासयोगेन, संजातस्तारलोचने! ॥ ६२१ ॥ इतश्चोपरतस्तातः, स जीमूतो नरेश्वरः । अहं च स्थापितो राज्ये, बन्धुमन्त्रिमहत्तमैः ॥ ६२२ ॥ प्रणताः सर्वसामन्ता, रिपवो भृत्यतां गताः । ततः परिणतं राज्यं, भूरिभूतिमनोहरम् ॥ ६२३ ॥ स च पुण्योदयस्तस्य, मम राज्यस्य कारणम् । महामोहयुतेनासौ, किं तु नो लक्षितो मया ॥ ६२४ ॥ इतश्च—शरीरं विषया राज्यं, विविधाश्च वि-

तुष्टः स बालिशः । ततश्च चिन्तयत्येवं, महाहर्षवशं गतः ॥ ६५१ ॥ धन्योऽहं कृतकृत्योऽहं, यस्येयं मम सुन्दरी । मनोहरा श्रुतिभार्या, संपन्ना पुण्यकर्मणः ॥ ६५२ ॥ ततस्तं तादृशं मत्वा, श्रुतौ स्नेहपरायणम् । बालिशं मधुरैर्वाक्यैः, स सङ्गः समभाषत ॥ ६५३ ॥ अत्यन्तसुन्दरो देव!, दैवेन हितकारिणा । देवेन सार्धं स्वामिन्याः, संयोगो घटितो ह्ययम् ॥ ६५४ ॥ तथाहि—रूपं वयः कुलं शीलं, लावण्यं च परस्परम् । दम्पत्योः प्रेमसहितमनुरूपं सुदुर्लभम् ॥ ६५५ ॥ एतच्च युवयोः सर्वं, संपन्नं पुण्यकर्मणा । केवलं वर्धनीयोऽयं, प्रेमाबन्धो मनोहरः ॥ ६५६ ॥ ततः स बालिशेनोक्तः, शठात्मा दासदारकः । यथा कथं स वर्धेत?, स प्राह प्रियसेवनात् ॥ ६५७ ॥ बालिशः प्राह किं तस्याः, प्रियं? सङ्ग! निवेद्यताम् । सङ्गेनोक्तं यथा देव!, प्रियोऽस्या मधुरो ध्वनिः ॥ ६५८ ॥ बालिशः प्राह यद्येवं, ततस्तस्य निषेवणम् । अश्रान्तः कारयाम्येनां, साधु साधु निवेदितम् ॥ ६५९ ॥ महाप्रसाद इत्येवं, ब्रुवाणः स च दारकः । स्नेहान्निवेशितस्तेन, हृदये बालिशेन भोः! ॥ ६६० ॥ ततश्च काकलीगीतवेणुवीणाकलस्वनम् । तां श्रुतिं श्रावयन्नेष, बालिशो हृदि मोदते ॥ ६६१ ॥ चिन्तयति च—अहो सुखमहो स्वर्गस्तथाऽहो मम धन्यता । यस्येदृशी श्रुतिर्भार्या, सततानन्ददायिका ॥ ६६२ ॥ ततश्च—हृदये दारकं कृत्वा, तं सङ्गं स्नेहनिर्भरः । श्रुतेः स लालनं कुर्वन्नास्ते नित्यं कलस्वनैः ॥ ६६३ ॥ त्यक्तं तेनान्यकर्तव्यं, धर्माद्दूरेण स स्थितः । पिङ्गप्रायतया जातो, हास्यश्चासौ विवेकिनाम् ॥ ६६४ ॥ इतश्च कोविदेनापि, प्रश्रितोऽयं सदागमः । मह्यमेषा हिता भार्या, किं वा नेति? निवेद्यताम् ॥ ६६५ ॥ ततः सदागमेनोक्तं, न हिता ते नरोत्तम! । ससङ्गेयं श्रुतिर्भार्या, तत्राकर्णय कारणम् ॥ ६६६ ॥ इयं हि प्रहिता पूर्वं, रागकेसरिमन्त्रिणा । इदं जगद्वशीकर्तुं, पश्चमानुपमध्यगा ॥ ६६७ ॥ इतश्च—स कर्मपरिणामस्य, भ्रातृव्यो रागकेसरी । प्रसिद्धश्चरटो लोके, तस्यामात्यो विशेषतः ॥ ६६८ ॥ स कर्मपरिणामाख्यः, सार्वभौमो नरा-

रपि ॥ ६४३ ॥ ततो मां तादृशं मत्वा, दूरीभूतः सदागमः । लब्धात्मलाभौ संतुष्टौ, महामोहपरिग्रहौ ॥ ६४४ ॥ अथान्यदा समायातः, सोऽकलङ्कयुतः पुनः । सुसाधुभिः समाकीर्णः, सूरिः कोविदनामकः ॥ ६४५ ॥ ततोऽकलङ्कदाक्षिण्याद्गतोऽहं तस्य वन्दकः । दृष्टोऽकलङ्कः सूरिश्च, वन्दितो मुनिभिर्युतः ॥ ६४६ ॥ इतश्च—ज्ञानालोकेन विज्ञातं, तेन कोविदसूरिणा । मदीयं चरितं छोकादकलङ्केन चाखिलम् ॥ ६४७ ॥ ततः प्रोक्तोऽकलङ्केन, सूरिर्नाथ! निवेद्यताम् । सदागमस्य माहात्म्यं, घनवाहनभूभुजे ॥ ६४८ ॥ तथा दुर्जनसङ्गे च, ये दोषाः सन्ति देहिनाम् । निवेदनीयास्तेऽप्यस्मै, विशेषं येन बुध्यते ॥६४९॥ युग्मम् । ततः सदागमे भक्तो, दुष्टसम्पर्कवर्जितः । इहामुत्र च येनायं, सुखसन्दोहमश्नुते ॥ ६५० ॥ कोविदसूरिणाऽभिहितं—एवं क्रियते, समाकर्णयतु महाराजः—ततोऽकलङ्कोपरोधेन श्रवणाय स्थितोऽहं सूरेः प्रह्वतरः, सूरिणाऽभिहितं—अस्ति क्षमातलं नाम नगरं तत्र स्वमलनिचयो नाम राजा तस्य तदनुभूतिर्नाम महादेवी, तयोश्च कोविदबालिशाभिधानौ द्वौ तनयौ, इतश्च जन्मान्तरे तस्य कोविदस्यासीदनेन सदागमेन सह परिचयः, ततो यावत्पुनर्दृष्टोऽयं तावदीहापोहमार्गणगवेषणं कुर्वतः संजातं तस्य जातिस्मरणं प्रवृद्धश्चित्तानन्दः गृहीतोऽयं हितगुरुबुद्ध्या निवेदितं बालिशाय यदस्य स्वरूपं न प्रतिपन्नं तेन पापात्मना, इतश्च कर्मपरिणाममहाराजेन प्रहिता तयोः कोविदबालिशयोः स्वयंवरा श्रुतिर्नाम कन्यका, तस्याश्च प्रहितोऽग्रगामी वष्टोऽतिचतुरः सम्बन्धघटनापटुः सङ्गो नाम दासदारकः, आगत्य च वृतौ द्वावपि तौ तया भ्रातरौ परिणीता सा ताभ्यां, अस्ति च तयोः कोविदबालिशयोः परिग्रहे निजदेहो नाम पर्वतः तस्यास्ति मूर्धाभिधानमुपरि महाकूटं तस्योभयपार्श्वयोर्विद्येते सपरिक्षेपे श्रवणनामिके द्वे अपवरिके दृष्टे ते तया अभिरुचितस्तस्यास्तयोर्निवासः ततः स्थिता तयोरेव सा भर्त्रनुज्ञाता सती, तत्र च कृतनिवासा सा श्रुतिस्ताभ्यां कोविदबालिशाभ्यां सार्धं विचरतीति ।—इतश्च तां समासाद्य, परि-

अकलङ्कयुतकोविदागमः श्रुतिसङ्गवृत्तान्तः

तुष्टः स बालिशः । ततश्च चिन्तयत्येवं, महाहर्षवशं गतः ॥ ६५१ ॥ धन्योऽहं कृतकृत्योऽहं, यस्येयं मम सुन्दरी । मनोहरा श्रुतिर्भार्या, संपन्ना पुण्यकर्मणः ॥ ६५२ ॥ ततस्तं तादृशं मत्वा, श्रुतौ स्नेहपरायणम् । बालिशं मधुरैर्वाक्यैः, स सङ्गः समभाषत ॥ ६५३ ॥ अत्यन्तसुन्दरो देव!, दैवेन हितकारिणा । देवेन सार्धं स्वामिन्याः, संयोगो घटितो ह्ययम् ॥ ६५४ ॥ तथाहि—रूपं वयः कुलं शीलं, लावण्यं च परस्परम् । दम्पत्योः प्रेमसहितमनुरूपं सुदुर्लभम् ॥ ६५५ ॥ एतच्च युवयोः सर्वं, संपन्नं पुण्यकर्मणा । केवलं वर्धनीयोऽयं, प्रेमाबन्धो मनोहरः ॥ ६५६ ॥ ततः स बालिशेनोक्तः, शठात्मा दासदारकः । यथा कथं स वर्धेत?, स प्राह प्रियसेवनात् ॥ ६५७ ॥ बालिशः प्राह किं तस्याः, प्रियं? सङ्ग! निवेद्यताम् । सङ्गेनोक्तं यथा देव!, प्रियोऽस्या मधुरो ध्वनिः ॥ ६५८ ॥ महाप्रसाद इत्येवं, ब्रुवाणः स बालिशः प्राह यद्येवं, ततस्तस्य निषेवणम् । अश्रान्तः कारयाम्येनां, साधु साधु निवेदितम् ॥ ६५९ ॥ ततश्च काकलीगीतवेणुवीणाकलस्वनम् । तां श्रुतिं श्रावयन्नेष, बालिशो हृदि मोदते ॥ ६६० ॥ स्नेहान्निवेशितस्तेन, हृदये बालिशेन भोः! ॥ ६६१ ॥ चिन्तयति च—अहो सुखमहो स्वर्गस्तथाऽहो मम धन्यता । यस्येदृशी श्रुतिर्भार्या, सततानन्ददायिका ॥ ६६२ ॥ ततश्च—हृदये दारकं कृत्वा, तं सङ्गं स्नेहनिर्भरः । श्रुतेः स लालनं कुर्वन्नास्ते नित्यं कलस्वनैः ॥ ६६३ ॥ त्यक्तं तेनान्यकर्तव्यं, धर्माद्दूरेण स स्थितः । पिङ्गप्रायतया जातो, हास्यश्चासौ विवेकिनाम् ॥ ६६४ ॥ इतश्च कोविदेनापि, प्रश्रितोऽयं सदागमः । ससङ्गेयं श्रुतिर्भार्या, तत्रामह्यमेषा हिता भार्या, किं वा नेति? निवेद्यताम् ॥ ६६५ ॥ ततः सदागमेनोक्तं, न हिता ते नरोत्तम! । ससङ्गेयं श्रुतिर्भार्या, तत्राकर्णय कारणम् ॥ ६६६ ॥ इयं हि प्रहिता पूर्वं, रागकेसरिमन्त्रिणा । इदं जगद्वशीकर्तुं, पश्चमानुपमध्यगा ॥ ६६७ ॥ इतश्च—स कर्मपरिणामस्य, भ्रातृव्यो रागकेसरी । प्रसिद्धश्चरटो लोके, तस्यामात्यो विशेषतः ॥ ६६८ ॥ स कर्मपरिणामाख्यः, सार्वभौमो नरा-

रपि ॥ ६४३ ॥ ततो मां तादृशं मत्वा, दूरीभूतः सदागमः । लब्धात्मलाभौ संतुष्टौ, महामोहपरिग्रहौ ॥ ६४४ ॥ अथान्यदा समायातः, सोऽकलङ्कयुतः पुनः । सुसाधुभिः समाकीर्णः, सूरिः कोविदनामकः ॥ ६४५ ॥ ततोऽकलङ्कदाक्षिण्याद्गतोऽहं तस्य वन्दकः । दृष्टोऽकलङ्कः सूरिश्च, वन्दितो मुनिभिर्युतः ॥ ६४६ ॥ इतश्च—ज्ञानालोकेन विज्ञातं, तेन कोविदसूरिणा । मदीयं चरितं छोकादकलङ्केन चाखिलम् ॥ ६४७ ॥ ततः प्रोक्तोऽकलङ्केन, सूरिर्नाथ! निवेद्यताम् । सदागमस्य माहात्म्यं, घनवाहनभूभुजे ॥ ६४८ ॥ तथा दुर्जनसङ्गे च, ये दोषाः सन्ति देहिनाम् । निवेदनीयास्तेऽप्यस्मै, विशेषं येन बुध्यते ॥६४९॥ युग्मम् । ततः सदागमे भक्तो, दुष्टसम्पर्कवर्जितः । इहामुत्र च येनायं, सुखसन्दोहमश्नुते ॥ ६५० ॥ कोविदसूरिणाऽभिहितं—एवं क्रियते, समाकर्णयतु महाराजः—ततोऽकलङ्कोपरोधेन श्रवणाय स्थितोऽहं सूरेः प्रह्वतरः, सूरिणाऽभिहितं—अस्ति क्षमातलं नाम नगरं तत्र स्वमलनिचयो नाम राजा तस्य तदनुभूतिर्नाम महादेवी, तयोश्च कोविदबालिशाभिधानौ द्वौ तनयौ, इतश्च जन्मान्तरे तस्य कोविदस्यासीदनेन सदागमेन सह परिचयः, ततो यावत्पुनर्दृष्टोऽयं तावदीहापोहमार्गणगवेषणं कुर्वतः संजातं तस्य जातिस्मरणं प्रवृद्धश्चित्तानन्दः गृहीतोऽयं हितगुरुबुद्ध्या निवेदितं बालिशाय यदस्य स्वरूपं न प्रतिपन्नं तेन पापात्मना, इतश्च कर्मपरिणाममहाराजेन प्रहिता तयोः कोविदबालिशयोः स्वयंवरा श्रुतिर्नाम कन्यका, तस्याश्च प्रहितोऽग्रगामी वृष्टोऽतिचतुरः सम्बन्धघटनापटुः सङ्गो नाम दासदारकः, आगत्य च वृतौ द्वावपि तौ तया भ्रातरौ परिणीता सा ताभ्यां, अस्ति च तयोः कोविदबालिशयोः परिग्रहे निजदेहो नाम पर्वतः तस्यास्ति मूर्धाभिधानमुपरि महाकूटं तस्योभयपार्श्वयोर्विद्येते सपरिक्षेपे श्रवणनामिके द्वे अपवरिके दृष्टे ते तया अभिरुचितस्तत्रास्तयोर्निवासः ततः स्थिता तयोरेव सा भर्त्रनुज्ञाता सती, तत्र च कृतनिवासा सा श्रुतिस्ताभ्यां कोविदबालिशाभ्यां सार्धं विचरतीति ।—इतश्च तां समासाद्य, परि-

॥ ६८७ ॥ अथ ताभ्यां समारब्धं, मधुरं कर्णपेशलम् । परस्परेर्ष्यया गीतं, परिपाट्या मनोरमम् ॥ ६८८ ॥ ततस्तौ शिखरारूढौ, भूप! कोविदबालिशौ । रन्ध्रस्थमिथुनोद्गीतश्रुत्या गाढं प्रबोधितौ ॥ ६८९ ॥ ततश्च—हृदयस्थितसङ्गेन, बालिशेन दुरात्मना । सा श्रुतिः स्थापिता, द्वारे तस्याकर्णनतत्परा ॥ ६९० ॥ तस्यामर्पितसद्भावः, सोऽपि तादात्म्यमागतः । रसेन निर्भरीभूतो, न चेतयति किंचन ॥ ६९१ ॥ ततः स तेन सङ्गेन, स्ववीर्येण तथा कृतः । गण्डशैलसमो रन्ध्रे, द्राक्कृत्य पतितो यथा ॥ ६९२ ॥ बृहद्दास्फोटपातेन, तेन गान्धर्वकिन्नराः । गात्रपातादवष्टब्धा, बालिशे रोषमागताः ॥६९३॥ ततोऽभिहितमेतैस्तैः परस्परं अरे रे—कस्कोऽयं लात लातेति, ततो बद्धश्च बालिशः । चूर्णितः समकं सर्वैर्दुःखमारेण मारितः ॥ ६९४ ॥ इतश्च—सदागमोपदेशेन, त्यक्तसङ्गः स कोविदः । तत्र गीते तदा मूर्च्छां, श्रुत्या युक्तोऽपि नो गतः ॥ ६९५ ॥ ततस्तं पतितं दृष्ट्वा, बालिशं हन्यमानकम् । तस्मात्तूर्णमपक्रान्तो, गिरेः शृङ्गात्स कोविदः ॥ ६९६ ॥ सद्धर्मघोषनामानं, सूरिमासाद्य सुन्दरम् । जातो बालिशवृत्तान्तं, दृष्ट्वा साधुः प्रबुद्धधीः ॥ ६९७ ॥ क्रमाच्च गुरुणा तेन, निजस्थाने निवेशितः । स एषोऽहं महाराज!, विज्ञेयः कोविदस्त्वया ॥ ६९८ ॥ तदेवं स कुमित्रेण, तेन सङ्गेन नाशितः । महादुःखभराक्रान्तो, भ्राता मे भूप! बालिशः ॥ ६९९ ॥ अहं तु मोचितोऽनेन, सर्वथा हितकारिणा । सदागमेन निःशेषात्तादृशादुःखजालकात् ॥ ७०० ॥ जातश्च सतताह्लादः, सांप्रतं लब्धसंयमः । अत एवास्य निर्देशमधुनाऽपि करोम्यहम् ॥ ७०१ ॥ तदेषोऽखिलभूतानां, हितकारी सदागमः । दुष्टान्तरङ्गलोकेन, मैत्री पर्यन्तदारुणा ॥ ७०२ ॥ एवं स्थिते महाराज!, पुरुषेण हितैषिणा । त्यक्तव्यो दुष्टसम्पर्को, न च त्याज्यः सदागमः ॥ ७०३ ॥ ततश्चेदं गुरोर्वाक्यमाकर्ण्यात्यन्तपेशलम् । भद्रेऽगृहीतसङ्केते!, तदा मे हृदि संस्थितम् ॥ ७०४ ॥ अये! मां त्याजयत्येष, महामोहपरिग्रहौ । तथैष कारयत्युच्चैरादरं च सदागमे ॥ ७०५ ॥ एवं च

धिपः । शुभाशुभकरत्वेन, लोके विश्वास्ततां गतः ॥ ६६९ ॥ एवं च स्थिते—इयं चरटकन्येति, मत्वा नाङ्गीकरिष्यति । अयं जनस्तस्तेन, रागकेसरिमन्त्रिणा ॥ ६७० ॥ दासं दत्त्वाऽमतः स्वीयं, सङ्गं सम्बन्धकारिणम् । महाराजसुतात्वेन, ख्यापितेयं श्रुतिः पुरा ॥६७१॥ युग्मम् । स कर्मपरिणामोऽस्या, जनकस्तेन गीयते । सुतेयं परमार्थेन, रागकेसरिमन्त्रिणः ॥६७२॥ जगतो वञ्चकत्वेन, या च तेन दुरात्मना । प्रयुक्तेयं कुतस्तस्या, हितत्वं हन्त विद्यते ? ॥ ६७३ ॥ ततश्च—यद्यपीयं कृता भार्या, भवता भर्तृवञ्चिका । मा कार्षीर्भद्र! विश्वासं, तथाप्यस्यां कदाचन ॥ ६७४ ॥ न चेयं शक्यतेऽद्यापि, विहातुं निजपत्निका । केवलं वर्जनीयोऽयं, सर्वथा दासदारकः ॥ ६७५ ॥ अनेन रहिताऽत्यन्तं, श्रुतिः सङ्गेन पापिना । इयं न विद्यमानापि, भद्र! ते दोषकारिणी ॥ ६७६ ॥ यतः—अनिष्टशब्दविद्विष्टा, मधुरध्वनिलोलुपा । अस्मात्संजायते सङ्गाच्छ्रुतिरेषा न तु स्वयम् ॥ ६७७ ॥ यावच्च प्रेरयत्येषा, रागद्वेषपरायणा । त्वां सङ्गसहिता तात!, तावत्ते दुःखमालिका ॥ ६७८ ॥ अतोऽस्मिन् वर्जिते सङ्गे, शब्दश्रवणतत्परा । भवत्यपीयं मध्यस्था, न ते तात! विबाधिका ॥ ६७९ ॥ तदेष वष्टो दुष्टात्मा, सर्वथा दासदारकः । दुःखकारणभूतस्ते, सङ्गस्त्यजनमर्हति ॥ ६८० ॥ ततः प्रपद्य नम्रेण, तत्सदागमभाषितम् । कोविदेन परित्यक्तः, स सङ्गः श्रुतिदारकः ॥ ६८१ ॥ ततः श्रुत्या युतोऽप्येष, शब्दौत्सुक्यविवर्जितः । भावयन्नपि तान् शब्दांल्लोके श्लाघ्योऽभवत्सुखी ॥६८२॥ एवं च ललमानौ तौ, श्रुत्या कोविदबालिशौ । सङ्गत्यागमहाज्जातौ, सुखदुःखप्रपूरितौ ॥ ६८३ ॥ अथास्ति तुङ्गशिखरो बहिरङ्गो महागिरिः । तत्रान्यदा समारूढौ, भूप! कोविदबालिशौ ॥ ६८४ ॥ तत्रास्ति शिखरे रन्ध्रं, विशालं देवनिर्मितम् । अदृष्टमूलं मानुष्यैर्गत्वा भूमौ प्रतिष्ठितम् ॥ ६८५ ॥ इतश्च—एकं गान्धर्वमिथुनं, किन्नरं च तथापरम् । गेये परस्परस्पर्द्धा, तदा जाताऽनयोर्द्वयोः ॥ ६८६ ॥ ततः परीक्षकैर्युक्ते. ते रन्ध्रे तत्र दैविके । एकान्तमिति विज्ञाय, परीक्षार्थमुपागते

अकलङ्कयुतकोविदागमः श्रुतिसङ्गवृत्तान्तः

कलङ्कः कृपया, मत्समीपमुपागतः ॥ ७१९ ॥ ततः स मां महाभागो, दृष्ट्वा शोकवशीकृतम् । विमुक्ताशेषसत्कृत्यं, दययेदमभाषत ॥ ७२० ॥ किमिदं भोः समारब्धं, भवता घनवाहन! । किं मे विसारितं वाक्यं, किं वा त्यक्तः सदागमः? ॥ ७२१ ॥ किमेष दुष्ट-लोकेन, भवानेवं खिलीकृतः। कृतं च ज्ञाततत्त्वेन, किमिदं बालचेष्टितम्? ॥ ७२२ ॥ यां च ते स्मरतो नित्यं, देवीं मदनसुन्दरीम् । शोकोऽयं बाधते चित्तं, तत्कार्यं किं न बुध्यसे? ॥ ७२३ ॥ तथाहि—सर्वेऽमी जन्तवो नित्यं, कृतान्तमुखकोटरे । वर्तन्तेऽतः क्षणं भूप!, यज्जीवन्ति तदद्भुतम् ॥ ७२४ ॥ स हि नापेक्षतेऽवस्थां, प्रेमाबन्धनसुन्दराम् । दलयत्येव भूतानि, मत्तवद्गन्धवारणः ॥ ७२५ ॥ यद्यत्सज्जनसत्पद्मं, जननेत्रमनोहरम् । तत्तन्निपातयत्येष, कृतान्तहिमशीकरः ॥ ७२६ ॥ न मन्त्रा न धनं भूरि, न वैद्या न च भेषजम् । न बान्धवा न देवेन्द्रा, मृत्यो रक्षन्ति देहिनम् ॥ ७२७ ॥ इत्यदृष्टप्रतीकारे, जाते मरणविड्वरे । सिद्धोऽयं मार्ग इत्येवं, ज्ञात्वा को विह्वलो भवेत्? ॥ ७२८ ॥ तदेवं कुरुते नित्यमश्रान्तो धर्मदेशनाम् । सोऽकलङ्को महाभागो, मत्तः शोकगमेच्छया ॥ ७२९ ॥ अहं पुनर्महामोहवशगस्तां न लक्षये । नष्टबुद्धिः प्रलापेन, तं शोकमनुवर्तयन् ॥ ७३० ॥ कथं!—हा बाले हा प्रिये मुग्धे, हा चार्वङ्गि! वरानने । हा पद्मनेत्रे हा सुभ्रु, हा कान्ते वल्गुभाषिणि! ॥ ७३१ ॥ हा भर्तृवत्सले देवि!, हा हा मदनसुन्दरि! । क्व गताऽसि विहायेमं, रुदन्तं घनवाहनम्? ॥७३२॥ दीयतां दर्शनं तूर्णं, संभाषो मे विधीयताम् । लीयतां मामके देहे, वैक्लव्यमपनीयताम् ॥७३३॥ इत्येवं प्रलपन्नुच्चैरकलङ्कस्य धीमतः । भद्रे! तत्तादृशं वाक्यं, न जानामि विचेतनः ॥ ७३४ ॥ दयापरीतचित्तोऽसौ, ततो मां वीक्ष्य तादृशम् । अकलङ्कस्तदा भद्रे!, पुनः प्राह महामतिः ॥ ७३५ ॥ यथा "भो भो महाराज घनवाहन! न युक्तमीदृशं भवादृशां विधातुं "बालचरितं तत्परित्यज क्लीबतां उररीकुरु धीरतां स्वस्थतां नयान्तःकरणं स्मरात्मानं विरहयेममेकान्तेनाहितं महामोहं मुञ्च शोकं शि-

पुनरकलङ्कागमः देशनायामप्यबोधः

स्थिते—अहं किं करवाणीति, यावच्चिन्तामुपागतः । तावन्ममाशयज्ञानादकलङ्केन जल्पितम् ॥ ७०६ ॥ यदुत—शुद्धं भगवतो वाक्यं, किं वा नो घनवाहन! । मयोक्तं सुष्ठु भो शुद्धं, स प्राह क्रियतामिदम् ॥ ७०७ ॥ ततो गाढरूढतयाऽकलङ्केन सार्धं प्रणयस्याचिन्त्यप्रभावतया भगवत्कोविदसूरिसन्निधानस्य प्रत्यासन्नवर्तितया कर्मग्रन्थिस्थानस्य प्रत्युत्तरदानसामर्थ्यविकलतया च प्रतिपन्नं तदाऽकलङ्कवचनं अभ्यर्णीभूतो भूयः सदागमः अनुशीलितं चैत्यवन्दनादिकं अनुगुणितं पूर्वपठितादिकं प्रवर्तितं पुनर्दानादिकं ईषद्दूरीभूतौ महामोहपरिग्रहौ द्रव्यतोऽकलङ्कलज्जया न पुनर्भावसारतया, ततोऽहं विगतमूर्च्छ इव सांसारिकपदार्थेषु संतुष्टचित्त इव विभवनिचयेषु तदा कलितोऽकलङ्केन, ततो गतः सोऽन्यत्र विहाराय सह सूरिणा—ततस्तं दूरगं मत्वा, महामोहपरिग्रहौ । भूयोऽप्युल्लसितौ भद्रे!, दूरीभूतः सदागमः ॥ ७०८ ॥ ततः शिथिलितं कृत्यं, विस्मृता धर्मदेशना । संजातोऽहं पशोस्तुल्यस्तद्दीर्घास्ते पलाशकाः ॥ ७०९ ॥ ततो विषयमूर्च्छान्धो, धनसञ्चयतत्परः । भूरिकन्याहिरण्यार्थं, पीडयामि महीजनम् ॥ ७१० ॥ अन्तःपुरसहस्राणि, भूरिभोगपिपासया । हिरण्यभृतकूपानां, मीलितानि शतानि च ॥ ७११ ॥ अहिरण्यीकृता पृथ्वी, महामोहवशेन च । तत्पापं न जगत्यस्ति, यत्तदा न कृतं मया ॥ ७१२ ॥ स च पुण्योदयोऽभीष्टं, सर्वं ढौकयते मम । मया तु तन्न विज्ञातं, ततोऽसौ कुपितो मनाक् ॥ ७१३ ॥ ततश्च मे महादेवी, नाम्ना मदनसुन्दरी । अत्यन्तवल्लभाऽभूत्सा, मृता शूलेन विह्वला ॥ ७१४ ॥ अत्रान्तरे समायातः, स्वामिमूलं विनीतकः । प्रतिजागरको भद्रे!, शोकनामा मनुष्यकः ॥ ७१५ ॥ स प्रणम्य महामोहं, स्वामिनं विहितादरः । ततश्चावसरं ज्ञात्वा, मामालिङ्गति मायया ॥ ७१६ ॥ ततोऽहं कृतपूत्कारो, दैन्याक्रन्दनरोदनम् । स्मृत्वा स्मृत्वा करोम्युच्चैर्देवीं मदनसुन्दरीम् ॥ ७१७ ॥ त्यक्तः शरीरसंस्कारो, राज्यकार्यं प्रमादितम् । जातो मद्गृहीतामस्ततोऽहं दुःखपूरितः ॥ ७१८ ॥ अथ मामकवृत्तान्तं, कथंचिज्जनवार्तया । श्रुत्वा-

सागरः, पृष्टोऽनेन रागकेसरी, कृता तेनानुज्ञा, बहुलिकयोक्तं—तात! यत्र सागरो गच्छति तत्र मयापि यातव्यं, यतो विदितमेवेदं तातस्य
न खल्वेष सागरः क्षणमपि मया विना वर्तते, रागकेसरिणोक्तं—वत्से! यद्येवं ततो गच्छतु भवती, किं च—इयमपि कृपणता सागरस्य
शरीरभूता जीवितभूता च वर्तते तदेषाऽपि गच्छतु येनास्य धृतिः संपद्यते, सागरेणोक्तं—तात! महाप्रसादः, ततः समागतानि तानि म-
दभ्यर्णे, दृष्टौ तद्दर्शनेन महामोहपरिग्रहौ, समालिङ्गितोऽहं कृपणतया, ततः प्रवृत्ता ममेच्छा—यदुत किमनेन ममादृष्टपरलोकसाधने-
च्छया दृष्टसुखहेतुना धनेन व्ययितेन प्रयोजनं?, अयं चाकलङ्कः प्रतिदिनं मामुत्साहयति यथा यदि भावस्तवकरणे नाद्यापि तवोत्साहः
ततो महाराज घनवाहन! द्रव्यस्तवकरणे तावदादरं कुरुष्वेति, व्ययितं च तद्द्वारेण बहुतमं धनं वर्तते तदत्र किं करवाणीति चिन्तयतो
मे विहितं बहुलिकयाऽऽलिङ्गनं, ततः प्रादुर्भूता मे कुबुद्धिः—यथा प्रेपयामीतः केनचिद्वचनविन्यासेन तावदेनमकलङ्कं, ततो न भविष्यति
ममायं धनव्ययः, ततोऽभिहितो मयाकलङ्कः—यथा भदन्त! मदुपकारार्थमिहागता यूयं, अतः संपादितो ममोपकारः संपूर्णो भवतां मास-
कल्पः ततस्ते युष्मदर्थमुन्मनीभविष्यन्ति भगवन्तः कोविदाचार्याः संजनिष्यतेऽस्माकमुपालम्भः ततो विहरत यूयं वयं च करिष्यामो
युष्मदादेशं, न भगवद्भिश्चिन्ता कार्येति, तदाकर्ण्य विहृतोऽकलङ्कः प्राप्तो गुरुसमीपं—ततो भूयोऽपि धर्मार्थं, विनिवार्य धनव्ययम्।
संजातः सागरादेशादहं रक्तः परिग्रहे ॥ ७३६ ॥ ततः परिग्रहेणोक्तः, सागरो मित्रवत्सल!। नीयमानः क्षयं साक्षादहं भो रक्षित-
स्त्वया ॥ ७३७ ॥ त्वत्तोऽपि मे विशेषेण, संपन्ना भ्रातृवत्सला। एषा कृपणता मित्र!, मम जीवितदायिका ॥ ७३८ ॥ गाढं बहु-
लिकाप्येषा, ज्ञेया मदुपकारिणी। सोऽकलङ्को महाशत्रुर्गाढं निर्वासितो यया ॥ ७३९ ॥ तच्चारु विहितं चारु, यदागत्य नरोत्तम!।
संदर्शिताऽऽर्यके भक्तिः, पालितोऽयं त्वया जनः ॥ ७४० ॥ एवं च भाषमाणं तं, महामोहः परिग्रहम्। प्रत्युवाच यथा वत्स!, साधु

"थिलय परिमहं अनुवर्तय सदागमं समाचर तदुपदेशं जनय मम चित्तप्रमोदं, किं विस्मृतं भवतोऽधुनैव वत्साधुनिवेदितं भवप्रदीपनकं ?,
"किं न स्मरसि तत्संसारापानकं ? किं न चिन्तयसि तं भवारघट्टं ? किं न ध्यायसि तं सकर्मकजीवचट्टमठवृत्तान्तं ? किं न पर्यालोच-
"यसि तां मनुष्यजन्मरत्नद्वीपदुर्लभतां ? किं न निर्विद्यसे यसंस्तत्र जन्मसन्तानहट्टमार्गे ? किं विस्मारयसि तां चित्तवानरलीवरूपतरलतां ?
"किं नानुशीलयसि तस्यैव सततं रक्षणं ? किं चंभ्रमीपि तेपु विपयविपवृक्षेपु ? किं लुठसि तस्मिन्ननर्थनिचयसंज्ञे पत्रकुसुमफलरजःकचवरे किं
"निपातयसि जानन्नपि मोक्षमार्गमात्मानं घोरेपु महानरकेपु ? किं नारोहयसि तेनोपायेनात्मानं तत्र सततानन्दे शिवालयमठे ?, संसारे
"हि निवसतां महाराज ! देहिनां करतलस्थानि व्यसनानि सुलभाः प्रियजनविप्रयोगाः अदूरगा महाव्याधयः प्रत्यासन्नानि दुःखानि अव-
"श्यंभावीनि मरणानि, ततः पुरुपस्य विमलविवेक एवात्र त्राणं नापरमिति" । ततोऽहं भद्रेऽगृहीतसङ्केते ! गाढप्रसुप्त इव प्रतिबोधकध्व-
निपरम्परया विपघूर्णित इव सत्कुरमन्त्रापमार्जनया मदिरामत्त इव शीघ्रभयदर्शनतया मूर्च्छित इव सलिलशीकरव्यजनक्रियया उन्मत्तक
इव सुवैद्यप्रयुक्तभेपजमालिकया तयाऽकलङ्कवचनपद्धत्या संजातः प्रत्यागतचेतनः ॥ ततः शोकेन प्रणम्याभिहितो महामोहः—यथा देव !
प्रजाम्यहं नायमकलङ्को महामिहासितुं ददाति, महामोहः प्राह—वत्स ! विपमोऽयमकलङ्कः प्रतारयति लमोऽमुं घनवाहनं, आवयोरपि
यत्किमप्यत्र भविष्यति तन्नाद्यापि जानीमः तद्गच्छ तावत्त्वं, केवलं पुनः प्रतिजागरणं विधेयं केनापि भवताऽऽवयोरिति, शोकेनोक्तं—
यदाज्ञापयति देवः, ततो गतः शोकः प्रतिपन्नं मयाऽकलङ्कवचनं वल्लभीकृतः सदागमः अवधीरितो मनाक् महामोहपरिग्रहौ समुच्छलितं
पूर्वपठितं विहितोऽपूर्वश्रुतग्रहणादरः कारितानि जिनभवनबिम्बादीनि प्रवर्तितानि यात्रास्नात्रपात्रदानप्रभृतीनि, ततः कृतो मया तावदेप
गुणभाजनमिति संतुष्टोऽकलङ्कः, अत्रान्तरे प्रियमित्रपरिग्रहोन्माथकेन विधुरितहृदयः प्रवृत्तो मत्समीपागमनाय महामोहप्रतिजागरकः

पुनर्देश-नायाः शोकनाशः

सागरः, पृष्टोऽनेन रागकेसरी, कृता तेनानुज्ञा, बहुलिकयोक्तं—तात! यत्र सागरो गच्छति तत्र मयापि यातव्यं, यतो विदितमेवेदं तातस्य
न खल्वेष सागरः क्षणमपि मया विना वर्तते, रागकेसरिणोक्तं—वत्से! यद्येवं ततो गच्छतु भवती, किं च—इयमपि कृपणता सागरस्य
शरीरभूता जीवितभूता च वर्तते तदेषाऽपि गच्छतु येनास्य धृतिः संपद्यते, सागरेणोक्तं—तात! महाप्रसादः, ततः समागतानि तानि म-
दभ्यर्णे, दृष्टौ तद्दर्शनेन महामोहपरिग्रहौ, समालिङ्गितोऽहं कृपणतया, ततः प्रवृत्ता ममेच्छा—यदुत किमनेन ममादृष्टपरलोकसाधने-
च्छया दृष्टसुखहेतुना धनेन व्ययितेन प्रयोजनं?, अयं चाकलङ्कः प्रतिदिनं मामुत्साहयति यथा यदि भावस्तवकरणे नाद्यापि तवोत्साहः
ततो महाराज घनवाहन! द्रव्यस्तवकरणे तावदादरं कुरुष्वेति, व्ययितं च तद्द्वारेण बहुतमं धनं वर्तते तदत्र किं करवाणीति चिन्तयतो
मे विहितं बहुलिकयाऽऽलिङ्गनं, ततः प्रादुर्भूता मे कुबुद्धिः—यथा प्रेषयामीतः केनचिद्वचनविन्यासेन तावदेनमकलङ्कं, ततो न भविष्यति
ममायं धनव्ययः, ततोऽभिहितो मयाकलङ्कः—यथा भदन्त! मदुपकारार्थमिहागता यूयं, अतः संपादितो ममोपकारः संपूर्णो भवतां मास-
कल्पः ततस्ते युष्मदर्थमुन्मनीभविष्यन्ति भगवन्तः कोविदाचार्याः संजनिष्यतेऽस्माकमुपालम्भः ततो विहरत यूयं वयं च करिष्यामो
युष्मदादेशं, न भगवद्भिश्चिन्ता कार्येति, तदाकर्ण्य विहृतोऽकलङ्कः प्राप्तो गुरुसमीपं—ततो भूयोऽपि धर्मार्थं, विनिवार्य धनव्ययम्।
संजातः सागरादेशादहं रक्तः परिग्रहे ॥ ७३६ ॥ ततः परिग्रहेणोक्तः, सागरो मित्रवत्सल! । नीयमानः क्षयं साक्षादहं भो रक्षित-
स्त्वया ॥ ७३७ ॥ त्वत्तोऽपि मे विशेषेण, संपन्ना भ्रातृवत्सला । एषा कृपणता मित्र!, मम जीवितदायिका ॥ ७३८ ॥ गाढं बहु-
लिकाप्येषा, ज्ञेया मदुपकारिणी । सोऽकलङ्को महाशत्रुर्गाढं निर्वासितो यया ॥ ७३९ ॥ तचारु विहितं चारु, यदागत्य नरोत्तम!।
संदर्शिताऽऽर्यके भक्तिः, पालितोऽयं त्वया जनः ॥ ७४० ॥ एवं च भाषमाणं तं, महामोहः परिग्रहम्। प्रत्युवाच यथा वत्स!, साधु

"थिलय परिग्रहं अनुवर्तय सदागमं समाचर तदुपदेशं जनय मम चित्तप्रमोदं, किं विस्मृतं भवतोऽधुनैव तत्साधुनिवेदितं भवप्रदीपनकं ?,
"किं न स्मरसि तत्संसारापानकं? किं न चिन्तयसि तं भवारघट्टं? किं न ध्यायसि तं सकर्मकजीवचट्टमठवृत्तान्तं? किं न पर्यालोच-
"यसि तां मनुष्यजन्मरत्नद्वीपदुर्लभतां? किं न निर्विद्यसे वसंस्तत्र जन्मसन्तानहट्टमार्गे? किं विस्मारयसि तां चित्तवानरलीवरूपवरलतां?
"किं नानुशीलयसि तस्यैव सततं रक्षणं? किं वंभ्रमीपि तेपु विपयविपवृक्षेपु? किं लुठसि तस्मिन्ननर्थनिचयसंज्ञे पत्रकुसुमफलरजःकचवरे किं
"निपातयसि जानन्नपि मोक्षमार्गमात्मानं घोरेपु महानरकेपु? किं नारोहयसि तेनोपायेनात्मानं तत्र सततानन्दे शिवालयमठे?, संसारे
"हि निवसतां महाराज! देहिनां करतलस्थानि व्यसनानि सुलभाः प्रियजनविप्रयोगाः अदूरगा महाव्याधयः प्रत्यासन्नानि दुःखानि अव-
"श्यंभावीनि मरणानि, ततः पुरुपस्य विमलविवेक एवात्र त्राणं नापरमिति"। ततोऽहं भद्रेऽगृहीतसङ्केते! गाढमसुप्त इव प्रतिबोधकध्व-
निपरम्परया विपघूर्णित इव सस्फुरमन्त्रापमार्जनया मदिरामत्त इव शीघ्रभयदर्शनतया मूर्च्छित इव सलिलशीकरव्यजनक्रियया उन्मत्तक
इव सुवैद्यप्रयुक्तभेपजमालिकया तयाऽकलङ्कवचनपद्धत्या संजातः प्रत्यागतचेतनः॥ ततः शोकेन प्रणम्याभिहितो महामोहः—यथा देव!
प्रजाम्यहं नायमकलङ्को मह्यमिहासितुं ददाति, महामोहः प्राह—वत्स! विपमोऽयमकलङ्कः प्रतारयति लग्नोऽमुं घनवाहनं, आवयोरपि
यत्किमप्यत्र भविष्यति तन्नाद्यापि जानीमः तद्गच्छ तावत्त्वं, केवलं पुनः प्रतिजागरणं विधेयं केनापि भवताऽऽवयोरिति, शोकेनोक्तं—
यदाज्ञापयति देवः, ततो गतः शोकः प्रतिपन्नं मयाऽकलङ्कवचनं वल्लभीकृतः सदागमः अवधीरितौ मनाङ् महामोहपरिग्रहौ उज्ज्वलितं
पूर्वपठितं विहितोऽपूर्वश्रुतग्रहणादरः कारितानि जिनभवनबिम्बादीनि प्रवर्तितानि यात्रास्नात्रपात्रदानप्रभृतीनि, ततः कृतो मया तावदेप
गुणभाजनमिति संतुष्टोऽकलङ्कः, अत्रान्तरे प्रियमित्रपरिग्रहोन्माथकेन विधुरितहृदयः प्रवृत्तो मत्समीपागमनाय महामोहप्रतिजागरकः

च सा कन्या, सततोद्दामलीलया । संसारातीतलावण्या, मुनीनामपि वल्लभा ॥ ७६० ॥ सा सर्वसम्पदां मूलं, सा सर्वक्लेशनाशनी । निरन्तानन्दसन्दोहदायिका सा निगद्यते ॥ ७६१ ॥ अतस्तां कन्यकां विद्यां, यदाऽसौ घनवाहनः । लप्स्यते भोस्तदाऽमुष्मान्महामोहो वियोक्ष्यते ॥ ७६२ ॥ यतः—सा कन्या निजवीर्येण, विरुद्धाऽनेन पापिना । न विद्यते सहावस्था, अनयोस्तेन हेतुना ॥ ७६३ ॥ किं च—तथा निरीहता नाम, कन्याऽन्या विद्यतेऽनघा । चारित्रधर्मराजस्य, दुहिता सा मनोरमा ॥ ७६४ ॥ विरतेः कुक्षिसंभूता, भ्रात्रोरत्यन्तपूजिता । चारित्रधर्मराजीये, राज्ये सा सर्वसारिका ॥ ७६५ ॥ महत्तमस्य साऽभीष्टा, सद्बोधस्यातिवल्लभा । सन्तोषतन्त्रपालेन, स्वामिभक्तेन वर्धिता ॥ ७६६ ॥ स्वभावसुन्दरा बाला, संपूर्णेच्छा न वाञ्छति । वस्त्रालङ्कारमाल्यादिसंपाद्यं सा विभूषणम् ॥ ७६७ ॥ स्वर्णेन विविधैर्भोगैर्विचित्रै रत्नराशिभिः । न शक्या लोभमानेतुं, कन्यका सा निरीहता ॥ ७६८ ॥ सा निःशेषजगद्वन्द्या, सा मुनीनां मनोहरा । सा दुःखोच्छेदिका धन्या, सा चित्तानन्ददायिका ॥ ७६९ ॥ तां कन्यां चारुलावण्यां, यदाऽसौ घनवाहनः । लप्स्यते चिलयं यायात्तदा नूनं परिग्रहः ॥ ७७० ॥ विरोधोऽस्ति तया सार्धं, यतस्तस्य दुरात्मनः । अतस्तां वीक्ष्य पापोऽसौ, गाढभीतो विलीयते ॥ ७७१ ॥ अकलङ्केनोक्तं—कदा पुनरसौ धन्ये, ते कन्ये परिणेष्यति । तयोर्दलनकारिण्यौ, भदन्त! घनवाहनः ॥ ७७२ ॥ कोविदसूरिणोक्तं—भूयसाऽद्यापि कालेन, तयोर्लाभो नरोत्तम! । लब्धयोश्च भवेन्नूनं, स तयोः परिणायकः ॥ ७७३ ॥ अथाकलङ्कः प्रत्याह, युष्मभ्यं यदि रोचते । ततोऽहं लम्भयामीति, ते कन्ये घनवाहनम् ॥ ७७४ ॥ गुरुराह महाभाग!, नाधिकारो भवादृशाम् । कन्ययोः प्रापणेऽद्यापि, तयोरेतेन हेतुना ॥ ७७५ ॥ स कर्मपरिणामाख्यस्ते कन्ये दापयिष्यति । घनवाहनराजाय, नोऽपरो दायकस्तयोः ॥७७६॥ दाप्यमाने पुनस्तेन, ते स्यातां कन्यके यदा । हेतुभावं भजन्त्येव, तदा युष्मादृशा अपि ॥ ७७७ ॥ एवं च स्थिते—स एव योग्यतां

साधूदितं त्वया ॥ ७४१ ॥ अयं हि सागरो वत्स!, सर्वस्वं मम जीवितम् । मदीयवीर्यं निःशेषं, भावतोऽत्र प्रतिष्ठितम् ॥ ७४२ ॥ अयं निर्मिथ्यभक्तो मे, सागरो मामके बले । मत्पुत्रो राज्ययोग्योऽयमयं ते रक्षणक्षमः ॥ ७४३ ॥ एवं चोल्लासितस्तेन, महामोहेन सागरः । संजातो मां वशीकृत्य, स सदागमबाधकः ॥ ७४४ ॥ ततो विवर्धिताकांक्षो, दूरीकृतसदागमः । संजातस्त्यक्तकृत्योऽहं, यथा पूर्वं तथा पुनः ॥ ७४५ ॥ ततो मदीयवृत्तान्तं, समाकर्ण्य कृपापरः । भूयः प्रचलितो भद्रे!, सोऽकलङ्को मदन्तिकम् ॥ ७४६ ॥ ततः कृतप्रणामेन, तेन कोविदसूरयः । विज्ञापिता व्रजामीति, दीपयित्वा प्रयोजनम् ॥ ७४७ ॥ अथ निश्चित्य सद्भावं, प्राहुः कोविदसूरयः । निरर्थकोऽयं ते क्लेशस्ततो मा गास्तदन्तिकम् ॥ ७४८ ॥ तथाहि—यावत्तस्य समीपस्थौ, महामोहपरिग्रहौ । तावन्नाद्यापि कर्मण्यः, स तात! घनवाहनः ॥ ७४९ ॥ यतः—आगच्छन्ति तयोः पार्श्वे, नियमात्सागरादयः । तेषामाश्रयभूतौ तौ, सर्वेषां मूलनायकौ ॥७५०॥ वशे च वर्तमानस्य, तस्य तेषां दुरात्मनाम् । कोपदेशाः क वा धर्मः, क सदागममीलकः? ॥ ७५१ ॥ बधिरे कर्णजापोऽयमन्धे नृत्तप्रदर्शनम् । ऊषरे बीजनिक्षेपस्तस्य या धर्मदेशना ॥ ७५२ ॥ यतः—अशल्पस्तस्य संस्कारस्तावकीनेन जायते । वचनेन क्षतिर्गुर्वी, स्वाध्यायस्य भवादृशाम् ॥ ७५३ ॥ अन्यच्च—बोधितो बोधितो भूयः, स शेते भावनिद्रया । यावदेतौ समीपस्थौ, महामोहपरिग्रहौ ॥ ७५४ ॥ तदलं ते गतेनार्य!, घनवाहनसन्निधौ । स्वकार्यहानिदे कृत्ये, न वर्तन्ते विचक्षणाः ॥ ७५५ ॥ अकलङ्केनोक्तं—भदन्तानर्थहेतुभ्यां, ताभ्यां सार्धं तपस्विनः । कदा पुनर्वियोगः स्याद्, घनवाहनभूभुजः? ॥७५६॥ गुरुणोक्तं विजानन्ति, यं प्रायेण भवादृशाः । चारित्रधर्मराजस्य, प्रसिद्धो यो महत्तमः ॥ ७५७ ॥ चारित्रधर्मयुक्तेन, स्ववीर्येण विनिर्मिता । तेनास्ति मानसी कन्या, विद्या नाम मनोहरा ॥ ७५८ ॥ सा सुरूपा विशालाक्षी, जगदाह्लादकारिणी । विज्ञातविश्वभावार्था, सर्वावयवसुन्दरी ॥ ७५९ ॥ विलसन्ती

तद्वशेन मया नैव, विज्ञाता भवदुष्टता ॥ ७९६ ॥ तथा द्वेषगजेन्द्रोऽपि, सनिमित्तानिमित्तकम् । कुर्वन्नप्रीतिसन्तापं, नितरां मे विडम्बितः ॥ ७९७ ॥ तथा—तस्याविवेकिता भार्या, कार्याकार्यविचारणम् । कुर्वन्तं वारयत्युच्चैस्तदा मां वशवर्तिनम् ॥ ७९८ ॥ तथाहि—शब्दे रूपे रसे गन्धे, स्पर्शे चात्यन्तलोलुपः । वशीकृतोऽहं संपन्नो, रागकेसरिमन्त्रिणा ॥ ७९९ ॥ प्राप्तेषु गाढमूर्च्छान्धोऽप्राप्ताकांक्षाविडम्बितः । कृतो भोगेषु तस्यैव, भार्यया भोगतृष्णया ॥ ८०० ॥ तथा—निर्वादितमुखो हा हा, हासितोऽहं निरर्थकम् । हासेन बहुशो भद्रे!, सद्गाम्भीर्यविरोधिना ॥ ८०१ ॥ मूत्रास्रक्लेदजाम्बालमलपूर्णेषु योषिताम् । गात्रेषु रमितो भद्रे!, रत्याऽहं विवशस्तदा ॥ ८०२ ॥ अरत्यापि महोद्वेगसन्तापाक्रान्तमानसः । कृतोऽहं भूरिशो भद्रे!, कारणैरपरापरैः ॥ ८०३ ॥ मरिष्यामीति विभ्रान्तो, राज्यं वा मे हरिष्यते । इत्यादि कारणं प्राप्य, भयेनाहं विनाटितः ॥ ८०४ ॥ मरणं स्निग्धबन्धूनामर्थनाशादिकं तथा । हेतुं संप्राप्य शोकेन, भूयो भूयो विडम्बितः ॥ ८०५ ॥ सत्त्वमार्गवियुक्तात्मा, मिथ्याबुद्ध्या तिरोहितः । विवेकिहास्यतां नीतस्तदाऽहं हि जुगुप्सया ॥ ८०६ ॥ तथा—रागकेसरिणः पुत्रा, येऽष्टौ पूर्वं विवर्णिताः । सुता द्वेषगजेन्द्रस्य, ये चाष्टौ परिकीर्तिताः ॥ ८०७ ॥ तैस्तदा मे कषायाख्यैर्महामोहपितामहे । समीपस्थे कृतं यत्तु, तदाख्यातुं न पार्यते ॥ ८०८ ॥ युग्मम् । ज्ञानप्रकाशलेशेन, रहितो भावतस्तदा । ज्ञानसंवरणेनाहं, प्रबलेन कृतः पुनः ॥ ८०९ ॥ तथा—कुर्वन् घुरुघुरारावं, काष्ठवन्नष्टचेतनः । दर्शनावरणेनाहं, स्वापितो गतदर्शनः ॥ ८१० ॥ तथा—क्वचिदाह्लादितोऽत्यन्तं, क्वचित्सन्तापविह्वलः । कृतोऽहं तेन चार्वङ्गि!, वेदनीयेन भूभुजा ॥ ८११ ॥ तथा—आयुष्कनामकेनापि, नरेन्द्रेण सुलोचने! । घनवाहनरूपेण, तदाऽहं धारितश्चिरम् ॥ ८१२ ॥ तथा—तेन नामाभिधानेन, भूभुजा वरवीक्षणे! । शरीरे मामके चित्रं, निजवीर्यं निदर्शितम् ॥ ८१३ ॥ तथा गोत्रान्तरायाभ्यां, स्वमाहात्म्यं वरानने! । कृतमेव ममात्यर्थं, चरितार्थ

मत्वा, कचित्ते दापयिष्यति । कन्ये सुखप्रदे धन्ये, घनवाहनभूभुजे ॥ ७७८ ॥ अतो विहाय तचिन्तां, स्वाध्यायध्यानतत्परः । विमुक्तवस्तुनिर्बन्धस्तिष्ठाथ त्वं निराकुलः ॥ ७७९ ॥ ततस्तथेति भावेन, प्रतिपद्य गुरोर्वचः । स्थितोऽकलङ्को निश्चिन्तस्तदा भद्रे! निरातुरः ॥ ७८० ॥ अहं तु तौ समाश्रित्य, महामोहपरिग्रहौ । आगत्यागत्य तद्भृत्यैरेकैकेन कदर्थितः ॥ ७८१ ॥ तथाहि—एके गच्छन्ति तद्भृत्याः, प्रत्यागच्छन्ति चापरे । अन्ये तिष्ठन्ति मत्पार्श्वे, किंचिदासाद्य कारणम् ॥ ७८२ ॥ किं चात्र बहुनोक्तेन?, समासाद्वे निवेद्यते । भूरिभाषितया त्वं मां, वाचालं माऽवजीगणः ॥ ७८३ ॥ चित्तवृत्तिमहाटव्यां, या नदी सा प्रमत्तता । तद्विलसितं नाम, यत्तस्याः पुलिनं पुरा ॥ ७८४ ॥ वर्णितं तत्र चोद्दिष्टश्चित्तविक्षेपमण्डपः । तृष्णा च वेदिका तस्यां, विपर्यासाख्यविष्टरम् ॥ ७८५ ॥ तन्निषण्णो महामोहस्तस्याविद्या वपुर्लता । विमर्शेन प्रकर्षाय, या सा पूर्वं निवेदिता ॥ ७८६ ॥ स्मरसि त्वं विशालाक्षि!, चित्ते सर्वमिदं न वा?। ततोऽगृहीतसङ्केता, प्राह बाढं स्मरामि भोः ॥ ७८७ ॥ चतुर्भिः कलापकम् । संसारिजीवस्तां प्राह, यद्येवं चारुलोचने! । ततस्ते ये विमर्शेन, प्रकर्षाय विवर्णिताः ॥ ७८८ ॥ मिथ्यादर्शनसंज्ञाद्या, भूयांसो वेदिकास्थिताः । अन्ये सेनापरास्तत्र, स्थिता मुत्कलमण्डपे ॥ ७८९ ॥ ते सर्वे भूभुजो भद्रे!, सकलत्राः सबान्धवाः । सभृत्यपरिवाराश्च, प्रत्येकं समुपागताः ॥ ७९० ॥ महामोहे सनीपस्थे, तदा मे सर्वनायके । न सोऽस्ति कश्चित्तत्सैन्ये, येनाहं न निषेवितः ॥ ७९१ ॥ ततश्च—गृद्धो विमूर्च्छितस्तेषु, भावेषु भवभाविषु । कृतोऽहं नष्टसन्मार्गो, महामूढतया तदा ॥ ७९२ ॥ सदागमं परित्यज्य, विधाय मतिविभ्रमम् । मिथ्यादर्शनसंज्ञेन, भूयोऽहं बाधितस्तदा ॥ ७९३ ॥ तथा—पापानि धर्मबुद्ध्याऽहं, दारुणानि पुनस्तदा । भूरिशः कारितो भद्रे!, कुदृष्ट्या तन्महेलया ॥ ७९४ ॥ शब्दादिविषयग्रामे, निःसारे साधुनिन्दिते । विधापितो मनःप्रीतिं, रागकेसरिणा पुनः ॥ ७९५ ॥ तस्य भार्या पुनर्या सा, मूढता नाम विश्रुता ।

तद्वशेन मया नैव, विज्ञाता भवदुष्टता ॥ ७९६ ॥ तथा द्वेषगजेन्द्रोऽपि, सनिमित्तानिमित्तकम् । कुर्वन्नप्रीतिसन्तापं, नितरां मे विजृ-
कुर्वन्तं वारयत्युच्चैस्तदा मां वशवर्तिनम् ॥ ७९८ ॥ तथाहि—
म्भितः ॥ ७९७ ॥ तथा—तस्याविवेकिता भार्या, कार्याकार्यविचारणम् । कुर्वन्तं वारयत्युच्चैस्तदा मां वशवर्तिनम् ॥ ७९८ ॥ तथाहि—
शब्दे रूपे रसे गन्धे, स्पर्शे चात्यन्तलोलुपः । वशीकृतोऽहं संपन्नो, रागकेसरिमन्त्रिणा ॥ ७९९ ॥ प्राप्तेषु गाढमूर्च्छान्धोऽप्राप्ताकांक्षावि-
डम्बितः । कृतो भोगेषु तस्यैव, भार्यया भोगतृष्णया ॥ ८०० ॥ तथा—निर्वादितमुखो हा हा, हासितोऽहं निरर्थकम् । हासेन बहुशो
भद्रे!, सद्गाम्भीर्यविरोधिना ॥ ८०१ ॥ मूत्रास्रक्लेदजाम्बालमलपूर्णेषु योषिताम् । गात्रेषु रमितो भद्रे!, रत्याऽहं विवशस्तदा ॥ ८०२ ॥
अरत्यापि महोद्वेगसन्तापाक्रान्तमानसः । कृतोऽहं भूरिशो भद्रे!, कारणैरपरापरैः ॥ ८०३ ॥ मरिष्यामीति विभ्रान्तो, राज्यं वा मे
हरिष्यते । इत्यादि कारणं प्राप्य, भयेनाहं विनाटितः ॥ ८०४ ॥ मरणं स्निग्धबन्धूनामर्थनाशादिकं तथा । हेतुं संप्राप्य शोकेन, भूयो
भूयो विडम्बितः ॥ ८०५ ॥ तत्त्वमार्गवियुक्तात्मा, मिथ्याबुद्ध्या तिरोहितः । विवेकिहास्यतां नीतस्तदाऽहं हि जुगुप्सया ॥ ८०६ ॥
तथा—रागकेसरिणः पुत्रा, येऽष्टौ पूर्वं विवर्णिताः । सुता द्वेषगजेन्द्रस्य, ये चाष्टौ परिकीर्तिताः ॥ ८०७ ॥ तैस्तदा मे कषायाख्यैर्म-
हामोहपितामहे । समीपस्थे कृतं यत्तु, तदाख्यातुं न पार्यते ॥ ८०८ ॥ युग्मम् । ज्ञानप्रकाशलेशेन, रहितो भावतस्तदा । ज्ञानसंवर-
णेनाहं, प्रबलेन कृतः पुनः ॥ ८०९ ॥ तथा—कुर्वन् घुरुघुरारावं, काष्ठवन्नष्टचेतनः । दर्शनावरणेनाहं, स्वापितो गतदर्शनः ॥ ८१० ॥
तथा—क्वचिदाह्लादितोऽत्यन्तं, क्वचित्सन्तापविह्वलः । कृतोऽहं तेन चार्वङ्गि!, वेदनीयेन भूभुजा ॥ ८११ ॥ तथा—आयुष्कनामके-
नापि, नरेन्द्रेण सुलोचने! । घनवाहनरूपेण, तदाऽहं धारितश्चिरम् ॥ ८१२ ॥ तथा—तेन नामाभिधानेन, भूभुजा वरवीक्षणे! ।
शरीरे मामके चित्रं, निजवीर्यं निदर्शितम् ॥ ८१३ ॥ तथा गोत्रान्तरायाभ्यां, स्वमाहात्म्यं वरानने! । कृतमेव ममात्यर्थं, चरितार्थं

तदा पुनः ॥ ८१४ ॥ तथा—रौद्रार्तध्यानसंयुक्तः, पापात्मा पापचेष्टितः । विद्दितोऽहं विशालाक्षि!, तेन दुष्टाभिसन्धिना ॥८१५॥ तथाऽन्यैरपि तत्काले, महामोहे समीपगे। ममाविर्भावितं भद्रे!, स्वं स्वं वीर्यं महाभटैः ॥८१६॥ अकटङ्केन मुष्टलादनाय इव निर्भयैः। इत्थं सलीकृतोऽत्यन्तं, तैरहं भावशत्रुभिः ॥ ८१७ ॥ अथान्यदा समायातो, मत्कदर्शनकाम्यया । महामोहनरेन्द्रस्य, समीपे मकरध्वजः ॥ ८१८ ॥ स च स्वीयां रतिं भार्यां, रागकेसरिमन्त्रिणम् । पञ्चमानुषसंयुक्तं, तच तस्य कुटुम्बकम् ॥ ८१९ ॥ एतां सर्वां समासाद्य, सामग्रीं कार्यसिद्धये । संनद्धबद्धकवचस्तदा प्राप्तो मृगेक्षणे! ॥ ८२० ॥ ततस्तुष्टो महामोहो, मकरध्वजमीलनात् । सोऽप्यासाद्य महामोहं, परं हर्षमुपागतः ॥८२१॥ ततस्तेन युतः साक्षात्, संनद्धो गन्धवारणः । संपन्नोऽसौ महामोहो, जातो मेऽत्यन्तबाधकः ॥८२२॥ शब्दरूपरसस्पर्शगन्धलुब्धोऽन्धसन्निभः । गाढं निर्नष्टसद्बोधः, संजातोऽहं ततस्तदा ॥ ८२३ ॥ गर्ताशूकरसङ्काशो, विषयाशुचिकर्दमे । रात्रिंदिवं निमग्नात्मा, स्थितोऽहं विगतत्रपः ॥ ८२४ ॥ सुभूयसाऽपि कालेन, न भोगैस्तृप्तिमागतः । घृतपानेन किं जातः, पीनगण्डोऽत्र वानरः? ॥ ८२५ ॥ भुञ्जानस्य च मे भोगान्, वर्धते भोगतृष्णिका । सुतरामुल्लसत्येव, जलेन वडवानलः ॥ ८२६ ॥ अकलङ्कोपदेशास्ते, शशाङ्ककरनिर्मलाः । तदा मे विस्मृताः सर्वे, महामोहघनावृताः ॥ ८२७ ॥ ततो मां तादृशं दृष्ट्वा, भावशत्रुविचेष्टितम् । न मेऽवसर इत्येवं, गतो दूरं सदागमः ॥ ८२८ ॥ यथाभिमतकामांश्च, संपादयति मे तदा । असौ पुण्योदयोऽहं तु, विमूढस्तं न लक्षये ॥ ८२९ ॥ ततो विमुक्तनिःशेषराज्यकार्यो दिवानिशम् । अन्तःपुरगतः स्त्रैणं, भुञ्जानोऽहमवस्थितः ॥ ८३० ॥ तथा—यां यां नारीं प्रपश्यामि, नगरे चारुविग्रहाम् । कुलजामकुलजां वा, यां वा कश्चिन्निवेदयेत् ॥ ८३१ ॥ तां तां सर्वां समाकृष्य, जनेभ्यो बलवत्तया । अन्तःपुरे प्रवेश्याहं, करोमि निजपत्निकाम् ॥ ८३२ ॥ युग्मम् ॥ न जानामि महापापं, नापेक्षे कुला-

नीरदवाहनस्य नृपत्वं

॥ ८३३ ॥ ततो विरक्ताः सामन्ताः, पुरं चोद्वेगमागतम् । तादृशाधमशीलेन,
ञ्छनम् । गणयामि न चाधन्यो, वारकं मन्त्रिमण्डलम् ॥ ८३४ ॥ पदातयोऽपि संपन्ना, मम निन्दाविधायकाः । गुणाः सर्वत्र पूज्यन्ते, सम्बन्धो नात्र कारणम्
लज्जिता मम बान्धवाः ॥ ८३५ ॥ अहं तु तादृशीं लोकाज्जानानोऽप्यात्मगर्हणाम् । महामोहवशीभूतो, निन्द्यकर्मरतः स्थितः ॥ ८३६ ॥ या नीचकुलसंजाता,
॥ ८३५ ॥ अहं तु तादृशीं लोकाज्जानानोऽप्यात्मगर्हणाम् । महामोहवशीभूतो, निन्द्यकर्मरतः स्थितः ॥ ८३६ ॥ या नीचकुलसंजाता,
याश्चागम्याः स्त्रियो नृणाम् । सर्वाः स्वेऽन्तःपुरे क्षिप्तास्ता मया पापकर्मणा ॥ ८३७ ॥ अथासीच्च कनिष्ठो मे, भ्राता नीरदवाहनः ।
लज्जापरो विनीतात्मा, प्रख्यातः सारपौरुषः ॥ ८३८ ॥ ततश्च—मत्तो विरक्तैः सामन्तैः, पौरमन्त्रिमहत्तमैः । एकवाक्यतया सर्व्वैः,
स प्रोक्तो रहसि स्थितः ॥८३९॥ यदुत—अगम्यगमनासक्तो, निर्मर्यादो विमूढधीः । नष्टधर्मा पशोस्तुल्यो, य एवं कुलदूषणः ॥८४०॥
सोऽयं सिंहासनस्येव, सारमेयो नराधमः । अस्य योग्यो न राज्यस्य, कुमार! धनवाहनः ॥ ८४१ ॥ अनेन हारितं राज्यं, वंश्यानां
लाघवं कृतम् । न युज्यते ततोऽस्माकं, विनाशोऽयमुपेक्षितुम् ॥८४२॥ अतोऽयं प्रतिराज्येषु, वृत्तान्तो नावगम्यते । यावत्तावत्कुमारोऽत्र,
राजा भवितुमर्हति ॥ ८४३ ॥ अन्यथा नैष ते भ्राता, न राज्यं न च भूतयः । न वयं न यशो नैव, नगरं भो भविष्यति ॥ ८४४ ॥
एवं चोक्तः स तैर्युक्तियुक्तं नीरदवाहनः । तथैव दृष्टतच्चेष्टः, पर्यालोचमुपागतः ॥ ८४५ ॥ इतश्च मामको भद्रे!, वयस्यो दुष्टचेष्टितैः ।
गाढमुद्वेजितश्चित्ते, नष्टः पुण्योदयस्तदा ॥ ८४६ ॥ पापं चात्यर्गलीभूतं, प्रवृद्धा भावशत्रवः । द्राघीयसी च संजाता, भूयः सा कर्मणः
स्थितिः ॥ ८४७ ॥ ततश्च वचनं तस्य, यल्लोकैर्मन्त्रितं पुरः । तच्चित्ते युक्तियुक्तत्वाल्लग्नं मे भ्रातुरुच्चकैः ॥ ८४८ ॥ ततश्च—एवं भवतु
तेनोक्तैस्तैर्लोकैर्वैरिकैरिव । आगत्याहं दृढं बद्धो, मदिरामदविह्वलः ॥ ८४९ ॥ तावतः परिवर्गस्य, मध्ये जातो न कश्चन । मत्पक्षे स
जनो भद्रे!, येन मा मेति जल्पितम् ॥ ८५० ॥ ततो नरकपालाभैस्तैर्बद्धा नरकोपमे । क्षिप्तोऽहं चारके सुभ्रु!, ज्ञातिमन्त्रिमहत्तमैः

तदा पुनः ॥ ८१४ ॥ तथा—रौद्रार्तध्यानसंयुक्तः, पापात्मा पापचेष्टितः । विहितोऽहं विशालाक्षि!, तेन दुष्टाभिसन्धिना ॥८१५॥ तथाऽन्यैरपि तत्काले, महामोहे समीपगे। ममाविर्भावितं भद्रे!, स्वं स्वं वीर्यं महाभटैः ॥८१६॥ अकलङ्केन मुग्धबालनाम इव निर्भयैः। इत्थं खलीकृतोऽत्यन्तं, तैरहं भावशत्रुभिः ॥ ८१७ ॥ अथान्यदा समायातो, मत्कदर्थनकाम्यया । महामोहनरेन्द्रस्य, समीपे मकरध्वजः ॥ ८१८ ॥ स च स्वीयां रतिं भार्यां, रागकेसरिमन्त्रिणम् । पञ्चमानुपसंयुक्तं, तच तस्य कुटुम्बकम् ॥ ८१९ ॥ एतां सर्वां समासाद्य, सामग्रीं कार्यसिद्धये । संनद्धबद्धकवचस्तदा प्राप्तो मृगेक्षणे! ॥ ८२० ॥ ततस्तुष्टो महामोहो, मकरध्वजमीलनात् । सोऽप्यासाद्य महा-मोहं, परं हर्षमुपागतः ॥८२१॥ ततस्तेन युतः साक्षात्, संनद्धो गन्धवारणः । संपन्नोऽसौ महामोहो, जातो मेऽत्यन्तपापकः ॥८२२॥ शब्दरूपरसस्पर्शगन्धलुब्धोऽन्धसन्निभः । गाढं निर्नष्टसद्बोधः, संजातोऽहं ततस्तदा ॥ ८२३ ॥ गर्ताशूकरसङ्काशो, वि-पयाशुचिकर्दमे । रात्रिंदिवं निमग्नात्मा, स्थितोऽहं विगतत्रपः ॥ ८२४ ॥ भूयसाऽपि कालेन, न भोगैस्तृप्तिमागतः । घृतपा-नेन किं जातः, पीनगण्डोऽत्र वानरः? ॥ ८२५ ॥ भुञ्जानस्य च मे भोगान्, वर्धते भोगतृष्णिका । सुतरामुल्लसत्येव, जलेन वडवानलः ॥ ८२६ ॥ अकलङ्कोपदेशास्ते, शशाङ्ककरनिर्मलाः । तदा मे विस्मृताः सर्वे, महामोहघनावृताः ॥ ८२७ ॥ ततो मां तादृशं दृष्ट्वा, भावशत्रुविचेष्टितम् । न मेऽवसर इत्येवं, गतो दूरं सदागमः ॥ ८२८ ॥ यथाभिमतकामांश्च, संपादयति मे तदा । असौ पुण्योदयोऽहं तु, विमूढस्तं न लक्षये ॥ ८२९ ॥ ततो विमुक्तनिःशेषराज्यकार्यो दिवानिशम् । अन्तःपुरगतः स्त्रैणं, भुञ्जानोऽहमवस्थितः ॥ ८३० ॥ तथा—यां यां नारीं प्रपश्यामि, नगरे चारुविग्रहाम् । कुलजामकुलजां वा, यां वा कश्चिन्निवेदयेत् ॥ ८३१ ॥ तां तां सर्वां समाकृष्य, जनेभ्यो बलवत्तया । अन्तःपुरे प्रवेश्याहं, करोमि निजपत्निकाम् ॥ ८३२ ॥ युग्मम् ॥ न जानामि महापापं, नापेक्षे कुलला-

व्यवहाराख्यं, विहाय नगरं परम् । प्रायः समस्तस्थानेषु, भ्रमितोऽहं महेलया ॥ ८७१ ॥ युक्तः सपरिवारेण, महामोहेन सुन्दरि! । कुर्वाणो निजभार्याज्ञां, क काहं न विनाटितः? ॥ ८७२ ॥ तया परिग्रहेणाहं, संज्ञया निजभार्यया । युक्तेन बहुशो भद्रे!, योनौ योनौ विडम्बितः ॥ ८७३ ॥ यतः—गृहकोकिलिकासर्पमूषिकाकारधारकः । दृष्टो निधानमासाद्य, तन्नाशे विह्वलो मृतः ॥ ८७४ ॥ एवं चानन्तकालं मे, भ्रमतो गजगामिनी । घर्षणाघूर्णनन्यायात्प्रसन्ना भवितव्यता ॥ ८७५ ॥ अन्यच्च—श्रान्ता इव मया सार्धं, भ्रमतोऽनन्तवर्त्मनि । किंचित्ते दुर्बलीभूता, महामोहादयस्तदा ॥ ८७६ ॥ पापं च प्रतनूभूतमीपत्कर्मस्थितिस्तथा । पुनर्ग्रन्थिः समीपस्था, संजाता मे वरानने! ॥ ८७७ ॥ ततो मनुजगत्यन्तः, पाटके भरताभिधे । साकेतेऽहं पुरे नीतो, भवितव्यतया तया ॥ ८७८ ॥ वणिजस्तत्र नन्दस्य, भार्याऽस्ति धनसुन्दरी । जनितस्तत्सुतत्वेन, गुडिकादानयोगतः ॥८७९॥ प्रतिष्ठितं च मे नाम, यथाऽयममृतोदरः । अथ क्रमेण संप्राप्तो, यौवनं काममन्दिरम् ॥ ८८० ॥ दृष्टः सुदर्शनो नाम, सुसाधुः कानने मया । कृपापरीतचित्तेन, कृता मे तेन देशना ॥ ८८१ ॥ ततो भूयो मया भद्रे!, महात्माऽयं सदागमः । विलोकितः समीपस्थस्तस्य साधोर्महात्मनः ॥ ८८२ ॥ किंचिद्भद्रकभावत्वान्नमस्कारादिपाठकः । जातोऽहं श्रावकाकारधारको द्रव्यतस्तदा ॥ ८८३ ॥ ततस्तदनुभावेन, पुरेऽहं विबुधालये । भवचक्रस्थिते नीतो, गुडिकायाः प्रभावतः ॥ ८८४ ॥ तत्र च—भावना व्यन्तरा ज्योतिश्चारिणः कल्पवासिनः । पाटकेषु वसन्त्येते, विबुधाः कुलपुत्रकाः ॥ ८८५ ॥ दशाष्टपञ्चभेदास्ते, त्रयः पूर्वे यथाक्रमम् । कल्पस्थास्तदतीताश्च, द्विभेदास्तुर्यपाटके ॥ ८८६ ॥ कल्पस्था द्वादशावाससंस्थिताः समुदाहृताः । नवपञ्चनिवासस्थास्तदतीताः प्रकीर्तिताः ॥ ८८७ ॥ तत्राद्ये पाटके भद्रे!, जातोऽहं भावनस्तदा । आद्यभेदस्थितेष्वेव, विबुधः कुलपुत्रकः ॥ ८८८ ॥ ततश्च—गतस्य तत्र पद्माक्षि!, विस्मृतो मे सदागमः । स्थितोऽयमपि मां हित्वा, कुर्वाणः

॥ ८५१ ॥ स च संस्थापितो राज्ये, राजा नीरदवाहनः । महाकलकलेनोच्चैर्नृत्यद्भिस्तोषनिर्भरैः ॥ ८५२ ॥ हृष्टाः कुस्वामिनाशेन, तुष्टाः सुस्वामिनो गुणैः । ते पौरसैनिका लोकास्ततः किं किं न कुर्वते ॥ ८५३ ॥ अहं तु चारके तत्र, पुरीषमलपिच्छिले । मूत्रश्लेष्मजाम्यालदुर्गन्धे गर्भसन्निभे ॥ ८५४ ॥ क्षुधा क्षामोदरो बद्धः, परिभूतो विगर्हितः । स्मृतदुश्चेष्टितैः क्रुद्धैर्बालकैरपि ताडितः ॥ ८५५ ॥ अनेकयातनाक्षाते, स्ववर्गेणावधीरितः । प्राप्तः शारीरसंतापं, नरकेष्विव नारकः ॥ ८५६ ॥ महामोहवशीभूते, राज्यभ्रष्टे तथा मयि । यः संजातो मनस्तापः, स व्याख्यातुं न पार्यते ॥ ८५७ ॥ तथाहि—ममेदं विपुलं राज्यं, मामकीना विभूतयः । अधुनाऽन्ये प्रभोक्तार इति शोकेन पीडितः ॥ ८५८ ॥ सुखलालितदेहोऽहमधुना त्वीदृशी गतिः । सर्वस्य परिभूतोऽहमित्यरत्या कदर्थितः ॥ ८५९ ॥ लुम्पन्ति मामकमिदं, रत्नस्वर्णादिकं जनाः । एते हा हा हतोऽस्मीति, बाधितो धनमूर्च्छया ॥८६०॥ सदैवं नरकाकारे, चारके दुःखपूरितः । तत्राहं संस्थितो भद्रे!, सुचिरं पापकर्मणा ॥ ८६१ ॥ परिवारसमेतस्य, महामोहस्य दोषतः । तथाप्यहं न निर्विण्णः, संसाराचारुलोचने! ॥ ८६२ ॥ क्रोधान्धस्तेषु लोकेषु, चित्तकल्लोलदूषितः । रौद्रध्यानानुगो नित्यं, भूरिकालमवस्थितः ॥ ८६३ ॥ अथ जीर्णा क्रमेणैव, गुडिका मे चिरन्तनी । ततो वितीर्णा सा मह्यं, भवितव्यतयाऽपरा ॥ ८६४ ॥ गतः पापिष्ठवासायां, पुरि सप्तमपाटके । अहं तस्याः प्रभावेण, जातः पापिष्ठरूपकः ॥ ८६५ ॥ गृहे तत्राप्रतिष्ठाने, निर्भिन्नो वज्रकण्टकैः । सागराणां त्रयस्त्रिंशद्वसन् कन्दुकलीलया ॥ ८६६ ॥ तदन्ते गुडिकादानाद्भवितव्यतया तया । पश्चाक्षपशुसंस्थानमानीय शफरीकृतः ॥ ८६७ ॥ पुनर्नीतोऽप्रतिष्ठाने, समानीतस्ततोऽप्यहम् । कृतश्च गुडिकादानाच्छार्दूलाकारधारकः ॥ ८६८ ॥ भूयः पापिष्ठवासायां, नीतोऽहं तुर्यपाटके । ततोऽप्यानीय विहितो, मार्जाराकारधारकः ॥ ८६९ ॥ तदेवंविधरूपाणि, जनयन्त्या मुहुर्मुहुः । दुःखसागरविस्तारं, दर्शयन्त्या क्षणे क्षणे ॥ ८७० ॥ तदसं-

प्रस्तावो हन्त मादृशाम् ॥ ९०८ ॥ सद्बोधेनोक्तं—चारु चारूदितं तात!, सम्यक् संलक्षितोऽवधिः । ततो विज्ञापितस्तेन, सद्बोधेन नरेश्वरः ॥ ९०९ ॥ ततश्च—चारित्रधर्मराजेन, वचनात्तस्य मन्त्रिणः । प्रहितो मत्समीपेऽसौ, सम्यग्दर्शननामकः ॥ ९१० ॥ तेन चोक्तं—विद्येयं नीयतां देव!, प्राभृतं कन्यकाऽनघा । तस्य संसारिजीवस्य, येन तोषोऽस्य जायते ॥ ९११ ॥ सद्बोधः प्राह नाद्यापि, प्रस्तावोऽस्या महत्तम! । नयने हन्त विद्यायास्तत्राकर्णय कारणम् ॥ ९१२ ॥ स हि संसारिजीवस्तां, मुग्धबुद्धिर्न भोत्स्यते । विशेषतस्तस्तावत्सामान्येन प्रपत्स्यते ॥ ९१३ ॥ एवं च स्थिते—यावन्न तात्त्विकं रूपं, तवानेनावधारितम् । तावन्न युज्यते दातुमेषा तस्मै सुकन्यका ॥ ९१४ ॥ अज्ञातकुलशीलो हि, कुर्यादस्याः पराभवम् । ततः स्याच्चित्तसंतापो, मादृशां तन्निमित्तकः ॥ ९१५ ॥ ततो गच्छ विना विद्यां, त्वं तावत्तस्य सन्निधौ । कालेन भूयसा रूपं, भोत्स्यते हि स तावकम् ॥ ९१६ ॥ ततश्च—यदा स्यात्तेन विज्ञातं, रूपं तव परिस्फुटम् । तदाऽहमागमिष्यामि, विद्यामादाय तेऽन्तिके ॥ ९१७ ॥ सदागमस्य सानाथ्यं, महामोहादितानवम् । तथा संसारिजीवस्य, सुरस्वादादिवेदनम् ॥ ९१८ ॥ देवे चाभिमुखीभावस्तस्य दर्शनकाम्यया । विद्यया रहितस्यापि, गच्छतस्तत्र ते गुणाः ॥९१९॥ युग्मम् ॥ ततो यदादिशत्यार्यो, यथाऽऽज्ञापयति प्रभुः । इत्युक्त्वा प्रस्थितस्तूर्णं, मत्समीपं महत्तमः ॥९२०॥ इतश्चाहं तदा भद्रे!, नगरे जनमन्दिरे । सूनुरानन्दनन्दिन्योर्जातो नाम्ना विरोचनः ॥९२१॥ ततः संप्राप्ततारुण्यः, कानने चित्तनन्दने । गतस्तत्र मया दृष्टो, धर्मघोषो मुनीश्वरः ॥ ९२२ ॥ इतश्च मे तदा ह्रस्वा, वर्तते कर्मपद्धतिः । महामोहादयो जातास्तनवो भावशत्रवः ॥ ९२३ ॥ ततश्च—प्रणम्य तं महाभागं, निषण्णः शुद्धभूतले । ज्ञातोऽहं भद्रकस्तेन, ज्ञानालोकेन धीमता ॥ ९२४ ॥ किं च—कुर्वता मानसानन्दममृतक्षरणोपमम् । ततो मे कर्तुमारब्धा, मुनिना धर्मदेशना ॥९२५॥ कथम्?—"मनुजजन्म जगत्यतिदुर्लभं, जिनमतं पुनरत्र विशेषतः ।

कालयापनाम् ॥ ८८९ ॥ ततो महर्द्धिसंपन्नः, सार्धं पल्योपमं सुरः । सुखं यथेष्टं भुञ्जानः, स्थितोऽहं चारुरूपया ॥ ८९० ॥ ततस्ते
गुडिकां दत्त्वा, भार्यया तुष्टचित्तया । पुरेऽहं मानवावासे, समानीतः पुनस्तया ॥८९१॥ तत्रापि बन्धुदत्तस्य, वणिजः प्रियदर्शना ।
भार्या तस्याः सुतत्वेन, जातोऽहं बन्धनामकः ॥ ८९२ ॥ संप्राप्तयुवभावेन, सुन्दराख्यो मुनीश्वरः । दृष्टो मया तदभ्यर्णस्थस्य पार्श्वे
सदागमः ॥ ८९३ ॥ शिक्षितं पुनरप्यस्य, सम्बन्धि ज्ञानमल्पकम् । जातश्चाहं सदा भद्रे!, भद्रको भाववर्जितः ॥ ८९४ ॥ ततस्तदनु-
भावेन, भूयोऽहं विबुधालये । महर्द्धिर्विबुधस्तत्र, जातो व्यन्तरपाटके ॥ ८९५ ॥ न नीतो विस्मृतत्वेन, मया तत्र सदागमः । गतेन
मानवावासे, पुनश्च प्रविलोकितः ॥८९६॥ एवं विचरताऽनन्ते, भवचक्रे पुनः पुनः । यथाऽनन्तेन कालेन, मया भार्यानियोगतः ॥८९७॥
अयं सदागमो भद्रे!, महात्मा प्रविलोकितः । अनन्तवारा दृष्टोऽपि, विस्मृतश्च पुनः पुनः ॥ ८९८ ॥ सुगमम् ॥ विस्मृते च पुन-
र्भ्रान्तं, भवचक्रं निरन्तकम् । आसादितः कथंचिच्च, पुनरेष सदागमः ॥ ८९९ ॥ यतः—अनन्तवाराः संपन्नः, श्रावकोऽहं सुलोचने! ।
द्रव्यतो यतिरूपश्च, तत्र दृष्टः सदागमः ॥ ९०० ॥ विमुच्येमं महाभागं, भूयो भूयोऽन्तरान्तरा । भ्रान्तः समस्तस्थानेषु, कृत्वा नाना
विडम्बनाः ॥ ९०१ ॥ कुतीर्थिकयतिश्चाहं, सदागमविदूषकः । अनन्तवाराः संपन्नो, भवचक्रे निरन्तके ॥ ९०२ ॥ अन्यच्च भ्रमतस्तत्र,
भवचक्रे ममाखिले । क्वचिद्दीर्घा क्वचिद्ध्रस्वा, संजाता कर्मणः स्थितिः ॥ ९०३ ॥ क्वचिच्च अबला जाता, महामोहादिराश्रयः । क्वचित्स-
दागमो जातः, प्रबलस्तन्निवारकः ॥ ९०४ ॥ ततश्चानन्तवाराभिर्यावदभ्यासमागतः । अयं सदागमस्तावज्जातं यत्तन्निबोध मे ॥९०५॥
सा किंचिन्निर्मलीभूता, चित्तवृत्तिर्महाटवी । ततश्चावसरं ज्ञात्वा, प्रस्थितः स महत्तमः ॥ ९०६ ॥ उक्तश्चानेन सद्बोधो, मत्समीपागमे-
च्छया । आर्य! विज्ञाप्यतां देवः, साम्प्रतं गम्यतां मया ॥ ९०७ ॥ यस्त्वया पूर्वनिर्दिष्टो, देवस्याग्रे नरोत्तम! । सोऽधुना वर्तते क्षमः,

बन्धभवः भवभ्रमश्च

सम्यग्दर्शनागमः

प्रस्तावो हन्त मादृशाम् ॥ ९०८ ॥ सद्बोधेनोक्तं—चारु चारूदितं तात!, सम्यक् संलक्षितोऽवधिः । ततो विज्ञापितस्तेन, सद्बोधेन नरेश्वरः ॥ ९०९ ॥ ततश्च—चारित्रधर्मराजेन, वचनात्तस्य मन्त्रिणः । प्रहितो मत्समीपेऽसौ, सम्यग्दर्शननामकः ॥ ९१० ॥ तेन चोक्तं—विद्येयं नीयतां देव!, प्राभृतं कन्यकाऽनघा । तस्य संसारिजीवस्य, येन तोषोऽस्य जायते ॥ ९११ ॥ सद्बोधः प्राह नाद्यापि, प्रस्तावोऽस्या महत्तम! । नयने हन्त विद्यायास्तत्राकर्णय कारणम् ॥ ९१२ ॥ स हि संसारिजीवस्तां, मुग्धबुद्धिर्न भोत्स्यते । विशेषतस्तत्स्तावत्सामान्येन प्रपत्स्यते ॥ ९१३ ॥ एवं च स्थिते—यावन्न तात्त्विकं रूपं, तवानेनावधारितम् । तावन्न युज्यते दातुमेषा तस्मै सुकन्यका ॥ ९१४ ॥ अज्ञातकुलशीलो हि, कुर्यादस्याः पराभवम् । ततः स्याच्चित्तसंतापो, मादृशां तन्निमित्तकः ॥ ९१५ ॥ ततो गच्छ विना विद्यां, त्वं तावत्तस्य सन्निधौ । कालेन भूयसा रूपं, भोत्स्यते हि स तावकम् ॥ ९१६ ॥ ततश्च—यदा स्यात्तेन विज्ञातं, रूपं तव परिस्फुटम् । तदाऽहमागमिष्यामि, विद्यामादाय तेऽन्तिके ॥ ९१७ ॥ सदागमस्य सानाथ्यं, महामोहादितानवम् । तथा संसारिजीवस्य, सुखस्वादादिवेदनम् ॥ ९१८ ॥ देवे चाभिमुखीभावस्तस्य दर्शनकाम्यया । विद्यया रहितस्यापि, गच्छतस्तत्र ते गुणाः ॥९१९॥ युग्मम् ॥ ततो यदादिशत्यार्यो, यथाऽऽज्ञापयति प्रभुः । इत्युक्त्वा प्रस्थितस्तूर्णं, मत्समीपं महत्तमः ॥९२०॥ इतश्चाहं तदा भद्रे!, नगरे जनमन्दिरे । सूनुरानन्दनन्दिन्योर्जातो नाम्ना विरोचनः ॥९२१॥ ततः संप्राप्ततारुण्यः, कानने चित्तनन्दने । गतस्तत्र मया दृष्टो, धर्मघोषो मुनीश्वरः ॥ ९२२ ॥ इतश्च मे तदा ह्रस्वा, वर्तते कर्मपद्धतिः । महामोहादयो जातास्तनवो भावशत्रवः ॥ ९२३ ॥ ततश्च—प्रणम्य तं महाभागं, निषण्णः शुद्धभूतले । ज्ञातोऽहं भद्रकस्तेन, ज्ञानालोकेन धीमता ॥ ९२४ ॥ किं च—कुर्वता मानसानन्दममृतक्षरणोपमम् । ततो मे कर्तुमारब्धा, मुनिना धर्मदेशना ॥९२५॥ कथम्?—"मनुजजन्म जगत्यतिदुर्लभं, जिनमतं पुनरत्र विशेषतः ।

कालयापनाम् ॥ ८८९ ॥ ततो महर्द्धिसंपन्नः, सार्धं पल्योपमं सुरः । सुखं यथेष्टं भुञ्जानः, स्थितोऽहं पापशोदया ॥ ८९० ॥ मदन्ते
गुडिकां दत्त्वा, भार्यया तुष्टचित्तया । पुरेऽहं मानवावासे, ममानीतः पुनस्तया ॥८९१॥ तत्रास्ति पद्मदत्तस्य, वणिजः प्रियदर्शना ।
भार्या तस्याः सुतत्वेन, जातोऽहं वन्धनामकः ॥ ८९२ ॥ संप्राप्तयुवभावेन, सुन्दराख्यो मुनीश्वरः । दृष्टो मया धर्मस्तस्य पार्श्वे
सदागमः ॥ ८९३ ॥ शिक्षितं पुनरप्यस्य, सम्बन्धि ज्ञानमल्पकम् । जातश्चाहं तदा भद्रे!, भक्तो भावर्जितः ॥ ८९४ ॥ ततस्तदनु-
भावेन, भूयोऽहं विबुधालये । महर्द्धिर्विबुधस्तत्र, जातो व्यन्तरपाटके ॥ ८९५ ॥ न नीतो विस्मृतत्वेन, मया तत्र सदागमः । अनेन
मानवावासे, पुनश्च प्रविलोकितः ॥८९६॥ एवं विचरताऽनन्ते, भवचक्रे पुनः पुनः । तथाऽनन्तेन कालेन, मया भार्यानियोगतः ॥८९७॥
अयं सदागमो भद्रे!, महात्मा प्रविलोकितः । अनन्तवारा दृष्टोऽपि, विस्मृतश्च पुनः पुनः ॥ ८९८ ॥ भ्रमन् ॥ विस्मृते च पुन-
र्भ्रान्तं, भवचक्रं निरन्तकम् । आसादितः कथंचिच्च, पुनरेव सदागमः ॥ ८९९ ॥ यतः—अनन्तवाराः संपन्नः, भावकोऽहं सुलोचने! ।
द्रव्यतो यतिरूपश्च, तत्र दृष्टः सदागमः ॥ ९०० ॥ विमुच्येमं महाभागं, भूयो भूयोऽन्तरान्तरा । भ्रान्तः समस्तस्थानेषु, कृता नाना
विडम्बनाः ॥ ९०१ ॥ कुतीर्थिकयतिश्चाहं, सदागमविदूषकः । अनन्तवाराः संपन्नो, भवचक्रे निरन्तके ॥ ९०२ ॥ अन्यच्च भ्रमतस्तत्र,
भवचक्रे ममाखिले । क्वचिद्दीर्घा क्वचिद्ध्रस्वा, संजाता कर्मणः स्थितिः ॥ ९०३ ॥ क्वचिच्च प्रबला जाता, महामोहादिदायकः । क्वचित्स-
दागमो जातः, प्रबलस्तन्निवारकः ॥ ९०४ ॥ ततश्चानन्तवाराभिर्यावदभ्यासमागतः । अयं सदागमस्तावज्जातं यत्तन्निबोध मे ॥ ९०५ ॥
सा किंचिन्निर्मलीभूता, चित्तवृत्तिर्महाटवी । ततश्चावसरं ज्ञात्वा, प्रस्थितः स महत्तमः ॥ ९०६ ॥ उक्तश्चानेन सद्बोधो, मत्समीपागमे-
च्छया । आर्य! विज्ञाप्यतां देवः, साम्प्रतं गम्यतां मया ॥ ९०७ ॥ यस्त्वया पूर्वनिर्दिष्टो, देवस्यापि नरोत्तम! । सोऽधुना वर्तते दूतः,

वन्धभवः भवभ्रमश्च

सम्यग्दर्शनागमः

नज्ञानकारणम् । गुरवः केवलं तस्यां, भवन्ति सहकारिणः ॥ ९३३ ॥ तथाहि—अकलङ्के तथा लमे, बोधार्थं मे सकोविदे । न श्रद्धानं
ममोत्पन्नं, तदा यत्नशतैरपि ॥ ९३४ ॥ ततः परं पुनर्जातोऽनन्तवारा वरानने! । सदागमेन सम्बन्धः, श्रद्धाशून्यस्तथाप्यभूत् ॥ ९३५ ॥
अतो यदा यदा पुंसो, यावती योग्यता भवेत् । तदा तदा भवत्यस्य, तावानेव गुणोद्भवः ॥ ९३६ ॥ अतः श्रद्धानमात्रं मे, सूक्ष्मज्ञा-
नविवर्जितम् । धर्मघोषोपदेशैस्तैः, संजातं योग्यतानुगम् ॥ ९३७ ॥ अन्यच्च—पल्योपमपृथक्त्वे तु, क्षीणे कर्मस्थितेस्तदा । गृहिधर्मो
मया दृष्टः, सामान्यान्न विशेषतः ॥ ९३८ ॥ पालितानि तदादेशाद्व्रतानि नियमास्तथा । केचित्तदा मया भद्रे!, श्रद्धासंशुद्धबुद्धिना
॥ ९३९ ॥ ततस्तदनुभावेन, सत्पुरे विबुधालये । कल्पवासिषु नीतोऽहं, गुडिकादानपूर्वकम् ॥ ९४० ॥ अथ सौधर्मकल्पेऽहं, भास्व-
राकारधारकः । समुत्थितः क्षणार्धेन, शयनात्तच्च कीदृशम् ? ॥९४१॥—दिव्यपल्यङ्कसत्तूलीरचितं स्पर्शपेशलम् । कोमलामलसच्चेलच्छा-
दितं चित्तनन्दनम् ॥ ९४२ ॥ सुमनोगन्धसद्धूपलसदामोदसुन्दरम् । दिव्यांशुकवरोल्लोचदृष्टिगोचरबन्धुरम् ॥ ९४३ ॥ युग्मम् । तत्र
चोद्वेल्लमानेन, बाहुयुग्मेन विस्मितः । किरीटकटकेयूरहारकुण्डलभूषितः ॥ ९४४ ॥ भूपाङ्गरागताम्बूलवनमालाविराजितः । उपविष्टः
क्षणाज्जातो, द्योतिताखिलदिक्पथः ॥ ९४५ ॥ ततोऽलं जय नन्देति, जय भद्रेति भाषिणः । सलेखा ललनालोका, लोललोचनचारवः
॥९४६॥ स्तुवन्तो मां मनोहारिवचनैः कर्णपेशलैः । देवोऽसि स्वामिकोऽस्माकमिति किङ्करतां गताः ॥९४७॥ युग्मम् ॥ ततोऽहं विस्मयो-
त्फुल्ललोचनः पर्यचिन्तयम् । तां समृद्धिं विलोक्येदं, किं मया सुकृतं कृतम् ? ॥ ९४८ ॥ ततः प्रादुरभूज्ज्ञानं, विमलं विमलेक्षणे! ।
मया विरोचनावस्थाऽनेन सर्वाऽवधारिता ॥ ९४९ ॥ अत्रान्तरे समायातौ, महत्तमसदागमौ । तौ च दृष्ट्वा मया ज्ञातं, माहात्म्यमन-
योरिदम् ॥ ९५० ॥ ततस्तौ पूर्ववद्भद्रे!, प्रतिपन्नौ स्वबान्धवौ । कृतं चोत्थाय निःशेषं, कर्तव्यं विबुधोचितम् ॥ ९५१ ॥ तथाहि—

सुन्दर-स्थितिप्राप्तिः सौधर्मभवः

"तदिदमाप्य नरेण सुमेधसा, विढपनीयमतोऽपि परं पदम् ॥ ९२६ ॥ इतरथा पुनरेव निरन्वके, निपतितस्य सुभीमभवाम्बके । सुदाल-
"शम्बलमुत्कलखादनं, ननु विनाऽतुलदुःखपरंपरा ॥ ९२७ ॥ इदमवेत्य जनेन विजानता, कुशलकर्म भवोदधितारकम् । इह विधेयमहो
"विफलं मुधा, न करणीयमिदं नरजन्मकम् ॥ ९२८ ॥" अत्रान्तरे प्रत्यक्षीभूतो मे तस्य मुनेः समीपे भूयोऽपि भगवानयं सदागमः,
ततो बुद्धं मया तस्य मुनेर्वचनं, अभिहितं च—यन्मया कर्तव्यं तदादिशन्तु भगवन्तः, मुनिनोक्तं—भद्राकर्णय "अवधीरणीयो भवता
"भवप्रपञ्चः आराधनीयो विलीनरागद्वेषमोहोऽनन्तज्ञानदर्शनवीर्यानन्दपरिपूर्णः परमात्मा वन्दनीयास्तदुपदिष्टमार्गवर्तिनो भगवन्तः
"साधवः प्रतिपत्तव्यानि जीवाजीवपुण्यपापास्रवसंवरनिर्जराबन्धमोक्षलक्षणानि नव तत्त्वानि सर्वथा पेयं जिनवचनामृतं नेयं तदङ्गा-
"ङ्गीभावेन अनुप्रेयमात्महितं उपचेयं कुशलानुबन्धि कुशलं विधेयं निष्कलङ्कमन्तःकरणं हेयं कुविकल्पजल्पजालं अवसेयं भगवद्वचनसारं
"विज्ञेयं रागादिदोषवृन्दं लेयं सुगुरुसदुपदेशभेषजं देयं सततं सदाचरणे मानसं अवगेयं दुर्जनप्रणीतकुमतवचनं निमेयं महापुरुषवर्ग-
"मध्ये स्वरूपं स्थेयं निष्प्रकम्पचित्तेने"ति एवं चोपदिशति मधुरभाषिणि भगवति धर्मघोषतपस्विनि संप्राप्तोऽसौ सम्यग्दर्शननामा मह-
त्तमः विलोकितो दुर्भेदकर्मग्रन्थिभेदद्वारेणासौ मया ततः संजातं मे तत्र मुनिवचने स्वरुच्या श्रद्धानं प्रतिपन्नोऽसौ हितबन्धुबुद्ध्या मह-
त्तमः, अभिहितो मुनिवरः—यदाज्ञापयति नाथस्तदेवाहं करिष्ये, ततोऽभिवन्द्य तं मुनिवरं गतोऽहं स्वभवने । ततः प्रभृति जातोऽहं,
सम्यग्दर्शनसंयुतः । तत्त्वश्रद्धानपूतात्मा, विशिष्टज्ञानवर्जितः ॥ ९२९ ॥ तदेव सत्यं निःशङ्कं, यज्जिनेन्द्रैः प्रवेदितम् । एतावन्मात्रतुष्टो-
ऽहं, तदा जातो वरानने! ॥ ९३० ॥ सदागमो हि विज्ञानं, स्वमावेदयते तदा । केवलं सूक्ष्मभावेषु, न मे बोधः प्रवर्तते ॥ ९३१ ॥
न संजातास्तदा सूक्ष्मविविक्तज्ञानहेतवः । गुरवः पटुवाचोऽपि, विना मे निजयोग्यताम् ॥९३२॥ यतः—स्वयोग्यतैव पार्वङ्गि!, श्रद्धा-

नज्ञानकारणम् । गुरवः केवलं तस्यां, भवन्ति सहकारिणः ॥ ९३३ ॥ तथाहि—अकलङ्के तथा लग्ने, बोधार्थं मे सकोविदे । न श्रद्धानं
ममोत्पन्नं, तदा यत्नशतैरपि ॥ ९३४ ॥ ततः परं पुनर्जातोऽनन्तवारा वरानने! । सदागमेन सम्बन्धः, श्रद्धाशून्यस्तथाप्यभूत् ॥ ९३५ ॥
अतो यदा यदा पुंसो, यावती योग्यता भवेत् । तदा तदा भवत्यस्य, तावानेव गुणोद्भवः ॥ ९३६ ॥ अतः श्रद्धानमात्रं मे, सूक्ष्मज्ञा-
नविवर्जितम् । धर्मघोषोपदेशैस्तैः, संजातं योग्यतानुगम् ॥ ९३७ ॥ अन्यच्च—पल्योपमपृथक्त्वे तु, क्षीणे कर्मस्थितेस्तदा । गृहिधर्मो
मया दृष्टः, सामान्यान्न विशेषतः ॥ ९३८ ॥ पालितानि तदादेशाद्व्रतानि नियमास्तथा । केचित्तदा मया भद्रे!, श्रद्धासंशुद्धबुद्धिना
॥ ९३९ ॥ ततस्तदनुभावेन, सत्पुरे विबुधालये । कल्पवासिपु नीतोऽहं, गुडिकादानपूर्वकम् ॥ ९४० ॥ अथ सौधर्मकल्पेऽहं, भास्व-
राकारधारकः । समुत्थितः क्षणार्धेन, शयनात्तच्च कीदृशम्? ॥९४१॥—दिव्यपल्यङ्कसत्तूलीरचितं स्पर्शपेशलम् । कोमलामलसच्चेलच्छा-
दितं चित्तनन्दनम् ॥ ९४२ ॥ सुमनोगन्धसङ्कूपलसदामोदसुन्दरम् । दिव्यांशुकवरोल्लोचदृष्टिगोचरबन्धुरम् ॥ ९४३ ॥ युग्मम् । तत्र
चोद्वेल्लमानेन, बाहुयुग्मेन विस्मितः । किरीटकटकेयूरहारकुण्डलभूषितः ॥ ९४४ ॥ भूषाङ्गरागताम्बूलवनमालाविराजितः । उपविष्टः
क्षणाज्जातो, द्योतिताखिलदिक्पथः ॥ ९४५ ॥ ततोऽलं जय नन्देति, जय भद्रेति भाषिणः । सलेखा ललनालोका, लोललोचनचारवः
॥९४६॥ स्तुवन्तो मां मनोहारिवचनैः कर्णपेशलैः । देवोऽसि स्वामिकोऽस्माकमिति किङ्करतां गताः ॥९४७॥ युग्मम् ॥ ततोऽहं विस्मयो-
त्फुल्ललोचनः पर्यचिन्तयम् । तां समृद्धिं विलोक्येदं, किं मया सुकृतं कृतम्? ॥ ९४८ ॥ ततः प्रादुरभूज्ज्ञानं, विमलं विमलेक्षणे! ।
मया विरोचनावस्थाऽनेन सर्वाऽवधारिता ॥ ९४९ ॥ अत्रान्तरे समायातौ, महत्तमसदागमौ । तौ च दृष्ट्वा मया ज्ञातं, माहात्म्यमन-
योरिदम् ॥ ९५० ॥ ततस्तौ पूर्ववद्भद्रे!, प्रतिपन्नौ स्वबान्धवौ । कृतं चोत्थाय निःशेषं, कर्तव्यं विबुधोचितम् ॥ ९५१ ॥ तथाहि—

सुन्दरस्थितिप्राप्तिः सौधर्मभवः

"तदिदमाप्य नरेण सुमेधसा, विढपनीयमतोऽपि परं पदम् ॥ ९२६ ॥ इतरथा पुनरेव निरन्वके, निपतितस्य सुभीमभवाम्बके । कुशल-
"शम्बलमुत्कलरादनं, ननु विनाऽतुलदुःखपरंपरा ॥ ९२७ ॥ इदमवेत्य जनेन विजानता, कुशलकर्म भवोदधितारकम् । इह विधेयमहो
"विफलं मुधा, न करणीयमिदं नरजन्मकम् ॥ ९२८ ॥" अत्रान्तरे प्रत्यक्षीभूतो मे तस्य मुनेः समीपे भूयोऽपि भगवानयं सदागमः,
ततो बुद्धं मया तस्य मुनेर्वचनं, अभिहितं च—यन्मया कर्तव्यं तदादिशन्तु भगवन्तः, मुनिनोक्तं—भद्राकर्णय "अवधारणीयो भवता
"भवप्रपञ्चः आराधनीयो विलीनरागद्वेषमोहोऽनन्तज्ञानदर्शनवीर्यानन्दपरिपूर्णः परमात्मा वन्दनीयास्तदुपदिष्टमार्गवर्तिनो भगवन्तः
"साधवः प्रतिपत्तव्यानि जीवाजीवपुण्यपापास्रवसंवरनिर्जराबन्धमोक्षलक्षणानि नव तत्त्वानि सर्वथा पेयं जिनवचनामृतं नेयं तदङ्गा-
"ङ्गीभावेन अनुष्ठेयमात्महितं उपचेयं कुशलानुबन्धि कुशलं विधेयं निष्कलङ्कमन्तःकरणं हेयं कुविकल्पजल्पजालं अवसेयं भगवद्वचनसारं
"विज्ञेयं रागादिदोषवृन्दं लेयं सुगुरुसदुपदेशभेषजं देयं सततं सदाचरणे मानसं अवगेयं दुर्जनप्रणीतकुमतवचनं निमेयं महापुरुषवर्ग-
"मध्ये स्वरूपं स्थेयं निष्प्रकम्पचित्तेने"ति एवं चोपदिशति मधुरभाषिणि भगवति धर्मघोषतपस्विनि संप्राप्तोऽसौ सम्यग्दर्शननामा मह-
त्तमः विलोकितो दुर्भेदकर्मग्रन्थिभेदद्वारेणासौ मया ततः संजातं मे तत्र मुनिवचने स्वरुच्या श्रद्धानं प्रतिपन्नोऽसौ हितबन्धुबुद्ध्या मह-
त्तमः, अभिहितो मुनिवरः—यदाज्ञापयति नाथस्तदेवाहं करिष्ये, ततोऽभिवन्द्य तं मुनिवरं गतोऽहं स्वभवने । ततः प्रभृति जातोऽहं,
सम्यग्दर्शनसंयुतः । तत्त्वश्रद्धानपूतात्मा, विशिष्टज्ञानवर्जितः ॥ ९२९ ॥ तदेव सत्यं निःशङ्कं, यज्जिनेन्द्रैः प्रवेदितम् । एतावन्मात्रतुष्टो-
ऽहं, तदा जातो वरानने! ॥ ९३० ॥ सदागमो हि विज्ञानं, स्वमावेदयते तदा । केवलं सूक्ष्मभावेषु, न मे बोधः प्रवर्तते ॥ ९३१ ॥
न संजातास्तदा सूक्ष्मविविक्तज्ञानहेतवः । गुरवः पटुवाचोऽपि, विना मे निजयोग्यताम् ॥९३२॥ यतः—स्वयोग्यतैव पार्थङ्कि!, श्रद्धा-

स्यस्यापि संपन्नौ, ममेमौ स्मृतिगोचरौ । भुक्तं च सुचिरं दिव्यं, सुखं तत्र मयाऽतुलम् ॥ ९७० ॥ ततो मनुजगत्यन्तः, पाटके काञ्चने पुरे । आगतस्य महामोहदोषतो विस्मृताविमौ ॥ ९७१ ॥ इत्थं सङ्ख्याधिका वारा, दृष्टो दृष्टः पुनः पुनः । सदागमयुतो भद्रे!, नष्टोऽसौ मे महत्तमः ॥ ९७२ ॥ यतः—विना विरतिभावेन, सङ्ख्यातीतेषु धामसु । श्रद्धानमात्रसंतुष्टो, जातोऽहं श्रावकः पुरा ॥ ९७३ ॥ तथा—ऋजुत्वादुपरोधाद्वा, कचिच्छ्रद्धानसंयुतः । जातः श्रमणवेषोऽहं, विरत्या रहितो हृदि ॥ ९७४ ॥ अन्यच्च—सङ्ख्यातीता मया वारा, यत्र यत्र विलोकितः । महत्तमः पुनर्दृष्टस्तत्र तत्र सदागमः ॥ ९७५ ॥ गृहिधर्मेऽपि तन्मूले, दृष्टः सामान्यरूपतः । कचित्कचिन्न दृष्टोऽपि, स महत्तमपार्श्वगः ॥ ९७६ ॥ सम्यग्दर्शनयुक्तौ च, गृहिधर्मसदागमौ । सामान्यरूपौ तौ भद्रेऽसङ्ख्यवारा विलोकितौ ॥ ९७७ ॥ तदेते बहुशो दृष्टास्त्रयोऽपि वरबान्धवाः । जाताश्च सुखदास्तत्र, विमुक्ताश्चान्तरान्तरा ॥ ९७८ ॥ अन्यच्च—दृष्टश्च केवलोऽप्येषोऽनन्तवाराः सदागमः । न त्वनेन विना दृष्टः, स सम्यग्दर्शनः क्वचित् ॥ ९७९ ॥ अन्यच्च—यत्र यत्र समीपस्थः, संजातो मे महत्तमः । तत्र तत्र वयस्यो मे, जातः पुण्योदयः पुरा ॥ ९८० ॥ तेन चोत्पादिताः सर्वा, यथेष्टा भोगसम्पदः । वसतो मानवावासे, पुरे च विबुधालये ॥ ९८१ ॥ तथा—स्थिता कर्मस्थितिर्लघ्वी, भीतभीताश्च शत्रवः । अन्तर्लीनाः स्थिता भद्रे!, महामोहादयस्तथा ॥ ९८२ ॥ यत्र यत्र पुनर्जाताः, प्रबला भावशत्रवः । मत्तः पुण्योदयो नष्टस्तत्र तत्र वरानने! ॥ ९८३ ॥ नष्टे च तत्र जाता मे, सर्वा दुःखपरंपरा । भ्रमितोऽनन्तकालं च, भवितव्यतया तया ॥ ९८४ ॥ तथा—स्थितिर्द्राघीयसी जाता, कर्मणः क्लिष्टतां गतम् । मानसं च पुनर्जातं, तत्त्वश्रद्धानवर्जितम् ॥ ९८५ ॥ अत एवोत्कटा जाता, यत्र यत्र महारयः । ते मत्तस्तत्र तत्रैतौ, दूरीभूतौ सुबान्धवौ ॥ ९८६ ॥ विशेषः पुनरेषोऽत्र, कथ्यते ते निराकृतः । स मिथ्यादर्शनाख्येन, सम्यग्दर्शननामकः ॥ ९८७ ॥ ज्ञानसंवरणेनापि,

विविधरत्नमुदीधितिरञ्जिते, विकचनीरजखण्डसुमण्डिते । गुरुनितम्बपयोधरचारुभिः, सह वधूभिरमन्नि सरोवरे ॥ ९५२ ॥ तदनु निर्मलहाटकनिर्मितं, विशदरत्नविराजितकुट्टिमम् । लघु सलीलमवाप्य जिनालयं, मुदृढभक्ति कृतं जिनवन्दनम् ॥ ९५३ ॥ अथ मुनिर्मलपत्रकसञ्चयं, मणिमयं जिनभाषितबन्धुरम् । पुलककारि रसेन तु वाचितं, लघु विपाट्य मनोरमपुस्तकम् ॥ ९५४ ॥ ततो यथेष्टशब्दादिसंभोगमुदिताशयः । सागरद्वितयं तत्र, किंचिदूनं व्यवस्थितः ॥ ९५५ ॥ तदन्ते मानवावासमानीय विहितस्तया । आभीरोऽहं कलन्दाख्यः, सूनुर्मदनरेणयोः ॥ ९५६ ॥ इतश्च—तत्रायातस्य चार्वङ्गि!, मम तौ पाश्चात्यभ्यवौ । नागतौ विस्मृतत्वेन, महत्तमसदागमौ ॥ ९५७ ॥ सुतरां विस्मृतो भद्रे!, न दृष्टश्च तदा मया । गृहिधर्मो यतस्ताभ्यां, स निर्गुण्ठो न दृश्यते ॥ ९५८ ॥ प्राचीनपासनाबन्धात्, केवलं पापभीरुकः । स्थितो भद्रकभावेन, तत्राहं हंसगामिनि! ॥ ९५९ ॥ पुनस्तदनुभावेन, सत्पुरे विबुधालये । ज्योतिश्चारिषु नीतोऽहं, गुडिकादानपूर्वकम् ॥ ९६० ॥ स्थितस्तत्रापि सद्भोगसम्पत्तिप्रीणितेन्द्रियः । सुचिरं किं तु तौ दृष्टौ, महामोहपरिग्रहौ ॥ ९६१ ॥ संजातश्च तयोर्भूयः, पक्षपातो बृहत्तरः । नितरां विस्मृतावेतौ, महत्तमसदागमौ ॥ ९६२ ॥ ततो जीर्णावसाने तां, वितीर्य गुडिकां पुनः । पञ्चाक्षपशुसंस्थाने, नीतोऽहं रुष्टया तया ॥ ९६३ ॥ विहितो दर्दुराकारधारकः केलिशीलया । ततः परं पुनर्भूरि, भ्रमितोऽर्दवितर्दकम् ॥ ९६४ ॥ नानाविधेषु स्थानेषु, भ्रमयित्वा स्वभार्यया । आनीय मानवावासं, पुरे काम्पिल्यनामके ॥ ९६५ ॥ धराया वसुबन्धोश्च, सूनुर्वासवनामकः । कृतोऽहं कृतसत्कर्मा, राजपुत्रो मनोरमः ॥ ९६६ ॥ तत्र चासाद्य शान्त्याख्यं, सूरिं सद्धर्मदेशकम् । दृष्टाविमौ पुनर्भद्रे!, महत्तमसदागमौ ॥ ९६७ ॥ ततः परिचयादाभ्यां, तनूभूताः पुनर्मम । शत्रवः सुहृदाभासा, महामोहादयस्तदा ॥ ९६८ ॥ अथाहमनयोः प्राप्य, माहात्म्यं चारुभाषिणि! । द्वितीयकल्पे संप्राप्तः, सत्पुरे विबुधालये ॥ ९६९ ॥ तत्र-

आभीरभवः

शान्तिसूरेर्वासवस्य बोधः उद्यता च

स्यस्यापि संपन्नौ, ममेमौ स्मृतिगोचरौ । भुक्तं च सुचिरं दिव्यं, सुखं तत्र मयाऽतुलम् ॥ ९७० ॥ ततो मनुजगत्यन्तः, पाटके काञ्चने पुरे । आगतस्य महामोहदोषतो विस्मृताविमौ ॥ ९७१ ॥ इत्थं सङ्ख्याधिका वारा, दृष्टो दृष्टः पुनः पुनः । सदागमयुतो भद्रे!, नष्टोऽसौ मे महत्तमः ॥ ९७२ ॥ यतः—विना विरतिभावेन, सङ्ख्यातीतेषु धामसु । श्रद्धानमात्रसंतुष्टो, जातोऽहं श्रावकः पुरा ॥ ९७३ ॥ तथा—ऋजुत्वादुपरोधाद्वा, कश्चिच्छ्रद्धानसंयुतः । जातः श्रमणवेषोऽहं, विरत्या रहितो हृदि ॥ ९७४ ॥ अन्यच्च—सङ्ख्यातीता मया वारा, यत्र यत्र विलोकितः । महत्तमः पुनर्दृष्टस्तत्र तत्र सदागमः ॥ ९७५ ॥ गृहिधर्मेऽपि तन्मूले, दृष्टः सामान्यरूपतः । कचित्कचिन्न दृष्टोऽपि, स महत्तमपार्श्वगः ॥ ९७६ ॥ सम्यग्दर्शनयुक्तौ च, गृहिधर्मसदागमौ । सामान्यरूपौ तौ भद्रेऽसङ्ख्यवारा विलोकितौ ॥ ९७७ ॥ तदेते बहुशो दृष्टास्त्रयोऽपि वरबान्धवाः । जाताश्च सुखदास्तत्र, विमुक्ताश्चान्तरान्तरा ॥ ९७८ ॥ अन्यच्च—दृष्टश्च केवलोऽप्येषोऽनन्तवाराः सदागमः । न त्वनेन विना दृष्टः, स सम्यग्दर्शनः कचित् ॥ ९७९ ॥ अन्यच्च—यत्र यत्र समीपस्थः, संजातो मे महत्तमः । तत्र तत्र वयस्यो मे, जातः पुण्योदयः पुरा ॥ ९८० ॥ तेन चोत्पादिताः सर्वा, यथेष्टा भोगसम्पदः । वसतो मानवावासे, पुरे च विबुधालये ॥ ९८१ ॥ तथा—स्थिता कर्मस्थितिर्लघ्वी, भीतभीताश्च शत्रवः । अन्तर्लीनाः स्थिता भद्रे!, महामोहादयस्तथा ॥ ९८२ ॥ यत्र यत्र पुनर्जाताः, प्रबला भावशत्रवः । मत्तः पुण्योदयो नष्टस्तत्र तत्र वरानने! ॥ ९८३ ॥ नष्टे च तत्र जाता मे, सर्वा दुःखपरंपरा । भ्रमितोऽनन्तकालं च, भवितव्यतया तया ॥ ९८४ ॥ तथा—स्थितिर्द्राघीयसी जाता, कर्मणः क्लिष्टतां गतम् । मानसं च पुनर्जातं, तत्त्वश्रद्धानवर्जितम् ॥ ९८५ ॥ अत एवोत्कटा जाता, यत्र यत्र महारयः । ते मत्तस्तत्र तत्रैतौ, दूरीभूतौ सुबान्धवौ ॥ ९८६ ॥ विशेषः पुनरेषोऽत्र, कथ्यते ते निराकृतः । स मिथ्यादर्शनाख्येन, सम्यग्दर्शननामकः ॥ ९८७ ॥ ज्ञानसंवरणेनापि,

दूरं नीतः सदागमः । क्वचित्तावपि निर्जित्य, ताभ्यामपि निराकृतौ ॥ ९८८ ॥ एवं चानन्तकालं ते, जयभङ्गपरायणाः । देशकालभटं प्राप्य, जाता भद्रे! परस्परम् ॥ ९८९ ॥ अन्यच्च—मामकः पक्षपातोऽभूद्ययोरेव विशेषतः । तयोरेव तदा जातो, जयो भङ्गस्तदन्ययोः ॥ ९९० ॥ अन्यदा मानवावासमध्यवर्तिनि सुन्दरे । पुरे सोपारके पत्न्या, नीतोऽहं नीरजेक्षणे! ॥ ९९१ ॥ वणिजः शालिभद्रस्य, भार्याऽस्ति कनकप्रभा । जातस्तस्याः सुतोऽस्मीति, तत्र नाम्ना विभूषणः ॥ ९९२ ॥ अथ सूरिं सुधाभूतमासाद्य शुभकानने । पुनर्दृष्टौ मया भद्रे!, महत्तमसदागमौ ॥ ९९३ ॥ ततश्च—तत्त्वश्रद्धानसंपन्नो, भावतो विरतिं विना । जातो गुरूपरोधेन, श्रमणोऽहं तदाऽनघे! ॥ ९९४ ॥ ततो गृहीतलिङ्गस्य, साधुमध्येऽपि तिष्ठतः । जातं मे कर्मदोषेण, वैभाप्यनिरतं मनः ॥ ९९५ ॥ ततः प्रबलतां प्राप्ता, महामोहादयः पुनः । जातौ च भावतो दूरे, महत्तमसदागमौ ॥ ९९६ ॥ ततो निमित्तमासाद्य, निमित्तविरहेण वा । स्वभावादेव सम्पन्नस्तदाऽहं परनिन्दकः ॥९९७॥ तपस्विनां सुशीलानां, सदनुष्ठानचारिणाम् । अन्येषामपि कुर्वाणो, निन्दां नो शङ्कितस्तदा ॥९९८॥ किं बहुना?—तीर्थेश्वराणां सङ्घस्य, श्रुतस्य गणधारिणाम् । आशातनां दधानेन, मया पृष्ठं न वीक्षितम् ॥ ९९९ ॥ एवं च—गृहीतयतिवेषोऽपि, पापात्मा गुणदूषकः । महामोहवशाज्जातो, मिथ्यादृष्टिः सुदारुणः ॥ १००० ॥ ततोऽतिघोरदुर्भेदकर्मसङ्घातपूरितः । संजातोऽहं पुनर्भद्रे!, तादृश्या पापचेष्टया ॥ १००१ ॥ ततोऽनन्तं पुनः कालं, दुःखसागरमध्यगः । प्रायः समस्तस्थानेषु, भ्रमितोऽहं स्वभार्यया ॥ १००२ ॥ समस्तद्रव्यराशेश्च, भुवनोदरचारिणः । तदा स्पृष्टं मयोपार्धं, भ्रमता वर्णनेक्षया ॥ १००३ ॥ न सा विपन्न तद्दुःखं, न सा गाढविडम्बना । लोकेऽस्ति पद्मपत्राक्षि!, या न सोढा तदा मया ॥ १००४ ॥ एवं वदति संसारिजीवे विस्मितमानसा । जाताऽगृहीतसङ्केता, किंचिद्भावार्थकोविदा ॥ १००५ ॥ तथा प्रज्ञाविशालापि, श्रुत्वा तत्तादृशं वचः ।

सुधाभूतात् विभूषणस्य दीक्षा निन्दकता च

अत्यन्तजातसंवेगा, चिन्तयामास मानसे ॥ १००६ ॥ यदुत—अहो संसारिजीवस्य, महामोहपरिग्रहौ । मन्येऽहं सर्वपापेभ्यः, सका-
शादतिदारुणौ ॥ १००७ ॥ तथा—क्रोधादिभ्यो यदा जातमस्यानर्थकदम्बकम् । तदा नानेन कथितः, सम्यग्दर्शनमीलकः ॥ १००८॥
ततस्तैर्निर्गुणस्यास्य, यत्तादृक्षं विजृम्भितम् । आलोच्यमानं तन्मेऽद्य, नाश्चर्यं प्रतिभासते ॥ १००९ ॥ आभ्यां पुनरिदं सर्वं, सम्यग्दर्श-
नमीलके । संजातेऽपि कृतं दीर्घसंसारपतनादिकम् ॥ १०१० ॥ तदेतौ सगुणस्यापि, यावनर्थविधायकौ । तावेव दारुणौ नूनं, महामो-
हपरिग्रहौ ॥१०११॥ अथवा—यत्रेमौ तत्र ते सर्वे, सन्ति क्रोधादयः स्फुटम् । समुदायात्मकस्तेषां, महामोहो हि वर्णितः ॥ १०१२ ॥
परिग्रहोऽपि सर्वेषां, तेषामाधारतां गतः । स हि लोभसखो लाभो, महामोहबलाधिकः ॥ १०१३ ॥ तदेतौ गुणघाताय, सर्वेषां मूल-
नायकौ । जातौ संसारिजीवस्य, यत्तत्राश्चर्यमीदृशम् ॥ १०१४ ॥ किं च—सद्भूतगुणघाताय, सन्ति क्रोधादयोऽप्यलम् । अनयोस्तु
विशेषार्थमनेनेत्थमुदाहृतम् ॥ १०१५ ॥ अन्यच्च—तेऽप्याभ्यां हन्त निर्मुक्ता, न सन्त्येव कदाचन । किं तु प्रवर्तकावेतौ, ते तु ज्ञेयाः
पदातयः ॥ १०१६ ॥ अस्यैव च विशेषस्य, सिद्ध्यर्थममुना कृता । दोषसन्दर्शिकाऽमीषां, क्रमेणेत्थमुदाहृतिः ॥ १०१७ ॥ समस्तान-
र्थसार्थस्य, तदित्थं जनकाविमौ । अस्य संसारिजीवस्य, महामोहपरिग्रहौ ॥ १०१८ ॥ तथापि लोकः पापात्मा, गुरुवाक्यशतैरपि ।
नाचरत्यनयोस्त्यागं, तत्र किं बत कुर्महे ? ॥ १०१९ ॥ एषापि दुष्टा व्याख्याता, श्रुतिः कोविदसूरिणा । तथापि रज्यतेऽत्यर्थमस्यामेष
जडो जनः ॥ १०२० ॥ अथ प्रज्ञाविशालां तां, गाढं संवीक्ष्य भाविताम् । स भव्यपुरुषोऽवादीदम्ब! किं चिन्तितं त्वया ?॥ १०२१ ॥
तयोक्तं पुत्र! ते सर्वं, कथयिष्ये निराकुला । दत्तावधानस्त्वं तावदस्य वाक्यं निशामय ॥ १०२२ ॥ किं च—वत्स! मोत्तालतां कार्षीः,
किलेदं न समाप्यते । कथितप्रायमेतेन, सर्वमात्मविचेष्टितम् ॥ १०२३ ॥ ततस्तूष्णीं स्थिते तत्र, राजपुत्रे ससादरम् । संसारिजीवः

महामोह
परिग्रहद्व
एताचि-
न्ता प्रज्ञ
विशाला
हृदि

दूरं नीतः सदागमः । कचित्तावपि निर्जित्य, ताभ्यामपि निराकृतौ ॥ ९८८ ॥ एवं चानन्तकालं ते, जयभङ्गपरायणाः । देशकालबलं प्राप्य, जाता भद्रे! परस्परम् ॥ ९८९ ॥ अन्यच्च—मामकः पक्षपातोऽभूद्वयोरेव विशेषतः । तयोरेव तदा जातो, जयो भङ्गस्तदन्ययोः ॥ ९९० ॥ अन्यदा मानवावासमध्यवर्तिनि सुन्दरे । पुरे सोपारके पत्न्या, नीतोऽहं नीरजेक्षणे! ॥ ९९१ ॥ वणिजः शालिभद्रस्य, भार्याऽस्ति कनकप्रभा । जातस्तस्याः सुतोऽस्मीति, तत्र नाम्ना विभूषणः ॥ ९९२ ॥ अथ सूरिं सुधाभूतमासाद्य शुभकानने । पुनर्दृष्टौ मया भद्रे!, महत्तमसदागमौ ॥ ९९३ ॥ ततश्च—तत्त्वश्रद्धानसंपन्नो, भावतो विरतिं विना । जातो गुरूपरोधेन, श्रमणोऽहं तदाऽनघे! ॥ ९९४ ॥ ततो गृहीतलिङ्गस्य, साधुमध्येऽपि तिष्ठतः । जातं मे कर्मदोषेण, वैभाष्यनिरतं मनः ॥ ९९५ ॥ ततः प्रबलतां प्राप्ता, महामोहादयः पुनः । जातौ च भावतो दूरे, महत्तमसदागमौ ॥ ९९६ ॥ ततो निमित्तमासाद्य, निमित्तविरहेण वा । स्वभावादेव सम्पन्नस्तदाऽहं परनिन्दकः ॥९९७॥ तपस्विनां सुशीलानां, सदनुष्ठानचारिणाम् । अन्येषामपि कुर्वाणो, निन्दां नो शङ्कितस्तदा ॥९९८॥ किं बहुना?—तीर्थेश्वराणां सङ्घस्य, श्रुतस्य गणधारिणाम् । आशातनां दधानेन, मया पृष्ठं न वीक्षितम् ॥ ९९९ ॥ एवं च—गृहीतयतिवेषोऽपि, पापात्मा गुणदूषकः । महामोहवशाज्जातो, मिथ्यादृष्टिः सुदारुणः ॥ १००० ॥ ततोऽतिघोरदुर्भेदकर्मसङ्घातपूरितः । संजातोऽहं पुनर्भद्रे!, तादृश्या पापचेष्टया ॥ १००१ ॥ ततोऽनन्तं पुनः कालं, दुःखसागरमध्यगः । प्रायः समस्तस्थानेषु, भ्रमितोऽहं स्वभार्यया ॥ १००२ ॥ समस्तद्रव्यराशेश्च, भुवनोदरचारिणः । तदा स्पृष्टं मयोपार्धं, भ्रमता वर्गणेच्छया ॥ १००३ ॥ न सा विपन्न तद्दुःखं, न सा गाढविडम्बना । लोकेऽस्ति पद्मपत्राक्षि!, या न सोढा तदा मया ॥ १००४ ॥ एवं वदति संसारिजीवे विस्मितमानसा । जाताऽगृहीतसङ्केता, किंचिद्भावार्थकोविदा ॥ १००५ ॥ तथा प्रज्ञाविशालापि, श्रुत्वा तत्तादृशं वचः ।

सुधाभूतात् विभूषणस्य दीक्षा निन्दकता च

# अथ अष्टमः प्रस्तावः ।

अथास्ति मानवावासे, सत्पुरं सततोत्सवम् । सप्रमोदमिति ख्यातमचिन्त्यगुणभूषितम् ॥ १ ॥ दानवारिकृताह्लादो, महेभगतिविभ्रमः । पुरंदरसमो यत्र, नरवर्गो विराजते ॥ २ ॥ रूपलावण्यनेपथ्यनिर्विशेषोऽमरीजनैः । विलासिनीजनो यत्र, नेत्रोन्मेषैर्विशिष्यते ॥ ३ ॥ तत्रारिकरिसङ्घातविपाटितकटस्थलः । निर्व्याजपौरुषख्यातो, राजाऽस्ति मधुवारणः ॥ ४ ॥ सर्वसाधारणं कृत्वा, वितीर्णं येन नो धनम् । रूपरक्षितदारेण, सौविदल्ला न धारिताः ॥ ५ ॥ तस्यास्ति पद्मपत्राक्षी, रूपलावण्यशालिनी । प्रधानवंशसंभूता, महादेवी सुमालिनी ॥ ६ ॥ या हृदि न्यस्तराजाऽपि, राज्ञो हृदयवर्तिनी । इत्थं दर्शितचित्रापि, विचित्रगुणयोगिनी ॥ ७ ॥ अथ पुण्योदयेनाहं, संयुक्तो निजभार्यया । भद्रेऽगृहीतसङ्केते!, तस्याः कुक्षौ प्रवेशितः ॥ ८ ॥ निष्क्रान्तः कालपर्यायात्सर्वावयवसुन्दरः । छन्नः सोऽपि मया सार्धं, जातः पुण्योदयोऽनघे! ॥ ९ ॥ जाते च मयि संजातमानन्दरसनिर्भरम् । उद्दामनृत्तसंगीतं, मधुवारणमन्दिरम् ॥ १० ॥ तथा—विहितं च नरेश्वरतोषकरं, वररासलासविलासधरम् । बहुवादनखादनगानपरं, मदिरामदघूर्णितचारुनरम् ॥ ११ ॥ विलयाजननर्तितवामनकं, कृतकुब्जककञ्चुकिहासनकम् । विहितार्थिमनोरथपूरणकं, कृतलोकचमत्कृति वर्धनकम् ॥ १२ ॥ ततः समुचिते काले, महानन्दपुरःसरम् । जनकेनैव मे नाम, स्थापितं गुणधारणः ॥ १३ ॥ पञ्चभिश्चारुधात्रीभिर्ललितोऽमरवद्दिवि । ततोऽहं

प्रोवाच, शेषामात्मकथानिकाम् ॥ १०२४ ॥ उक्तं च तेन—अन्यदा भार्यया भद्रे!, नीतोऽहं भद्रिले पुरे । सुतः स्फटिकराजस्य, जातोऽहं विशदस्तदा ॥ १०२५ ॥ विमलानन्दनश्चारुच्छारण्ये वर्तमानकः । सुप्रबुद्धमुनिं दृष्ट्वा, प्रबुद्धो जिनशासने ॥ १०२६ ॥ अतो भूयो मया दृष्टौ, महत्तमसदागमौ । गृहिधर्मयुतौ भद्रे!, पालिताश्च व्रतादयः ॥ १०२७ ॥ तत्त्वश्रद्धानशुद्धात्मा, स्थितश्चाहं चिरं सदा । किं तु सूक्ष्मपदार्थेषु, विविक्तज्ञानवर्जितः ॥ १०२८ ॥ ततस्तदनुभावेन, जातः पुण्योदयोऽनघः । नीतस्तृतीयकल्पेऽहं, सत्सुरे विबुधालये ॥ १०२९ ॥ तथाभिमतशब्दादिभोगसम्मर्दसुन्दरे । धारयित्वा सुखेनोषितस्तत्र सागरसप्तकम् ॥ १०३० ॥ ततोऽपि मानवावासे, ततश्च विबुधालये । इत्थं च कारितो भद्रे!, भूरिवारा गमागमम् ॥ १०३१ ॥ किं बहुना?—पान्थवत्रययुक्तेन, द्वादशापि विलोकिताः । प्रत्येकं ते मया कल्पाः, क्वचिन्मुक्तश्च बान्धवैः ॥ १०३२ ॥ एवं च स्थिते—ततो द्वादशकल्पस्थो, मानवावाससम्मुखम् । प्रस्थानं कारितो भद्रे!, भवितव्यतया तया ॥ १०३३ ॥ इति ॥ विमलमपि गुरूणां भाषितं भूरिभव्याः!, प्रबलकलिलहेतुर्यो महामोहराजः । स्थगयति गुरुवीर्योऽनन्तसंसारकारी, मनुजभवमवाप्तास्तस्य मा भूत वश्याः ॥ १०३४ ॥ सकलदोषभवार्णवकारणं, त्यजत लोभसखं च परिग्रहम् । इह परत्र च दुःखभराकरे, सजत मा बत कर्णसुखे ध्वनौ ॥ १०३५ ॥ एतन्निवेदितमशेषवचोभिरत्र, प्रस्तावने तदिदमात्मधिया विचिन्त्य । सत्यं हितं च यदि वो रुचितं कथंचित्तूर्णं तदस्य करणे घटनां कुरुध्वम् ॥ १०३६ ॥

॥ इत्युपमितिभवप्रपञ्चकथायां महामोहपरिग्रहश्रवणेन्द्रियविपाकवर्णनो नाम सप्तमः प्रस्तावः समाप्तः ॥

सुप्रबुद्धमुनिशिष्यः विशदः

तस्य पुनः पुनः । अपश्यतः परीक्षार्थं, तदाऽत्यर्थं निभालये ॥ ३३ ॥ अथ विज्ञातसद्भावः, कलाकौशलकोविदः । निगूढं काकलीं कृत्वा, मामाह स कुलंधरः ॥ ३४ ॥ कुमार! किं स्थितेनात्र, गम्यतामधुना गृहे। क्रीडितं बृहतीं वेलामपराह्णो हि वर्तते ॥ ३५॥ मयोक्तं रोचते यत्ते, तदेव क्रियतामिति । ततो गृहे गतावावां, कृतं च दिवसोचितम् ॥ ३६ ॥ अथ रात्रौ विविक्तायां, शय्यायां मम तिष्ठतः । सा चेतसि कुरङ्गाक्षी, स्वादकृत्य पुनरागता ॥ ३७ ॥ नाभविष्यच्च नेदिष्ठो, यदि पुण्योदयोऽनघः । तथा मे वर्तमानस्य, तदा भद्रे! सहायकः ॥ ३८ ॥ ततः—सा शल्यभूता मे चित्ते, विलगन्ती मुहुर्मुहुः । अकरिष्यदवस्थां यां, साऽऽख्यातुं नैव पार्यते ॥ ३९ ॥ केवलं निकटस्थायी, यतः पुण्योदयोऽनघः । ममाभूत्तेन सा जाता, नात्यर्थं बत बाधिका ॥ ४० ॥ त्रिभिर्विशेषकम् । अनघः स करोत्येव, यतः पुण्योदयो नृणाम् । सांसारिकपदार्थेषु, निराबाधमिदं मनः ॥ ४१ ॥ तथापि तामनुस्मृत्य, मनाक् चिन्तामहं गतः । यथा कस्य पुनः सा स्यान्नीलनीरजलोचना? ॥ ४२ ॥ चिन्तयित्वा गतो निद्रां, विभाता च विभावरी । प्रभाते च समायातो, मत्समीपं कुलंधरः ॥ ४३ ॥ ईषद्दर्शनलोभेन , तस्याः सोऽभिहितो मया । वयस्य! किं व्रजावोऽद्य, पुनराह्लादमन्दिरे? ॥ ४४ ॥ ततः कुलंधरेणोक्तं, स्मितबन्धुरया गिरा । किमिदं गम्यते? किं ते, विस्मृता तत्र कुञ्चिका? ॥४५॥ अये! ज्ञातो ममानेन, भाव इत्यवधार्य च । मया सोऽभिहितो मित्र!, परिहासो विमुच्यताम् ॥४६॥ गम्यतां पुनरुद्याने, का कस्येति च वीक्ष्यताम् । उचिता कन्यका चेति, नेति वा सा परीक्ष्यताम् ॥ ४७ ॥ अन्यच्च—परभार्यां ग्रहीष्येऽहं, विकल्पमिति मा कृथाः । कन्यका चेन्न मुञ्चामि, तामिन्द्रस्यापि धावतः ॥ ४८ ॥ ततः कुलंधरः प्राह, मित्र! मोत्तालतां गमः । गच्छावः क्रियते सर्वं, यद्वयस्याय रोचते ॥ ४९ ॥ ततो गतौ पुनस्तत्र, कानने तन्निरूपितम् । स्थानं यत्र पुरा दृष्टं, योषितोर्द्वितयं परम् ॥ ५० ॥ अथादृष्ट्वा पुनस्तत्र, तां कुरङ्गमवीक्षणाम् । अहं तल्लिप्सया किंचिच्चित्तोद्वेगेन पीडितः ॥ ५१ ॥

वृद्धिमायातः, सुखसागरमध्यगः ॥ १४ ॥ इतश्च—सगोत्रो मत्पितुर्मित्रं, जीवितादपि वल्लभः । नरेन्द्रोऽस्ति विशालाक्षस्तस्य सूनुः कुलंधरः ॥ १५ ॥ स सममोदे तत्रैव, तातस्नेहेन संस्थितः । ततो ममापि संपन्नः, स वयस्यः कुलंधरः ॥ १६ ॥ स च स्वच्छाशयो धन्यः, सुरूपः सुभगः कृती । समस्तगुणसंपन्नः, सत्य एव कुलंधरः ॥ १७ ॥ ततः संवर्धमानोऽहं, तेन सार्धं सुमेधसा । संजातोऽर्पितसद्भावः, स्नेहनिर्भरमानसः ॥ १८ ॥ ततश्च—समं कृतकलाभ्यासौ, क्रीडारसपरायणौ । संप्राप्तौ चारुतारुण्यमावां मदनमन्दिरम् ॥ १९ ॥ इतश्च नन्दनाकारं, पुराद्दूरे मनोरमम् । आह्लादमन्दिरं नाम, तत्रास्ति वरकाननम् ॥ २० ॥ तच्च चित्तचमत्कारि, लोचनाह्लाददायकम् । अत्यन्तमावयोर्जातं, सेवितं च दिने दिने ॥ २१ ॥ अन्यदा गतयोस्तत्र, दूरवर्ति परिस्फुटम् । योषितोर्द्वितयं किंचिद्दृष्टिगोचरमागतम् ॥ २२ ॥ तत्रैका रूपलावण्यविलासैः कामगेहिनीम् । हसन्तीव विशालाक्षी, द्वितीया ननु तादृशी ॥ २३ ॥ अथ सा सुन्दरी दूराच्चक्षुर्गोचरचारिणम् । मां भ्रूलताधनुर्मुक्तैर्दृष्टिबाणैरताडयत् ॥ २४ ॥ तथा—चूतशाखां समालम्ब्य, लीलयोल्लासितस्तनी । आजिहीर्षद्विलासेन, चार्वङ्गी मामकं मनः ॥ २५ ॥ तथा—चकितं विस्मितं स्निग्धं, साकूतमतिलज्जितम् । बहिर्लिङ्गैः क्षणाच्चित्तं, तत्स्वरूपं मयेक्षितम् ॥ २६ ॥ ततस्तां तादृशीं वीक्ष्य, मनोनयननन्दनीम् । निर्मिथ्यार्पितसद्भावां, रञ्जितं मम मानसम् ॥ २७ ॥ ततो मया चिन्तितं—किमियं सा रतिः साक्षात्किं पुरंदरकामिनी? । किं वा लक्ष्मीरमुत्रेत्थं, वर्तते तनुधारिणी ॥ २८ ॥ एवं च चिन्तयन्नीषदशरीरशरेरितः । यावद्विकारलेशेन, युक्तो जातः शुभानने! ॥ २९ ॥ तावन्निरीक्षितस्तेन, साकूतं ज्ञातचेतसा । वयस्येन मयाऽप्युदैराकारवरणं कृतम् ॥ ३० ॥ युग्मम् । चिन्तितं च मया हन्त, लज्जाकारि विवेकिनाम् । इदं सकामया दृष्ट्या, यत्परस्त्रीनिरीक्षणम् ॥ ३१ ॥ तदस्यां दृष्टिपातं मे, दृष्ट्वा निर्मलचेतसा । अहो कुलंधरेणात्र, न जाने किं विचिन्तितम्? ॥ ३२ ॥ ततो लज्जाभरेणाहं, मुखं

कुलन्धर-मैत्री

आल्हाद-मंदिरे गमनं

तस्य पुनः पुनः । अपश्यतः परीक्षार्थं, तदाऽत्यर्थं निभालये ॥ ३३ ॥ अथ विज्ञातसद्भावः, कलाकौशलकोविदः । निगूढं काकलीं कृत्वा, मामाह स कुलंधरः ॥ ३४ ॥ कुमार! किं स्थितेनात्र, गम्यतामधुना गृहे । क्रीडितं बृहतीं वेलामपराह्णो हि वर्तते ॥ ३५ ॥ मयोक्तं रोचते यत्ते, तदेव क्रियतामिति । ततो गृहे गतावावां, कृतं च दिवसोचितम् ॥ ३६ ॥ अथ रात्रौ विविक्तायां, शय्यायां मम तिष्ठतः । सा चेतसि कुरङ्गाक्षी, खाट्कृत्य पुनरागता ॥ ३७ ॥ नाभविष्यच्च नेदिष्ठो, यदि पुण्योदयोऽनघः । तथा मे वर्तमानस्य, तदा भद्रे! सहायकः ॥ ३८ ॥ ततः—सा शल्यभूता मे चित्ते, विलगन्ती मुहुर्मुहुः । अकरिष्यदवस्थां यां, साऽऽख्यातुं नैव पार्यते ॥ ३९ ॥ केवलं निकटस्थायी, यतः पुण्योदयोऽनघः । ममाभूत्तेन सा जाता, नात्यर्थं बत बाधिका ॥ ४० ॥ त्रिभिर्विशेषकम् । अनघः स करोत्येव, यतः पुण्योदयो नृणाम् । सांसारिकपदार्थेषु, निराबाधमिदं मनः ॥ ४१ ॥ तथापि तामनुस्मृत्य, मनाक् चिन्तामहं गतः । यथा कस्य पुनः सा स्यान्नीलनीरजलोचना? ॥ ४२ ॥ चिन्तयित्वा गतो निद्रां, विभाता च विभावरी । प्रभाते च समायातो, मत्समीपं कुलंधरः ॥ ४३ ॥ ईषद्दर्शनलोभेन , तस्याः सोऽभिहितो मया । वयस्य! किं प्रजावोऽद्य, पुनराह्लादमन्दिरे? ॥ ४४ ॥ ततः कुलंधरेणोक्तं, स्मितबन्धुरया गिरा । किमिदं गम्यते? किं ते, विस्मृता तत्र कुञ्चिका? ॥४५॥ अये! ज्ञातो ममानेन, भाव इत्यवधार्य च । मया सोऽभिहितो मित्र!, परिहासो विमुच्यताम् ॥४६॥ गम्यतां पुनरुद्याने, का कस्येति च वीक्ष्यताम् । उचिता कन्यका चेति, नेति वा सा परीक्ष्यताम् ॥ ४७ ॥ अन्यथ—परभार्या महीष्येऽहं, विकल्पमिति मा कृथाः । कन्यका चेन्न मुञ्चामि, तामिन्द्रस्यापि धावतः ॥ ४८ ॥ ततः कुलंधरः प्राह, मित्र! मोत्तालतां गमः । गच्छावः क्रियते सर्वं, यद्वयस्याय रोचते ॥ ४९ ॥ ततो गतौ पुनस्तत्र, कानने तन्निरूपितम् । स्थानं यत्र पुरा दृष्टं, योषितोर्द्वितयं परम् ॥ ५० ॥ अथादृष्ट्वा पुनस्तत्र, तां कुरङ्गमवीक्षणाम् । अहं तल्लिप्सया किंचिच्चित्तोद्वेगेन पीडितः ॥ ५१ ॥

ततश्च—वने पर्यट्य तां नूनं, वीक्षमाणो मुहुर्मुहुः । कुलंधरयुतो यावन्निषण्णस्तस्य भूतले ॥ ५२ ॥ तावन्नूपुरपादन्यासैः, पद्मसंरम्भिस्व-नम् । आकर्ण्य कस्यचित्पृष्ठे, वलिता मम कन्धरा ॥ ५३ ॥ अथैका मध्यमावस्था, दृष्टा नारी सुविग्रहा । द्वितीया सा समायाता, याऽऽसीत्तस्या द्वितीयिका ॥ ५४ ॥ ततः सकुलंधरेण मया कृतमभ्युत्थानं नामितमुत्तमाङ्गं, ततः सविशेषं विलोकितोऽहं तया प्रौढनार्या, कृतमानन्दोदकबिन्दुपरिप्लुतनयनयुगलं, अभिहितं च—वत्स! चिरं जीव मदीयजीवितेनापि, कुलंधरोऽप्युक्तः—पुत्र! दीर्घायुर्भव त्वं, अस्ति भवद्भ्यां सह किंचिद्वक्तव्यं अतो राजपुत्रमुपवेशयितुमर्हति वत्सः, कुलंधरेणोक्तं—यदादिशत्यम्बा, ततः प्रमृष्टमनेन भूतलं स्व-विष्टानि वयं, ततो मामुद्दिश्य तयाऽभिहितं—वत्साकर्णय—अस्ति विद्याधरालयो घंटाख्यो नाम महागिरिः, तत्र गन्धसमृद्धं नाम नगरं, तदधिपतिर्विद्याधरचक्रवर्ती कनकोदरो नाम राजा, तस्याहं कामलता नाम महादेवी, न चाभूदपत्यं गतो भूरिकालः विषण्णोऽसौ निरपत्यतयाऽहं च ततोऽपत्यार्थं प्रयुक्तानि भेषजानि विहिता महाशान्तयः दत्तान्युपयाचितशतानि पृष्टा नैमित्तिकाः पर्युपासिता मन्त्रवादिनः विन्यासितानि तन्त्राणि पीतानि मूलजालानि कृतानि कौतुकानि निःसारिता अवधूतयः शोधितानि जातकानि अवधारिताः प्रश्नाः प्रार्थिताः प्रशस्तस्वप्नाः अभ्यर्थिता योगिन्यः कृतं सर्वं यदुक्तं किंचित्केनापीति, ततो मध्यमे वयसि प्रादुर्भूतो मे गर्भः प्रहृष्टो राजा क्रमेण च प्रसूताऽहं जाता देहप्रभया दिक्चक्रवालमुद्भासयन्ती दारिका निवेदिता राज्ञे परितुष्टोऽसौ कारितं महावर्धनकं प्रतिष्ठितं प्रशस्तदिने नाम मदनमञ्जरीति, वर्धिता सा सुखसन्दोहेन संजातेयमत्यन्तमभीष्टा, जनकप्रियपदातिनरसेनवल्लरिकादुहिता तस्याः प्रियसखी लवलिका, ग्राहिता सार्धमनया सा सकलाः कलाः प्राप्ता यौवनं, ततः कलाकौशलेन रूपातिशयेन च न ममोचितः पुरुषोऽस्तीति बुद्ध्या संजाता पुरुषद्वेषिणी सा वत्सा मदनमञ्जरी, तच्च लवलिकावचनेन विज्ञाय तदाकूतं विषण्णाऽहं निवेदितं महारा-

जाय संजातोऽसौ सचिन्तः कथमियं करिष्यत इति, ततः समुत्पन्नाऽस्य बुद्धिः कारितोऽनेन स्वयंवरामण्डपः समाहूताः सर्वे विद्याधरनरेन्द्राः समागता वेगेन कृतास्तत्प्रतिपत्तयः विरचिता मञ्चाः स्थिताः सर्वे यथास्थानं उपविष्टः स्वयंवरामण्डपमध्ये सपरिकरो राजा प्रविष्टाऽहं विरचितवरनेपथ्यालङ्काराङ्गरागमाल्यादिविच्छित्तिचर्चनां गृहीत्वा वत्सां मदनमञ्जरीं सह लवलिकया, तां चापहसितामरसुन्दरीलावण्यां कन्यामुपलभ्य प्रबलचित्तकल्लोलैरलमुल्ललमाना अपि तस्यां विनिविष्टदृष्टिचेष्टाः स्थिताश्चित्रन्यस्ता इव निश्चलाः सर्वेऽम्बरचराः, वर्णिता मया नामतो गोत्रतो विभवतो निवासतो रूपतो गुणतश्चिह्नतश्च प्रत्येकमेते, तद्यथा—वत्से मदनमञ्जरि!—एषोऽमितप्रभो नाम, विद्युद्दन्तस्य नन्दनः । अतुलर्द्धिश्च वास्तव्यः, पुरे गगनवल्लभे ॥ ५५ ॥ सुराकारधरोऽशेषकलाकौशलकोविदः । केतौ चारुमयूरेण, लसत्तालं विराजते ॥ ५६ ॥ तथा—एष भानुप्रभो नाम, नागकेसरिनन्दनः । महर्द्धिको महावीर्यो, गान्धर्वपुरनायकः ॥ ५७ ॥ कमनीयाकृतिर्वत्से!, भूरिविद्याविशारदः । आकरो गुणरत्नानां, प्रसिद्धो गरुडध्वजः ॥ ५८ ॥ तथा—अयमपि च रतिविलासो रतिमित्रसुतो महर्द्धिसंपन्नः । तदधिपतिरेष निवसति रथनूपुरचक्रवालपुरे ॥ ५९ ॥ कनकावदातवपुरेष निखिलविज्ञानगुणगणोपेतः । ननु पश्य मदनमञ्जरि! वरवानरकेतुयष्टियुतः ॥ ६० ॥ तदेवं यावदेकैकं, वर्णयामि नरेश्वरम् । तावद्विपादमापन्ना, वत्सा मदनमञ्जरी ॥ ६१ ॥ तथाहि—दृष्टा सा तदा मया दुर्भगनारीव सपत्नीगुणेषु विपद्गतसुभट इव शत्रुवीर्येषु समत्सरवादीव प्रतिवादिसौष्ठवेषु सेर्ष्यवैद्य इव प्रतिवैद्यकौशलेषु सोत्सेकविज्ञानिक इव प्रतिविज्ञानिकनैपुणेषु केनचित्सादरमुपवर्ण्यमानेषु तेषु विद्याधरनरेश्वरेषु मया तथा श्लाघ्यमानेषु दृष्टी अपातयन्ती संजाता गाढं विद्राणवदना वत्सा मदनमञ्जरी, ततो हा किमेतदिति विचिन्त्य मयाऽभिहिता सा—यथा वत्से! मदनमञ्जरि किमभिरुचितः कश्चिदेतेषां मध्ये वत्सायै विद्याधरनरेन्द्रः?, तयोक्तं—अम्ब! तूर्णमपक्र-

ततश्च—वने पर्यट्य तां नूनं, वीक्षमाणो मुहुर्मुहुः । कुलंधरयुतो यावन्निषण्णस्तस्य भूतले ॥ ५२ ॥ तावत्पूर्णेन्दुवदनासीः, चन्दनं चोन्नतस्त-नम् । आकर्ण्य कस्यचित्पृष्ठे, वलिता मम कन्धरा ॥ ५३ ॥ अथैका मध्यमावस्था, दृष्टा नारी सुविस्मिता । द्वितीया सा बालावाला, सा-सीत्तस्या द्वितीयिका ॥ ५४ ॥ ततः सकुलंधरेण मया कृतमभ्युत्थानं नामितमुत्तमाङ्गं, ततः सविक्षेपं विलोकितोऽहं तया वीरनायां, कृतमानन्दोदकबिन्दुपरिप्लुतनयनयुगलं, अभिहितं च—वत्स! चिरं जीव मदीयजीवितेनापि, कुलंधरोऽप्युक्तः—पुत्र! दीर्घायुर्भव त्वं, अस्ति भवद्भ्यां सह किंचिद्वक्तव्यं अतो राजपुत्रमुपवेशयितुमर्हति वत्सः, कुलंधरेणोक्तं—यदादिशत्यम्बा, ततः प्रमृष्टमनेन भूतलं उप-विष्टानि वयं, ततो मामुद्दिश्य तयाऽभिहितं—वत्साकर्णय—अस्ति विद्याधरालयो वैताढ्यो नाम महागिरिः, तत्र गन्धसमृद्धं नाम नगरं, तदधिपतिर्विद्याधरचक्रवर्ती कनकोदरो नाम राजा, तस्याहं कामलता नाम महादेवी, न चाभूत्तस्यापत्यं गतो भूरिकालः विषण्णोऽसौ निरपत्यतयाऽहं च ततोऽपत्यार्थं प्रयुक्तानि भेषजानि विहिता महास्नानयः दत्तान्युपयाचितशतानि पृष्टा नैमित्तिकाः उपचरिता मन्त्रवादिनः विन्यासितानि तन्त्राणि पीतानि मूलजालानि कृतानि कौतुकानि निःसारिता अवधूतयः शोधितानि जातकानि अवतारिताः प्रश्नाः प्रार्थिताः प्रशस्तस्वप्नाः अभ्यर्थिता योगिन्यः कृतं सर्वं यदुक्तं केनचित्केनापीति, ततो मध्यमे वयसि प्रादुर्भूतो मे गर्भः महष्टो राजा क्रमेण च प्रसूताऽहं जाता देहप्रभया दिक्चक्रवालमुद्भासयन्ती दारिका निवेदिता राज्ञे परितुष्टोऽसौ कारितं महावर्धनकं प्रति-ष्ठितं प्रशस्तदिने नाम मदनमञ्जरीति, वर्धिता सा सुखसन्दोहेन संजातेयमत्यन्तमभीष्टा, जनकप्रियपदातिनरसेनपत्नीरिकादुहिता तस्याः प्रियसखी लवलिका, ग्राहिता सार्धमनया सा सकलाः कलाः प्राप्ता यौवनं, ततः कलासौष्ठवेन रूपातिशयेन च न ममोचितः पुरुषोऽस्तीति बुद्ध्या संजाता पुरुषद्वेषिणी सा वत्सा मदनमञ्जरी, तच्च लवलिकावचनेन विज्ञाय तदाकूतं विषण्णाऽहं निवेदितं महारा-

'उद्गच्छन्नेष भो लोका!, भास्करः कथयत्यलम् । मा कृद्वं चित्तसन्तापं, मा हर्षं मा च विक्ल-
तसा, पठितं कालनिवेदकेन—
वम् ॥ ६२ ॥ यथैवानादिसिद्धोऽयमस्माकं भो दिने दिने । उदयादिक्रमः सर्वस्तथा वोऽपि भवे भवे ॥ ६३ ॥' एतच्चाकर्ण्य चिन्तितं नरपतिना—अये युक्तमुक्तमनेन समर्थितः स्वप्रार्थः, तथाहि—यथा देवरूपैः पूर्वनिरूपित एवास्माभिर्मदनमञ्जरीवर इत्युक्तं तथाऽनेनापि पठता भास्करस्य प्रतिदिनमुदयप्रतापास्तमयादर्शनपुनरुदयादिवद्देहिनां जन्मनि जन्मनि सुखदुःखलाभादिकं सर्वं चिरनिरूपितमेवोपन्तमते तदलं तत्र विषादादिनेत्यावेदितमिति, अतः सुतन्त्रितमेवेदं सर्वमास्ते किं नश्चिन्तयेत्याकलय्य निराकुलीभूतो राजा । इतश्च किमधुना कर्तव्यमिति पृष्टा लवलिकया मदनमञ्जरी, तयोक्तं—यदि तातोऽम्बा च मामुत्संकलयति ततोऽहं स्वयमेव पर्यट्य वसुन्धरामात्माभिरुचितं वरं वृणोमीति, ततः कथितं मे लवलिकया तद्वचनं निवेदितं मया राज्ञे, चिन्तितमनेन—सुन्दरमेवेदं मन्त्रितं वत्सया, अयमेव तस्य देवनिर्दिष्टस्य वरस्य लाभोपाय इति विचिन्त्यानुज्ञाता वत्सा मदनमञ्जरी, ततो गृहीत्वेमामात्मसहचरीं लवलिकां निर्गता सा वरार्थं सकलभूतलावलोकनाय गतानि कतिचिद्दिनानि स्थितो राजाऽहं च वत्सास्नेहेन सोन्माथकौ दिशो निभालयन्तौ, अन्यदा समागतेयं सविषादा लवलिका, दृष्ट्वा चेमां द्राटकृत्य पतितमावयोर्हृदयं हा किमितीयमेकाकिनी सविषादा चोपलभ्यत इति भावनया, कृतोऽनया प्रणामः, मयोक्तं—अयि भद्रे! लवलिके कुशलं वत्सायाः, अनयोक्तं—अम्ब! कुशलं, मयोक्तं क पुनरिदानीं वर्तते वत्सा ?, अनयोक्तं—आकर्णयत्वम्बा—अस्ति तावदितो निर्गत्य विलोकितमावाभ्यामनेकग्रामनगरादिविभूषितं विविधवृत्तान्तभूरि भूमण्डलं प्राप्ते सप्रमोदपुरं दृष्टं ततो बहिराह्लादमन्दिरमुद्यानं संजातमावयोस्तद्विलोकनकुतूहलं स्थिते तस्योपरिष्टात् दृष्टौ सुरवरकुमाराकारधारकौ तत्र द्वौ राजपुरुषौ तयोश्चैकमवलोकयन्ती प्राप्ताऽत्यन्तमशरीरशरप्रहारगोचरं प्रियसखी ततस्तद्वेदनाभरनिःसहेवावतीर्णा मया सार्धं

मामो वयमितः स्थानात् अलमेतेषां दर्शनेन शिरो दुष्यति ममानेन युष्मदुपवर्णितालीकतद्गुणश्रवणेन, तदाकर्ण्य विषण्णाऽहं निर्धारितं राज्ञ गतोऽसौ चिन्तां अभिहितमनेन नीयतां भवने वत्सा मा भूषिद्दुःखासिकयाऽस्याः शरीरापाटवमिति, ततस्तां गृहीत्वा निर्गताऽहं स्वयंवरमण्डपात् प्राप्ता स्वभवनं विषण्णेयं लवलिका, अभिहितमनया—यथाऽम्ब ! कः पुनर्भर्तृदारिकायाः परिणयनोपायो भविष्यति ?, मयोक्तं—वत्से लवलिके ! वयमपि न जानीमः अतिदुष्कररोचिकेयं तव प्रियसखी प्रष्टव्येयमेव भवत्या यदत्र करणीयं समानोऽस्माकमिदानीं मन्दभाग्यानां पर्यालोचगोचर इति वदन्ती स्थूलमुक्ताफलकलापकल्पैर्नयनसलिलबिन्दुसन्दोहै रोदितुं प्रवृत्ताऽहं, लवलिकयोक्तं—स्वामिनि ! मुञ्च विषादं प्रश्नयिष्याम्यहं भर्तृदारिकां, न खल्वेषा विनयसर्वस्वं स्वजननीजनकयोः सन्तापकारिणी भविष्यति कथयिष्यति यदत्र करणीयं, ततश्चैवं स्वस्थीकृताऽहमनया लवलिकया ॥ इतश्च ते विद्याधराः स्वयंवरमण्डपादवृतवरामेव निर्गच्छन्तीमवलोक्य तां वत्सां मदनमञ्जरीं हृतसर्वस्वा इव नष्टरत्ननिधाना इव मुद्गरताडिता इव विगलितविद्या इव सर्वथा भ्रष्टच्छाया विलक्षीभूताः सकोपाः सन्तः कनकोदरनरेन्द्रमसंभाष्य निर्गताः स्वयंवरमण्डपाद्गता गृहीत्वैकां दिशं, ततो राजा प्राप्तः शोकातिरेकं लङ्घितं वर्षमिव तद्दिनं समागता रजनी न दत्तं च प्रादोषिकमास्थानं, सुप्तः केवलं तया गमितप्राया चिन्तया विनिद्रेणैव राज्ञा विभावरी ततोऽतिभरेण लब्धोऽनेन निद्रालवः जातं तत्र स्वप्नदर्शनं, दृष्टानि जाग्रतेव चत्वारि मानुषाणि—द्वौ पुरुषौ द्वे ललने, तैरभिहितं—महाराज ! कनकोदर किं सुप्तस्त्वं उत जागर्षि ?, नृपतिराह जागर्मि, तैरुक्तं—यद्येवं ततो मुञ्च विषादं निरूपितोऽस्माभिः पूर्वमेव वरो मदनमञ्जर्याः स एव भविष्यति अलं भवतामन्यवरान्वेषणेन अस्माभिरेव च द्वेष्याः संपादिताः खल्वस्यास्ते विद्याधरनरेन्द्राः यतो न प्रयच्छामो वयमेतामन्यस्मै वरायेति ब्रुवाणानि तानि गतान्यदर्शनं, अत्रान्तरे संजातः प्राभातिकतूर्यनिर्घोषः प्रबुद्धो राजा स्मृतः स्वप्नार्थः प्रहृष्टचे-

प्युक्तमनया—सखि! लवलिके नाहं गन्तुं पारयामि अस्वस्थं मे शरीरं न च मोक्तव्यं मयेदमुद्यानं, ततो गच्छतु तूर्णं भवंती संपादयितुं ताताम्बयोर्वार्तामिति, ततो लक्षयित्वाऽनिवर्तकं तस्या निर्बन्धं स्थापयित्वा तां गुप्ततरुगहनमध्ये रचयित्वा शिशिरपल्लवशयनीयं कारयित्वा न चलितव्यमितः स्थानान्न विधेयमन्यदपि किंचिदसमञ्जसमित्यत्रार्थे शपथशतानि समागताऽहं क्षणान्निर्धूतासिश्यामलं गगनमुत्पतन्ती वेगेन इत्येतदाकर्ण्य देवोऽम्बा च प्रमाणं, ततो राज्ञोक्तं—देवि! तावत् त्वं त्वरया गच्छ तत्समीपं संधीरय वत्सां मदनमञ्जरी अहं तु सामग्रीं विधायागमिष्यामि यतः साशङ्कं मे मनः सकोपा निर्गतास्ते विद्याधराः प्रयुक्तश्च तद्वृत्तान्तोपलम्भाय मया चटुलः ततः कृतसामग्रीकस्यैव मे तत्र गन्तुं युक्तं, नेतव्यं च तत्र गच्छद्भिः किंचित्प्राभृतं अतस्तद्ग्रहतो भविष्यति मे कालविलम्बः तत्तूर्णं गच्छतु देवी, मयोक्तं—यदाज्ञापयत्यार्यपुत्रः, ततः पुरस्कृत्येमां लवलिकां गृहीत्वा चात्मवल्लभां दासदारिकां धवलिकां समागताऽहं वेगेन, दृष्टा तत्रैव शिशिरपल्लवशयनीये निषण्णा परमयोगिनीव निरालम्बनं किंचिद्ध्यायन्ती वत्सा मदनमञ्जरी, तया तु न लक्षितमस्मदागमनं उपविष्टा वयं निकटे, लवलिकयोक्तं—भर्तृदारिके! समागतेयमम्बा किमेवं तिष्ठसि?, ततो लब्धा वत्सया चेतना मोटितमनया शरीरकं व्यापारिते लोचने विलोकिताऽहं, ततः ससम्भ्रममुत्थाय निपतिता सा मच्चरणयोः, मयोक्तं—वत्से! मदीयजीवितेनापि चिरं जीव तूर्णमाप्नुहि हृदयवल्लभं अविधवा भव सुभगा संपद्यस्वेति, ततश्चोत्थाप्य समालिङ्गिता समाघ्राता मूर्धदेशे स्थापिता निजोत्सङ्गे चुम्बिता वदनकमले, अभिहिता च—वत्से! मदनमञ्जरि धीरा भव मुञ्च विषादं सिद्धमेव पश्य समीहितं अयमागत एव वर्तते ते जनकः घटिकाः खल्वत्र प्रयोजने जल्पन्तीति, ततः कुतो ममेयन्ति भागधेयानीति शनैर्वदन्ती स्थिताऽधोमुखी वत्सा, अत्रान्तरे गतोऽस्तं दिनकरः समुल्लसितं तिमिरं विस्फुरितस्तारकानिकरः वियुक्ताश्चक्रवाकाः मुकुलितं कमलवनं निलीनाः शकुनयः प्रसरिताः कौशिकाः प्रहृष्टा

भूतले स्थिता तयोर्दृष्टिगोचरे मनागदूरवर्तिनि चूतवने तमेव राजकुमारमनिमिषिताक्षी निरीक्षमाणा ततः पातिता तेनापि तदभिमुखं दृष्टिः—ततः साऽमृतसिक्तेव, क्षिप्तेव सुखसागरे। तस्मिन्नवसरे दृष्टा, मया यान्ती रसान्तरम् ॥ ६४ ॥ प्रावृट्काले यथाऽऽकर्ण्य, मेघशब्दं मयूरिका। विजृम्भते तथा बाला, तं दृष्ट्वाऽम्ब! विजृम्भिता ॥ ६५ ॥ विलासबन्धुरं वक्त्रं, सरसं च शरीरकम्। कचित्कदम्बपुष्पाभं, धारयन्ती मयेक्षिता ॥ ६६ ॥ नृत्यतीव रसाक्षेपाद्गजतीव मुहुर्मुहुः। हसतीव विशालाक्षी, दृष्टिं ददति वल्लभे ॥ ६७ ॥ ततस्तां तादृशीं वीक्ष्य, तत्र निक्षिप्तमानसाम्। कर्तुं प्रवृत्ता सङ्कल्पमहं हर्षमुपागता ॥ ६८ ॥ यदुत—अहो विदग्धा निर्मिथ्यमहो दुष्कररोचिका। तथापि तोषिताऽनेन, सूनुना भर्तृदारिका ॥ ६९ ॥ अहो अस्य सुरूपत्वमहो लावण्यपूर्णता। अहो युक्तोऽनयोर्योगो, रतिमन्मथयोरिव ॥ ७० ॥ अहो घटितमेवेदं, मिथुनं ननु वेधसा। सद्भावमीलनादेव, संपन्नं नः समीहितम् ॥ ७१ ॥ अथ क्षणात्स केनापि, कारणेन ससम्भ्रमः। सार्धं तेन वयस्येन, ततः स्थानाद्गतो युवा ॥ ७२ ॥ गते च तत्र सा बाला, शून्या तरलतारिका। संजाता विह्वलाऽत्यन्तं, यथा नष्टनिधानिका ॥ ७३ ॥ ततो मयोक्तं—भर्तृदारिके! यदभिरुचितस्तुभ्यमेष तरुणस्ततो गम्यतां तातान्त्यासमीपे निश्चितमेषोऽस्यैव सप्रमोदपुराधिपतेर्मधुवारणराजस्य सूनुर्भविष्यति कस्यान्यस्येदृशो रूपातिशयः?, ततो दाप्यतामस्मै तातेनात्मा किमधुना विलम्बितेनेति, तयोक्तं—सखि लवलिके! रुचितोऽयं मे जनः केवलं साशङ्कं मम हृदयं न रुचिता प्रायेणाहमस्मै कथमन्यथा तूर्णमपक्रमणं?, मयोक्तं—स्वामिनि! मा मैवं वोचः, तथाहि—किं न ते प्रहिता दृष्टिः, किं न जातः सतोषकः?। स राजपुत्रस्त्वां दृष्ट्वा, येनेत्थमभिधीयते ॥ ७४ ॥ अत्यर्थं रुचितासि त्वं, शङ्कां मुञ्च वरानने!। मधौ मधुकरायेव, सरसा चूतमञ्जरी ॥ ७५ ॥ वैदग्ध्यादेव तेनेदं, हन्तापक्रमणं कृतम्। ततोऽनमीयतामेतत्स्वामिन्या मम भाषितम् ॥ ७६ ॥ ततः स्वस्थीभूता किंचिद्राजदुहिता तथा-

प्युक्तमनया—सखि! लवलिके नाहं गन्तुं पारयामि अस्वस्थं मे शरीरं न च मोक्तव्यं मयेदमुद्यानं, ततो गच्छतु तूर्णं भवंती संपादयितुं तातामायोर्वार्तामिति, ततो लक्षयित्वाऽनिवर्तकं तस्या निर्बन्धं स्थापयित्वा तां गुप्ततरुगहनमध्ये रचयित्वा शिशिरपल्लवशयनीयं कारयित्वा न चलितव्यमितः स्थानान्न विधेयमन्यदपि किंचिदसमञ्जसमित्यत्रार्थे शपथशतानि समागताऽहं क्षणान्निर्धूतासिश्यामलं गगनमुत्पतन्ती वेगेन इत्येतदाकर्ण्य देवोऽम्बा च प्रमाणं, ततो राज्ञोक्तं—देवि! तावत् त्वं त्वरया गच्छ तत्समीपं संधीरय वत्सां मदनमञ्जरी अहं तु सामग्रीं विधायागमिष्यामि यतः साशङ्कं मे मनः सकोपा निर्गतास्ते विद्याधराः प्रयुक्तश्च तद्वृत्तान्तोपलम्भाय मया चटुलः ततः कृतसामग्रीकस्यैव मे तत्र गन्तुं युक्तं, नेतव्यं च तत्र गच्छद्भिः किंचित्प्राभृतं अतस्तद्ग्रहतो भविष्यति मे कालविलम्बः तत्तूर्णं गच्छतु देवी, मयोक्तं—यदाज्ञापयत्यार्यपुत्रः, ततः पुरस्कृत्येमां लवलिकां गृहीत्वा चात्मवल्लभां दासदारिकां धवलिकां समागताऽहं वेगेन, दृष्टा तत्रैव शिशिरपल्लवशयनीये निषण्णा परमयोगिनीव निरालम्बनं किंचिद्ध्यायन्ती वत्सा मदनमञ्जरी, तया तु न लक्षितमस्मदागमनं उपविष्टा वयं निकटे, लवलिकयोक्तं—भर्तृदारिके! समागतेयमम्बा किमेवं तिष्ठसि ?, ततो लब्धा वत्सया चेतना मोटितमनया शरीरकं व्यापारिते लोचने विलोकिताऽहं, ततः ससम्भ्रममुत्थाय निपतिता सा मच्चरणयोः, मयोक्तं—वत्से! मदीयजीवितेनापि चिरं जीव तूर्णमाप्नुहि हृदयवल्लभं अविधवा भव सुभगा संपद्यस्वेति, ततश्चोत्थाप्य समालिङ्गिता समाघ्राता मूर्धदेशे स्थापिता निजोत्सङ्गे चुम्बिता वदनकमले, अभिहिता च—वत्से! मदनमञ्जरि धीरा भव मुञ्च विषादं सिद्धमेव पश्य समीहितं अयमागत एव वर्तते ते जनकः घटिकाः खल्वत्र प्रयोजने जल्पन्तीति, ततः कुतो ममेयन्ति भागधेयानीति शनैर्वदन्ती स्थिताऽधोमुखी वत्सा, अत्रान्तरे गतोऽस्तं दिनकरः समुल्लसितं तिमिरं विस्फुरितस्तारकानिकरः वियुक्ताश्चक्रवाकाः मुकुलितं कमलवनं निलीनाः शकुनयः प्रसरिताः कौशिकाः प्रहृष्टा

भूतवेतालाः समुद्गतः शशधरः विलसिता चन्द्रिका, ततश्चित्तप्रमोदकारिणीभिः कथाभिर्विनोदयन्तीभिस्तां वत्सां मदनमञ्जरीमतिवाहिताऽस्माभिः कथंचिद्रजनी समुद्गतो दिनकरः, मयोक्तं—हले लवलिके! स्थिता गगनमार्गे निरूपय निजस्वामिवर्त्तनीं किमसौ चिरयति?, ततो यदाज्ञापयति स्वामिनीति वदन्ती स्थितेयं नभस्तले लवलिका स्थित्वा च क्षणमात्रं समवतीर्णा सहर्षा, मयोक्तं—हले! किं सहर्षाऽसि किं समागतस्ते स्वामी?, अनयोक्तं—अम्ब! नाद्यापि समागतः स्वामी किं तु समागतौ तौ राजकुमारौ निरीक्षितं च ताभ्यां भर्तृदारिकादर्शनार्थं समस्तमुद्यानं केवलमतिगहनतयाऽस्य प्रदेशस्य न दृष्टा भर्तृदारिका, ततोऽसौ भर्तृदारिकाहृदयदयितः सविषादः सन्नुक्तस्तेन द्वितीयेन यथा—कुमार! गुणधारण! स्थीयतां तावत्तत्रैव चूतवने तस्यैव च चूतस्याधो यत्र दृष्टाऽऽसीद्भवता सा चटुलपवनचलितकुवलयदललोललोचना हृदयतस्करी किमन्यत्र पर्यटितेन? कदाचिद्दैवयोगात्पुनस्तत्रैवोपलभ्यत इति, तेनोक्तं—एवं भवतु, ततो गतौ तौ तदभिमुखं, इदमम्ब मे हर्षकारणं, वत्सयोक्तं—भवतु मातः! किमेवं मां प्रतारयसि?, ततोऽनया तत्प्रत्यायनार्थं कृतानि शपथशतानि तथापि न प्रत्यायिता वत्सा मदनमञ्जरी, मयोक्तं—हले लवलिके! किमनेन बहुना?, दर्शय तावन्मे कुमारं येन तं स्वयमेवेहानीय वत्सामाह्लादयामि, अनयोक्तं—एषा सज्जाऽस्मि प्रवर्ततामम्बा, ततो विमुच्य वत्सासमीपे तां धवलिकां प्रवृत्ताऽहं, ततश्च नीताऽहमेवमनया लवलिकया भवतः समीपं, तदेषोऽत्र कुमार! परमार्थः—वत्सां कण्ठगतप्राणां, तां मे दुष्कररोचिकाम् । उत्थायानुग्रहं कृत्वा, कुमारो द्रष्टुमर्हति ॥ ७७ ॥ ततो विलोकितं मया कुलंधरवदनं, तेनोक्तं—कुमार! गम्यतां कोऽत्र विरोधः?, ततः कृतमस्माभिस्तत्र गमनं, दृष्टा यथानिर्दिष्टा मदनमञ्जरी, ततोऽहं निमग्न इव सुखामृतमये महाह्रदे अवतीर्ण इव रतिरसमये महासमुद्रे वर्तमान इव सर्वानन्दसन्दोहे परिपूर्ण इव सर्वमनोरथभरेण प्रीणिताशेषेन्द्रियग्राम इव सर्वोत्सवसमुदये संजातस्तद्दर्शने सतीति, तथा सापि

मामवलोक्य प्राप्तः स एवायमिति हृष्टा चिरादृष्ट इत्युत्कण्ठिता कुतस्तस्यागमनमिति सवितर्का स्वप्नोऽयं भवेदिति सविषादा स्थिरः प्र-
त्यय इति जातनिर्णया विरहेऽपि जीवितेति सलज्जा कथं मामेष प्रतिपद्यत इति सोद्वेगा निरीक्षते मामयमिति सप्रमोदेति संपन्ना संकी-
र्णरसनिर्भरहृदया, अत एव चालंकृता पुलकजालकेन विभूषिता स्वेदबिन्दुमौक्तिकनिकरेण बन्धुरा समुत्तालश्वसितपवनेन हृदयहारिणी
सुललितलतेव कम्पमाना सर्वथा—अनाख्येयं रसं कंचिदत्यन्तप्रीतिनिर्भरा । मया सा स्निग्धलोलाक्षी, भजन्ती प्रविलोकिता ॥ ७८ ॥
ततोऽभिहिता कामलतया—वत्से ! किं जातस्तेऽधुना लवलिकावचने संप्रत्ययः ?, ततः स्मितेन रञ्जयन्ती मम हृदयमिव सुधाधवले
नापि विमलकपोलौ स्थिता साऽधोमुखी, जातः सर्वेषां प्रमोदः, अत्रान्तरे—लसद्भूषणरत्नौघप्रभाजालैः समन्ततः । प्रकाशितनभोभा-
गैर्देवाकारानुकारिभिः ॥ ७९ ॥ भूरिविद्याधरैः सार्धं, शक्रवच्चारुलीलया । रत्नैर्भृत्वा विमानौघमागतः कनकोदरः ॥ ८० ॥ युग्मम् ।
सप्रमोदपुरं वीक्ष्य, सोऽवतीर्णः सखेचरः । आह्लादमन्दिरं प्राप्तो, दृष्टोऽस्माभिः सविस्मयम् ॥ ८१ ॥ ततः कृतमस्माभिरभ्युत्थानं
नामितमुत्तमाङ्गं विहिता प्रतिपत्तिः उपविष्टाः सर्वे यथास्थानं विलोकितोऽहं स्निग्धदृष्ट्या सुचिरं कनकोदरेण नूनं स एवायमिति निश्चित्य
तुष्टश्चेतसा पृष्टा कामलता कथितोऽनया वृत्तान्तः, कनकोदरेणोक्तं—देवि ! निर्वहितमेव वत्साया दुष्कररोचिकात्वमीदृशपुरुषरत्ने ययाऽ-
नया कृतो मनोनिर्बन्धः, न खलु शची पुरंदरादन्यत्र स्वचित्तं निवेशयते, कामलतयोक्तं—एवमेतन्नास्त्यत्र सन्देहः ॥ अत्रान्तरे समा-
गतो वेगेन चटुलः, तेन च निवेदितं किमपि कनकोदराय कर्णाभ्यर्णे, ततोऽलमत्र कालविलम्बेनेति कामलतां प्रति वदता समालोच्य
सह कुलन्धरेण तत्रैव स्थाने संक्षेपतः कारितोऽहं पाणिग्रहणं मदनमञ्जर्याः कनकोदरेण निर्वर्तितो विवाहानन्दः प्रकटितानि तानि वज्र-
वैडूर्येन्द्रनीलमहानीलकर्केतनपद्मरागमरकतचूडामणिपुष्परागचन्द्रकान्तरुचकमेचकाद्यनर्घेयरत्नराशिपरिपूरितानि विमानानि, ततोऽभिहितः

भूतवेतालाः समुद्गतः शशधरः विलसिता चन्द्रिका, ततश्चित्तप्रमोदकारिणीभिः कथाभिर्विनोदयन्तीभिस्तां वत्सां मदनमञ्जरीमतिवाहिताऽस्माभिः कथंचिद्रजनी समुद्गतो दिनकरः, मयोक्तं—हले लवलिके! स्थिता गगनमार्गे निरूपय निजस्वामिवर्तनीं किमसौ चिरयति?, ततो यदाज्ञापयति स्वामिनीति वदन्ती स्थितेयं नभस्तले लवलिका स्थित्वा च क्षणमात्रं समवतीर्णा सहर्षा, मयोक्तं—हले! किं सहर्षाऽसि किं समागतस्ते स्वामी?, अनयोक्तं—अम्ब! नाद्यापि समागतः स्वामी किं तु समागतौ तौ राजकुमारौ निरीक्षितं च ताभ्यां भर्तृदारिकादर्शनार्थं समस्तमुद्यानं केवलमतिगहनतयाऽस्य प्रदेशस्य न दृष्टा भर्तृदारिका, ततोऽसौ भर्तृदारिकाहृदयदयितः सविषादः सम्भ्रान्तस्तेन द्वितीयेन यथा—कुमार! गुणधारण! स्थीयतां तावत्तत्रैव चूतवने तस्यैव च चूतस्याधो यत्र दृष्टाऽऽसीद्भवता सा पटुलपवनचलितकुवलयदललोललोचना हृदयतस्करी किमन्यत्र पर्यटितेन? कदाचिद्दैवयोगात्पुनस्तत्रैवोपलभ्यत इति, तेनोक्तं—एवं भवतु, ततो गतौ तौ तदभिमुखं, इदमम्ब मे हर्षकारणं, वत्सयोक्तं—भवतु मातः! किमेवं मां प्रतारयसि?, ततोऽनया तत्प्रत्यायनार्थं कृतानि शपथशतानि तथापि न प्रत्यायिता वत्सा मदनमञ्जरी, मयोक्तं—हले लवलिके! किमनेन बहुना?, दर्शय तावन्मे कुमारं येन तं स्वयमेवेहानीय वत्सामाह्लादयामि, अनयोक्तं—एषा सज्जाऽस्मि प्रवर्तताम्म्बा, ततो विमुच्य वत्सासमीपे तां धवलिकां प्रवृत्ताऽहं, ततश्च नीताऽहमेवमनया लवलिकया भवतः समीपं, तदेषोऽत्र कुमार! परमार्थः—वत्सां कण्ठगतप्राणां, तां मे दुष्कररोचिकाम्। उत्थायानुग्रहं कृत्वा, कुमारो द्रष्टुमर्हति ॥ ७७॥ ततो विलोकितं मया कुलंधरवदनं, तेनोक्तं—कुमार! गम्यतां कोऽत्र विरोधः?, ततः कृतमस्माभिस्तत्र गमनं, दृष्टा यथानिर्दिष्टा मदनमञ्जरी, ततोऽहं निमग्न इव सुखामृतमये महाह्रदे अवतीर्ण इव रतिरसमये महासमुद्रे वर्तमान इव सर्वानन्दसन्दोहे परिपूर्ण इव सर्वमनोरथभरेण प्रीणिताशेषेन्द्रियग्राम इव सर्वोत्सवसमुदये संजातस्तद्दर्शने सतीति, तथा सापि

सवितर्का स्वप्नोऽयं भवेदिति सविषादा स्थिरः प्र-
मामवलोक्य प्राप्तः स एवायमिति हृष्टा चिरादृष्ट इत्युत्कण्ठिता कुतस्तस्यागमनमिति
त्यय इति जातनिर्णया विरहेऽपि जीवितेति सलज्जा कथं मामेष प्रतिपद्यत इति सोद्वेगा निरीक्षते मामयमिति सप्रमोदेति संपन्ना संकी-
र्णरसनिर्भरहृदया, अत एव चालंकृता पुलकजालकेन विभूषिता स्वेदबिन्दुमौक्तिकनिकरेण बन्धुरा समुत्तालश्वसितपवनेन हृदयहारिणी
सुललितलतेव कम्पमाना सर्वथा—अनाख्येयं रसं कंचिदत्यन्तप्रीतिनिर्भरा । मया सा स्निग्धलोलाक्षी, भजन्ती प्रविलोकिता ॥ ७८ ॥
ततोऽभिहिता कामलतया—वत्से ! किं जातस्तेऽधुना लवलिकावचने संप्रत्ययः ?, ततः स्मितेन रञ्जयन्ती मम हृदयमिव सुधाधवले
नापि विमलकपोलौ स्थिता साऽधोमुखी, जातः सर्वेषां प्रमोदः, अत्रान्तरे—लसद्भूषणरत्नौघप्रभाजालैः समन्ततः । प्रकाशितनभोभा-
गैर्ध्याकारानुकारिभिः ॥ ७९ ॥ भूरिविद्याधरैः सार्धं, शक्रवच्चारुलीलया । रत्नैर्भृत्वा विमानौघमागतः कनकोदरः ॥ ८० ॥ युग्मम् ।
सप्रमोदपुरं वीक्ष्य, सोऽवतीर्णः सखेचरः । आह्लादमन्दिरं प्राप्तो, दृष्टोऽस्माभिः सविस्मयम् ॥ ८१ ॥ ततः कृतमस्माभिरभ्युत्थानं
नामितमुत्तमाङ्गं विहिता प्रतिपत्तिः उपविष्टाः सर्वे यथास्थानं विलोकितोऽहं स्निग्धदृष्ट्या सुचिरं कनकोदरेण नूनं स एवायमिति निश्चित्य
तुष्टश्चेतसा पृष्टा कामलता कथितोऽनया वृत्तान्तः, कनकोदरेणोक्तं—देवि ! निर्वहितमेव वत्साया दुष्करोचिकात्वमीदृशपुरुषरत्ने ययाऽ-
नया कृतो मनोनिर्बन्धः, न खलु शची पुरंदरादन्यत्र स्वचित्तं निवेशयते, कामलतयोक्तं—एवमेतन्नास्त्यत्र सन्देहः ॥ अत्रान्तरे समा-
गतो वेगेन चटुलः, तेन च निवेदितं किमपि कनकोदराय कर्णाभ्यर्णे, ततोऽलमत्र कालविलम्बेनेति कामलतां प्रति वदता समालोच्य
सह कुलन्धरेण तत्रैव स्थाने संक्षेपतः कारितोऽहं पाणिग्रहणं मदनमञ्जर्याः कनकोदरेण निर्वर्तितो विवाहानन्दः प्रकटितानि तानि वज्र-
वैडूर्येन्द्रनीलमहानीलकर्केतनपद्मरागमरकतचूडामणिपुष्परागचन्द्रकान्तरुचकमेचकाद्यनर्घेयरत्नराशिपरिपूरितानि विमानानि, ततोऽभिहितः

कुलन्धरः कनकोदरेण—भद्र! राजपुत्र कोशार्थमेतेषामिहानयनं, ततो यथाऽस्माकं दर्पवृद्धये स्वीकृता मदनमञ्जरी वत्सा तथैवान्यदपि स्वीकर्तुमर्हति राजपुत्रः, कुलंधरेणोक्तं—यूयमेव प्रमाणं किमत्र राजपुत्रस्य ?, न खलु गुरवो यथेष्टं कारयन्तो राजपुत्राभ्यर्थनां कर्तुमर्हन्ति, ततः परितुष्टः कनकोदरः कृतकृत्योऽहमिदानीं निश्चिन्तीभूता वत्सा मदनमञ्जरीति भावनया गता परमपरितोषं कानलता दृष्टो लवलिकादिः परिजनः, तथाहि—कन्या शोककरी जाता, चिन्ताकृद्धर्ममानिका। वितर्ककारिणी दाने, दौर्गत्ये गाढदुःखदा ॥८२॥ सानुरूपाय रुच्याय, धार्मिकाय धनैर्युता। किल निश्चिन्ततताहेतुः, सद्वंशे प्रतिपादिता ॥ ८३ ॥ अतस्तां रत्नपूगाढ्यां, दत्त्वा मदनमञ्जरीम्। महां स हृष्टः संपन्नः, सबन्धुः कनकोदरः ॥ ८४ ॥ अत्रान्तरे—सप्रमोदपुरस्याग्रे, मेघजालनिवातुलम्। विद्याधरबलं दूराद्दृश्यते स नभस्तले ॥ ८५ ॥ तच्च चक्रासितूणीरकुन्तनाराचभीषणम्। शक्तिप्रासधनुर्दण्डगदाशूलभयानकम् ॥८६॥ प्रेङ्खद्धेतिप्रभाजालकरालं दर्पनिर्भरम्। असङ्ख्यवल्गदुद्दामखेचराधिपसङ्कुलम् ॥ ८७ ॥ सिंहनादमहोत्कृष्टिनिध्वानभृतदिक्पथम्। संनद्धबद्धकवचक्रोधान्धभटदारुणम् ॥८८॥ त्रिभिर्विशेषकम्। अथ सङ्ग्रामशौण्डीरं, स्पर्धमानं तदुत्कटैः। क्षणादागतमभ्यर्णे, दृष्टमस्माभिरुन्मुखैः ॥८९॥ ततः कनकोदरेणोक्तं—भो भो विद्याधरास्तूर्णं, सज्जीभवत सम्मुखाः। सोऽयं चटुलवृत्तान्तः, साम्प्रतं स्फुटतां गतः ॥९०॥ तथाहि—सकोपा ये गताः पूर्वं, मामसंभाष्य मण्डपात्। स्थितास्ते मीलकेनैव, मत्सराध्मातचेतसः ॥ ९१ ॥ त एते खेचराः सर्वे, पर्यालोच्य परस्परम्। समागताश्चैर्ज्ञात्वा, दत्तां मदनमञ्जरीम् ॥ ९२ ॥ एतेषामिदमाकूतं, किलायं गुणधारणः। हीनो भूगोचरोऽस्मत्तो, वयं विद्याधरोत्तमाः ॥ ९३ ॥ तदेते निपतन्त्यत्र, यावदाह्लादमन्दिरे। प्रेरयामः क्षणात्तावद्गरुडा इव वायसान् ॥ ९४ ॥ अपसारयत वेगेन, भूमिगोचरभल्लकाः। सन्तो यूयममीषां हि, मिथ्यामानं खगोचरम् ॥ ९५ ॥ अथ तत्स्वामिनो वाक्यमाकर्ण्य रणशालिनः। समत्पतितमा-

पुण्योदयेन खलद्वय-लम्पता

अत्रान्तरे मया चिन्तितं—अहो न सुन्दरं जातमिदमेतेन हेतुना । यतो मत्कारणेऽमीषां, प्रल-
रब्धास्ते भूमिष्ठा नभश्चराः ॥ ९६ ॥ अत्रान्तरे मया चिन्तितं—अहो न सुन्दरं जातमिदमेतेन हेतुना । यतो मत्कारणेऽमीषां, प्रल-
योऽत्र भविष्यति ॥ ९७ ॥ अथोत्पतितुकामेषु, तेषु तत्सम्मुखं तदा । नभःस्थिते परानीके, यज्जातं तन्निबोध मे ॥ ९८ ॥ निर्व्यापारं
गताटोपं, निःशब्दं स्थिरलोचनम् । केनचिल्लेप्यतां नीतं, स्तम्भित्वा तद्बलद्वयम् ॥ ९९ ॥ ततो निष्पन्दमन्दाक्षं, तत्सैन्यद्वितयं तदा ।
भूम्याकाशस्थमन्योऽन्यं, चित्रन्यस्तमिवेक्षते ॥ १०० ॥ अथ तेषां नभःस्थानां, गतोऽहं दृष्टिगोचरम् । समं मदनमञ्जर्या, निविष्टो वरविष्टरे
॥ १०१ ॥ ततोऽस्मद्दर्शनात्तेषां, सर्वेषां मनसि स्थितम् । अहो रूपमहो मूर्तिरहो कान्तिरहो गुणाः ॥ १०२ ॥ अहो धैर्यमहो स्थैर्यं,
नरस्यास्य महात्मनः । अहो मदनमञ्जर्याः, पर्यालोचितकारिता ॥ १०३ ॥ ययाऽयमीदृशो भर्ता, गृहीतः स्वपरीक्षया । अमुनैव वयं
नूनं, स्तम्भिता निजतेजसा ॥ १०४ ॥ तथाहि—समं मदनमञ्जर्या, दृश्यते मुत्कलः स्वयम् । अयं सह वयस्येन, राजपुत्रो न शेषकाः
॥ १०५ ॥ तद्दुष्टं कृतमस्माभिर्नररत्नं यदीदृशम् । जिघांसितं महापापैः, प्राप्तमेतद्धि तत्फलम् ॥ १०६ ॥ तदेष स्वामिकोऽस्माकं, वय-
मस्य पदातयः । एवं चिन्तयतां तेषां, प्रशान्तो मत्सरानलः ॥ १०७ ॥ ततस्ते तत्क्षणादेव, केनचिन्मुत्कलीकृताः । आगत्य पादयो
स्तूर्णं, पतिता मे नभश्चराः ॥ १०८ ॥ अथाभिधातुमारब्धा, ललाटे कृतकुड्मलाः । क्षन्तव्यं दुष्कृतं नाथ!, भृत्यास्ते ह्यधुना वयम्
॥ १०९ ॥ ततस्तच्चेष्टितं दृष्ट्वा, संपन्नो गतमत्सरः । जातश्च मुत्कलो भद्र!, ससैन्यः कनकोदरः ॥ ११० ॥ ततो नभश्चराः सर्वे,
क्षमयन्तः परस्परम् । आनन्दोदकपूर्णाक्षाः, संजाता बान्धवाधिकाः ॥ १११ ॥ तं च वृत्तान्तमाकर्ण्य, स राजा मधुवारणः । जनको
मे समायातस्तत्रैवाह्लादमन्दिरे ॥ ११२ ॥ ततश्च—मयाऽम्बरचरैः सर्वैः, कृत्वाऽभ्युत्थानमादरात् । समं मदनमञ्जर्या, नतं तातांह्रिप-
ङ्कजम् ॥ ११३ ॥ ततोऽम्बाऽन्तःपुरैः सार्धं, शेषलोकाश्च ते मया । खेचरैश्च प्रणामादिविधिना बहुमानिताः ॥ ११४ ॥ तदनन्तरं च—

आनन्दपुलकोद्भेदसुन्दरं दधता वपुः । हर्षनीरप्लुताक्षेण, तातेनालिङ्गनं कृतम् ॥११५॥ ततः कुलधरेणाखे, वृत्तान्तो निखिलस्तदा । रत्नचूडश्च विनयनम्रेण, यथावृत्तो निवेदितः ॥ ११६ ॥ अथ ते खेचराः सर्वे, तातस्याग्रे प्रभाषिताः । देवोऽयं स्वामिकोऽस्माकं, रत्नचूडोऽयम-दायकः ॥ ११७ ॥ अयं धन्यः कृतार्थोऽयं, भूषिताऽनेन मेदिनी । अचिन्त्यवरवीर्योऽयं, नास्ति लोकेऽप्यमूदृशः ॥ ११८ ॥ ततोऽ-म्बरचरैरेवं, स्तूयमानं विलोक्य माम् । तातः प्रह्लादमापन्नो, जननी च सुमालिनी ॥ ११९ ॥ तथाहि—अन्तःपुरं पुरं सैन्यं, पाद-वृद्धैः समाकुलम् । मद्भूतिं तादृशीं दृष्ट्वा, संजातं हर्षनिर्भरम् ॥ १२० ॥ ततः सर्वे प्रमोदेन, सप्रमोदे तदा पुरे । प्रवेष्टुकामास्तोषेण, जनाः किं किं न कुर्वते ॥ १२१ ॥ तथाहि—गगनचारिगणे वियति स्थिते, मयि च तातयुते जयकुञ्जरे । करिवरान्तरवर्तिपुरंधरे, करिणिकानिहिते दयिताजने ॥ १२२ ॥ विविधलासविलासपरायणे, प्रमदनिर्भरगायनबन्धुरे । वरविभूषणमाल्यमनोहरे, विबुधवृन्दसमे निखिले जने ॥ १२३ ॥ ननु परिस्फुटमेव तदा नरैः, प्रमुदिताशयसौख्यभरोद्धुरैः । अमरलोकसमानमिदं वनं, पुरवरं च सुदेवि वि-निश्चितम् ॥ १२४ ॥ पृथुनितम्बपयोधरचारुभिः, प्रमदनृत्तपरैः प्रमदाजनैः । इति विलासशतैर्वरलोचने, प्रविशति स्म स सर्वजनः पुरे ॥ १२५ ॥ ततो विद्याधरैः सार्धं, सबन्धुः कनकोदरः । तातेनाह्लादितोऽत्यर्थं, दानसन्मानपूजनैः ॥ १२६ ॥ किं बहुना?—सर्व-रत्नमयं किं वा, किं वाऽमृतविनिर्मितम् । किं वा सुरसरापूर्णं, किं वा वाग्गोचरातिगम्? ॥ १२७ ॥ गाढाह्लादकरं चित्ते, पूर्णसर्वमनो-रथम् । भद्रेऽगृहीतसङ्केते!, लङ्घितं मम तद्दिनम् ॥१२८॥ तथाहि—संप्राप्तं कामसर्वस्वं, लब्धा मदनमञ्जरी । लाभाय रत्नराशीनां, सं-पूर्णोऽर्थमनोरथः ॥ १२९ ॥ तथा—तातास्बाचित्ततोषेण, बन्धुपौरसुखेन च । रिपूणां प्रतिघातेन, जातश्चित्तोत्सवो महान् ॥ १३० ॥ ततश्चाह्लादसन्दोहपरिपूरितमानसः । स्थित्वा प्रदोषे तातादिसहितोऽहं यथेच्छया ॥ १३१ ॥ ततः सकलसामग्रीसनाथे देव-

तत्रावगाहितो दिव्यः, सुरतामृतसागरः । केवलं लौल्यमुक्तत्वान्नासक्ति-
यद्दिवि । सार्धं मदनमञ्जर्या, स्थितः संवाससद्मनि ॥ १३२ ॥ लब्धनिद्रासुखोऽत्यन्तं, प्रबुद्धः सह कान्तया । कृतं प्रभातकर्तव्यं, ताताम्बावन्दनादिकम् ॥ १३४ ॥ अथा-
नितरां मया ॥ १३३ ॥ यातः प्रभातेऽसौ, मत्समीपं कुलंधरः । स मां प्रत्याह दृष्टोऽद्य, मया स्वप्नः स कीदृशः ? ॥ १३५ ॥ मानुपाणि मया पश्च, भो द-
दृष्टानि परिस्फुटम् । त्रयः पुमांसो द्वे नार्यौ, तैश्चेदं तव भाषितम् ॥ १३६ ॥ यदुत—य एप सुखसन्दोहसागरो गुणधारणे । संजातोऽयं
कृतोऽस्माभिः, स सर्वो नात्र संशयः ॥ १३७ ॥ तथाऽन्यदपि यत्किंचिदस्य पूर्वं परत्र च । संपद्येत तदस्माभिस्तच्चिन्तं भो कुलन्धर !
॥ १३८ ॥ एवं तानि ब्रुवाणानि, मानुपाणि समामतः । गतान्यदर्शनं बुद्धस्ततोऽहं गुणधारण ! ॥ १३९ ॥ न जाने कानि तान्यत्र,
मानुपाणि विशेपतः । तन्वयन्ति सदा यानि, कार्याणि तव भावतः ॥ १४० ॥ मयोक्तं कथ्यतामेप, तातादिभ्यस्त्वयाऽधुना । स्वप्नो
विज्ञायते येन, भावार्थोऽस्य परिस्फुटः ॥ १४१ ॥ ततो निवेदितस्तेन, विद्वत्सङ्घातपूरिते । ताताऽऽस्थाने निजस्वप्नो, मद्वयस्येन धीमता
॥ १४२ ॥ ततस्तातादिभिः सर्वैरेकवाक्यतया तदा । निजबुद्ध्या विनिश्चित्य, स्वप्नार्थोऽयं प्रभाषितः ॥ १४३ ॥—अनुकूलानि वर्तन्ते,
देवरूपाणि कानिचित् । यैरीदृशी कुमारस्य, कृता कल्याणमालिका ॥ १४४ ॥ तैरेव प्रियमित्राय, कुमारस्य निवेदितम् । तोपात्स्वप्ना-
न्तरे सर्वं, यथाऽस्माभिरिदं कृतम् ॥ १४५ ॥ एतद्याकर्ण्य मे चित्ते, पूर्वापरविरोधतः । स्मृत्वा कामलतावाक्यं, सन्देहः समजायत
॥ १४६ ॥ यतो मया चिन्तितं—कनकोदरराजेन, किं चत्वारि पुरा तथा । किं वा कुलंधरेणाद्य, पश्च दृष्टानि तानि वै ? ॥ १४७ ॥
कानि वा देवरूपाणि, ममैवं कार्यचिन्तनम् । अनुकूलानि कुर्वन्ति, किं वोरीकृत्य कारणम् ? ॥ १४८ ॥ सर्वथा सर्वमेवेदं, गहनं प्रति-
भासते । ममाद्यापि न जानेऽहं, किमत्र यत कारणम् ? ॥ १४९ ॥ एवं च स्थिते—यद्यतीन्द्रियवेत्तारं, कंचित्पश्यामि सन्मुनिम् ।

ततः पृष्ट्वाऽऽत्मसन्देहमेनं कुर्यां विनिर्णयम् ॥ १५० ॥ तदेवंविधसङ्कल्पात्सन्देहकलितोऽप्यहम् । तदा याचारिनिर्दिष्टं, सत्यार्थं तं न दूषये ॥ १५१ ॥ अथ ते खेचराः सर्वे, दिनानि कतिचित्तदा । कनकोदरसंयुक्ताः, संस्थिता मम मन्दिरे ॥ १५२ ॥ अथाहारागृहाश्चो-दप्रीणितास्ते यथेच्छया । स्वस्थानमन्यदा प्राप्ता, भूत्यभावं प्रपद्य मे ॥ १५३ ॥ ततो मदनमञ्जर्या, सार्धं मे रतिसागरे । निमग्नस्याऽऽन-रस्येव, लीलया यान्ति वासराः ॥१५४॥ वर्धते च तया सार्धमाह्लादोऽमृतदायकः । सद्भावमीलनासारः, प्रेमाबन्धो मनोहरः ॥ १५५॥ तातचिन्तितकार्यस्य, प्रणताखिलभूभुजः । न मे तदा विशालाक्षि!, चिन्तागन्धोऽपि विद्यते ॥ १५६ ॥ किं च—विद्याधरोपनीतैश्च, माल्यभूषादिभिर्मम । संपूर्णसर्वकामत्वाज्जाता तृप्तिसुखासिका ॥ १५७ ॥ तदेवं लौल्यर्दीनात्मा, प्रविष्टः सुखसागरे । स्थितोऽहं तत्र चार्वङ्गि!, सभार्यः सकुलंधरः ॥ १५८॥ अन्यदा मित्रयुक्तेन, गतेनाह्लादमन्दिरे । सभार्येण मया दृष्टः, कन्दनाम्ना मुनीश्वरः॥१५९॥ ततो विनयनम्रोऽहं, प्रणिपत्य यतीश्वरम् । तस्याग्रे भूतले शुद्धे, निषण्णो धर्मकाम्यया ॥ १६० ॥ अथ प्रह्लादजननी, चेतसः कर्णपे-शला । विहिता मे यतीन्द्रेण, तेन सद्धर्मदेशना ॥ १६१ ॥ तां चाकर्णयता भद्रे!, विशुद्धेनान्तरात्मना । आविर्भूतौ मया दृष्टौ, पुनस्तौ वरबान्धवौ ॥ १६२ ॥ ततश्च प्रत्यभिज्ञातौ, यथाऽयं स सदागमः । अयं चासौ महाभागः, सम्यग्दर्शननामकः ॥ १६३ ॥ अथ प्र-पन्नौ भावेन, तौ मया वरलोचने! । गुरुवाक्यप्रबुद्धेन, हितकारितया नरौ ॥ १६४ ॥ इतश्च—वेदनीयनरेन्द्रस्य, पदातिः परिकी-र्तितः । यः सातनामा राजेन्द्रः, सत्पुरे विबुधालये ॥ १६५ ॥ सोऽत्यन्तं मयि रक्तात्मा, स्निग्धभावविधित्सया । पूर्वमेव मया सार्धं, सप्रमोदेऽभ्युपागतः ॥ १६६ ॥ प्राक् केवलं तिरोभूतः, सोऽकार्षीन्मे सुखासिकाम् । आविर्भूतस्तदा जातो, यदा जातौ सुबान्धवौ ॥ १६७ ॥ ततश्च—या सत्कलत्ररत्नौघभोगजन्या सुखासिका । तदानीं गुरुमूले मे, साऽनन्तगुणतां गता ॥ १६८ ॥ अन्यच्च—यदा

कन्दमुनि-समागमः

कुलंधरेणापि, महत्तमसदागमौ । तथा मदनमञ्जर्या, तौ प्रपन्नौ यथा मया ॥ १६९ ॥ ततोऽधिकतरं तुष्टस्तदाऽहं स च मे मुनिः । विशेषतः करोत्येव, भूयः सद्धर्मदेशनाम् ॥ १७० ॥ अत्रान्तरे—चित्तवृत्तिमहाटव्यां, लीनलीनाः प्रकम्पिताः । भयेन रोधकं हित्वा, महामोहादयः स्थिताः ॥ १७१ ॥ ततश्च—चारित्रधर्मराजेन, मन्त्री सद्बोधनामकः । इदमुक्तस्तदा भद्रे!, मनाक् संतुष्टचेतसा ॥१७२॥ यदुत—सुन्दरोऽवसरो गन्तुं, विद्यामादाय तेऽधुना । आर्य! संसारिजीवस्य, पार्श्वे गाढं फलप्रदः ॥ १७३ ॥ तथाहि—शुभ्रीभूताऽधुना किंचिच्चित्तवृत्तिमहाटवी । निवृत्तो रोधकोऽस्माकमीषद्दूरे च शत्रवः ॥ १७४ ॥ तं कर्मपरिणामाख्यं, ततः पृष्ट्वा नरेश्वरम् । गच्छ त्वं शीघ्रमादाय, विद्यामेनां सुकन्यकाम् ॥ १७५ ॥ कन्दसाधुसमीपस्थः, साम्प्रतं स चरैर्मया । विज्ञातस्तत्र चावश्यं, भवन्तं प्रतिपत्स्यते ॥ १७६ ॥ सद्बोधेनोदितं देव!, युक्तमेतन्न संशयः । किं तु कालविलम्बोऽत्र, युक्तोऽद्यापि प्रयोजने ॥ १७७ ॥ स हि पुण्योदयस्तस्य, स च सातो वयस्यकः । कियन्तमपि तत्कालमेतौ भोगफलप्रदौ ॥ १७८ ॥ अतोऽद्यापि बलादेतौ, गृहे तं **गुणधारणम्** । शब्दादिसुखसंपूर्णं, वात्सल्याद्धारयिष्यतः ॥ १७९ ॥ एवं च स्थिते—अध्यास्ते स गृहं यावदनुवर्तनया तयोः । शब्दादिविषयग्रामं, सुखहेतुं च मन्यते ॥ १८० ॥ तावन्न युज्यते देव!, मम गन्तुं तदन्तिके । नयनं न च विद्याया, जाघटीति कथंचन ॥ १८१ ॥ युग्मम् । केवलं प्रेष्यतामेष, देवेन निजदारकः । तदन्तिकेऽधुना तूर्णं, **गृहिधर्मः** सभार्यकः ॥ १८२ ॥ प्रस्तावोऽस्याधुना देव!, तत्समीपेऽतिसुन्दरः । गन्तुं सपरिवारस्य, वर्तते कार्यसाधकः ॥ १८३ ॥ गतमात्रमिमं देव!, स भावेन प्रपत्स्यते । भविष्यतीष्टा तस्यास्य, भार्या **सद्गुणरक्तता** ॥ १८४ ॥ किं च—यदा सदागमस्तावत्तस्य पार्श्वे गतः पुरा । तदाऽयं द्रव्यतस्तेन, भूरिवारा विलोकितः ॥ १८५ ॥ यदा तु तत्पार्श्वगतः, सम्यग्दर्शननामकः । महत्तमोऽतिवात्सल्यान्नीतस्तेनाप्ययं तदा ॥ १८६ ॥ पल्योपमपृथक्त्वे च, लङ्घिते तेन भा-

ततः पृष्ट्वाऽऽत्मसन्देहमेनं कुर्यां विनिर्णयम् ॥ १५० ॥ तदेवंविधसङ्कल्पात्सन्देहकलितोऽप्यहम् । तदा तातादिभिर्दिष्टं, स्वरूपं तं न दूषये ॥ १५१ ॥ अथ ते खेचराः सर्वे, दिनानि कतिचित्तदा । कनकोदरसंपुष्टाः, संस्थिता मम मन्दिरे ॥ १५२ ॥ अथाऽऽदरात्प्रो-दमीणितास्ते यथेच्छया । स्वस्थानमन्यदा प्राप्ता, भूत्यभावं प्रपद्य मे ॥ १५३ ॥ ततो मदनमञ्जर्या, सार्धं मे रतिसागरे । निमग्नस्याम-रस्येव, लीलया यान्ति वासराः ॥१५४॥ वर्धते च तया सार्धमागाढोऽमृतदायकः । सद्भावमीलनासारः, प्रेमबन्धो मनोहरः ॥ १५५॥ तातचिन्तितकार्यस्य, प्रणताखिलभूभुजः । न मे तदा विशालाक्षि!, चिन्तागन्धोऽपि विद्यते ॥ १५६ ॥ किं च—विद्याधरैरनेकैश्च, माल्यभूषादिभिर्मम । संपूर्णसर्वकामत्वाज्जाता तृप्तिसुखासिका ॥ १५७ ॥ तदेवं सौख्यपूर्णात्मा, प्रविष्टः सुखसागरे । स्थितोऽहं तत्र चार्वङ्गि!, सभार्यः सकुलंधरः ॥ १५८ ॥ अन्यदा मित्रयुक्तेन, गतेनाऽऽह्लादमन्दिरे । सभार्येण मया दृष्टः, कन्दनामा मुनीश्वरः ॥१५९॥ ततो विनयनम्रोऽहं, प्रणिपत्य यतीश्वरम् । तस्याग्रे भूतले शुद्धे, निषण्णो धर्मकाम्यया ॥ १६० ॥ अथ महाह्लादजननी, चेतसः कर्णपे-शला । विहिता मे यतीन्द्रेण, तेन सद्धर्मदेशना ॥ १६१ ॥ तां चाकर्णयता भद्रे!, विशुद्धेनान्तरात्मना । आविर्भूतौ मया दृष्टौ, पुनस्तौ वरबान्धवौ ॥ १६२ ॥ ततश्च प्रत्यभिज्ञातौ, यथाऽयं स सदागमः । अयं चासौ महाभागः, सम्यग्दर्शननामकः ॥ १६३ ॥ अथ प्र-पन्नौ भावेन, तौ मया वरलोचने! । गुरुवाक्यप्रबुद्धेन, हितकारितया नरौ ॥ १६४ ॥ इतश्च—वेदनीयनरेन्द्रस्य, पदातिः परिकी-र्तितः । यः सातनामा राजेन्द्रः, सत्पुरे विबुधालये ॥ १६५ ॥ सोऽत्यन्तं मयि रक्तात्मा, मित्रभावविधित्सया । पूर्वमेव मया सार्धं, सप्रमोदेऽप्युपागतः ॥ १६६ ॥ प्राक् केवलं तिरोभूतः, सोऽकार्षीन्मे सुखासिकाम् । आविर्भूतस्तदा जातो, यदा जातौ सुबान्धवौ ॥ १६७ ॥ ततश्च—या सत्कलत्ररत्नोपभोगजन्या सुखासिका । तदानीं गुरुमूले मे, साऽनन्तगुणतां गता ॥ १६८ ॥ अन्यच्च—सदा

कन्दमुनि-समागमः

कुलंधरेणापि, महत्तमसदागमौ । तथा मदनमञ्जर्या, तौ प्रपन्नौ यथा मया ॥ १६९ ॥ ततोऽधिकतरं तुष्टस्तदाऽहं स च मे मुनिः । विशेषतः करोत्येव, भूयः सद्धर्मदेशनाम् ॥ १७० ॥ अत्रान्तरे—चित्तवृत्तिमहाटव्यां, लीनलीनाः प्रकम्पिताः । भयेन रोधकं हित्वा, महामोहादयः स्थिताः ॥ १७१ ॥ ततश्च—चारित्रधर्मराजेन, मन्त्री सद्बोधनामकः । इदमुक्तस्तदा भद्रे!, मनाक् संतुष्टचेतसा ॥१७२॥ यदुत—सुन्दरोऽवसरो गन्तुं, विद्यामादाय तेऽधुना । आर्य! संसारिजीवस्य, पार्श्वे गाढं फलप्रदः ॥ १७३ ॥ तथाहि—शुभ्रीभूताऽधुना किंचिच्चित्तवृत्तिमहाटवी । निवृत्तो रोधकोऽस्माकमीषद्दूरे च शत्रवः ॥ १७४ ॥ तं कर्मपरिणामाख्यं, ततः पृष्ट्वा नरेश्वरम् । गच्छ त्वं शीघ्रमादाय, विद्यामेनां सुकन्यकाम् ॥ १७५ ॥ कन्दसाधुसमीपस्थः, साम्प्रतं स चरैर्मया । विज्ञातस्तत्र चावश्यं, भवन्तं प्रतिपत्स्यते ॥ १७६ ॥ सद्बोधेनोदितं देव!, युक्तमेतन्न संशयः । किं तु कालविलम्बोऽत्र, युक्तोऽद्यापि प्रयोजने ॥ १७७ ॥ स हि पुण्योदयस्तस्य, स च सातो वयस्यकः । कियन्तमपि तत्कालमेतौ भोगफलप्रदौ ॥ १७८ ॥ अतोऽद्यापि बलादेतौ, गृहे तं **गुणधारणम्** । शब्दादिसुखसंपूर्णं, वात्सल्याद्धारयिष्यतः ॥ १७९ ॥ एवं च स्थिते—अध्यास्ते स गृहं यावदनुवर्तनया तयोः । शब्दादिविषयग्रामं, सुखहेतुं च मन्यते ॥ १८० ॥ तावन्न युज्यते देव!, मम गन्तुं तदन्तिके । नयनं न च विद्याया, जाघटीति कथंचन ॥ १८१ ॥ युग्मम् । केवलं प्रेष्यतामेष, देवेन निजदारकः । तदन्तिकेऽधुना तूर्णं, गृहिधर्मः सभार्यकः ॥ १८२ ॥ प्रस्तावोऽस्याधुना देव!, तत्समीपेऽतिसुन्दरः । गन्तुं सपरिवारस्य, वर्तते कार्यसाधकः ॥ १८३ ॥ गतमात्रमिमं देव!, स भावेन प्रपत्स्यते । भविष्यतीष्टा तस्यास्य, भार्या सद्गुणरक्तता ॥ १८४ ॥ किं च—यदा सदागमस्तावत्तस्य पार्श्वे गतः पुरा । तदाऽयं द्रव्यतस्तेन, भूरिवारा विलोकितः ॥ १८५ ॥ यदा तु तत्पार्श्वगतः, सम्यग्दर्शननामकः । महत्तमोऽतिवात्सल्यान्नीतस्तेनाप्ययं तदा ॥ १८६ ॥ पल्योपमपृथक्त्वे च, लङ्घिते तेन भा-

यतः । प्रपन्नो गृहिधर्मोऽयं, पूर्वमासीत्ततः परम् ॥ १८७ ॥ यदा यदा पुनर्दृष्टौ, महत्तमसदागमौ । असह्या भावतो यारः, प्रपन्नोऽयं तदा तदा ॥ १८८ ॥ अधुना केवलं देव!, यतोऽभ्यर्णे सदागमः । तेनैष हन्त तत्पार्श्वे, विशेषेण प्रदीप्यते ॥ १८९ ॥ तत्तूर्णं यातु तत्पार्श्वे, रञ्जयत्वेष तं गुणैः । प्रस्तावो मादृशां तत्र, ततो याने भविष्यति ॥ १९० ॥ अन्यच्च—महामोहादिसचासन्निधिचमूचेर्विनुद्धता । गृहिधर्मेऽपि तत्रस्थे, भवेद्देव! विशेषतः ॥ १९१ ॥ तथा—स स्यादभिमुखोऽस्माकमक्षेपेण दिदृक्षया । अनेन गृहिधर्मेण, पार्श्वस्थेन प्रचोदितः ॥ १९२ ॥ चेतःसुखासिका गुर्वी, सन्तुष्टिः कर्मतानवम् । भवभीतेरभावश्च, गृहिधर्मेण ते गुणाः ॥ १९३ ॥ तस्मात्प्रस्थाप्यतामेष, गृहिधर्मस्तदन्तिके । यास्यामोऽवसरं ज्ञात्वा, पश्चात्सर्वे वयं पुनः ॥ १९४ ॥ तदिदं मन्त्रिणो वाक्यं, श्रुत्वा सर्वातिनिर्मलम् । चारित्रधर्मराजेन, प्रहितो निजदारकः ॥ १९५ ॥ स कर्मपरिणामस्य, गत्वा मूलं तदाज्ञया । समागतो ममाभ्यर्णं, सद्वेद्याह्लादमन्दिरे ॥ १९६ ॥ अथ कन्दमुनेश्चार्वीं, शृण्वतो धर्मदेशनाम् । आविर्भूतो ममाग्रेऽसौ, मुनिना च प्रकाशितः ॥ १९७ ॥ गुणरक्ततया युक्तस्तथा द्वादशमानुषैः । मयाऽतः प्रतिपन्नोऽसौ, बन्धुबुद्ध्या नरोत्तमः ॥ १९८ ॥ तथा कुलंधरेणापि, कान्तया च सबान्धवः । प्रपन्नो गृहिधर्माख्यो, जाताऽत्यन्तं सुखासिका ॥ १९९ ॥ अथ कन्दमुनिः पृष्टः, सन्देहं पूर्वचिन्तितम् । तं मया स्वप्नसंबद्धं, सद्भावार्थबुभुत्सया ॥ २०० ॥ ततः कन्दमुनिः प्राह, स्वप्नार्थस्य विनिर्णयः । अस्यातीन्द्रियवेत्तारं, विना नैवोपलभ्यते ॥ २०१ ॥ सन्ति मे केवलालोकभास्करा वरसूरयः । गुरवो निर्मला नाम, दूरदेशविहारिणः ॥ २०२ ॥ एवं च—तत्पादमूलं यास्यामि, वन्दनार्थमहं यदा । तदा तान् प्रश्नयिष्यामि, भद्र! तावकसंशयम् ॥ १०३ ॥ यतः—योऽयं स्वप्नद्वयाज्जातः, सन्देहस्ते मनोगतः । विविक्तं तस्य भावार्थं, विज्ञास्यन्ति महाधियः ॥ २०४ ॥ मयोक्तं—भदन्त! यदि तेऽत्रैव, गुरवस्ते कथंचन । आगच्छेयुस्ततस्तत्स्यात्सुन्दरादपि

अथवा केव-
सुन्दरम् ॥ २०५ ॥ मुनिराह महाभाग!, गतोऽहं वचनेन ते । गुरून् विज्ञाप्य ते नूनं, पूरयिष्ये मनोरथम् ॥ २०६ ॥ सदागमे
लालोकालोकिताखिलचेतसः । विज्ञाय भवतश्चित्तमागमिष्यन्ति ते स्वयम् ॥ २०७ ॥ केवलं गृहिधर्मेऽत्र, सम्यग्दर्शनसंयुते । सभार्यकः
च कर्तव्यो, भवता तावदादरः ॥ २०८ ॥ ततश्च—इदं कन्दमुनेर्वाक्यमाकर्ण्य श्रुतिपेशलम् । महाप्रसाद इत्येवं, ब्रुवाणोऽहं ततः सोऽपि
॥ २०९ ॥ समित्रश्च तदा भद्रे!, विनयानम्रमस्तकः । प्रणम्य तं महाभागं, काननाद्भवने गतः ॥ २१० ॥ युग्मम् । तदा
महाभागो, मुनिर्मुनिवरैर्युतः । गतो निर्मलसूरीणां, गुरूणां पादवन्दकः ॥ २११ ॥ अथ कालक्रमाद्भद्रे!, स राजा मधुवारणः ।
लोकान्तरीभूतः, पिता मे लब्धधर्मकः ॥ २१२ ॥ ततो राज्येऽभिषिक्तोऽहं, बन्धुमन्त्रिमहत्तमैः । महानन्दविमर्देन, हर्षनिर्भरमानसैः
॥ २१३ ॥ ततः परिणतं राज्यं, रक्तं मे राजमण्डलम् । शत्रवः किङ्करीभूता, वशीभूताश्च खेचराः ॥ २१४ ॥ किं बहुना?—मरुतो-
ऽपि ममाज्ञायां, वर्तन्ते नतमस्तकाः । वर्धेते कोशदण्डौ च, जायन्ते सर्वसम्पदः ॥ २१५ ॥ किं च—नाकुञ्चितं कचिच्चापं, न कृता
कोपदारुणा । दृष्टिस्तथापि मे जातं, राज्यं कण्टकवर्जितम् ॥ २१६ ॥ तथाप्येवंविधेऽनल्पसुखसन्दोहकारणे । विद्यमानेऽपि नो जातं,
मम लौल्याकुलं मनः ॥ २१७ ॥ किं तर्हि?—सदागमे सदोद्योगी, सम्यग्दर्शनतत्परः । पुण्योदयेन संयुक्तो, गृहिधर्मे कृता-
दरः ॥ २१८ ॥ सातेनाह्लादितो नित्यं, स्थितोऽहं सकुलंधरः । समं मदनमञ्जर्या, देववद्दिवि लीलया ॥ २१९ ॥ एवं च तिष्ठतस्तत्र,
ममस्यानन्दसागरे । साम्राज्ये मम चार्वङ्गि!, भूरिकालोऽतिलङ्घितः ॥ २२० ॥ अथान्यदा ममास्थाने, प्रविश्य प्रियदारकः । कल्याणो
नाम मामेवं, प्रणिपत्य व्यजिज्ञपत् ॥ २२१ ॥ यदुत—आह्लादमन्दिरे देव!, देवदानवपूजिताः । समागता महाभागा, निर्मला
नाम सूरयः ॥ २२२ ॥ तच्छ्रुत्वाऽहं तदा भद्रे!, कल्याणवचनं मुदा । न मामि देहे नो गेहे, न पुरे न जगत्त्रये ॥ २२३ ॥ ततोऽ-

ङ्गलग्नसंयुक्तं, तस्मै संतुष्टचेतसा । दीनाराणां मया लक्षं, दापितं प्रियभाषिणे ॥ २२४ ॥ ततः [illegible], [illegible] [illegible] ।
निर्गतो नगराद्भद्रे!, सूरीणां पादवन्दकः ॥ २२५ ॥ अथामरकृते दिव्ये, [illegible] । ते सूरयो मया दृष्टाः, [illegible]
तयः ॥ २२६ ॥ वेष्टिता मुनिवृन्देन, देवदानवखेचरैः । तेभ्यो नम्रोत्तमाङ्गेभ्यः, कुर्वाणा धर्मदेशनाम् ॥ २२७ ॥ ततश्च—[illegible]
माश्वभूपितः सह राजकैः । अहं भक्त्या विहायेदं, नरेन्द्रं चिह्नपञ्चकम् ॥ २२८ ॥ तद्यथा—छत्रं खड्गं किरीटं च, वाहनं च तथा
परम् । ततः कृतोत्तरासङ्गः, प्रविष्टः सूर्यवमहे ॥ २२९ ॥ ततो भगवतः सम्यग्, द्वादशावर्तवन्दनम् । दत्त्वा यथाक्रमं शेषान्, व-
न्द्य मुनिपुङ्गवान् ॥ २३० ॥ लब्धाशीर्वादतुष्टात्मा, भूयो नत्वा मुनीश्वरम् । प्रीतः सपरिवारोऽहं, निषण्णः [illegible] ॥ २३१ ॥
अथ कर्मविषोत्तारकारिणी भव्यदेहिनाम् । अमृतस्राविवास्येन, गुरुणाऽऽरम्भि देशना ॥ २३२ ॥ कथं?—"भो भव्याः शरणं धर्मो,
"नास्त्यन्यस्सततभ्रमे । लसदुद्दामदुःखौघसङ्कुले भवचक्रके ॥ २३३ ॥ मरणाय भवे जन्म, कायो रोगनिबन्धनम् । तारुण्यं
"जरसो हेतुर्वियोगाय समागमः ॥ २३४ ॥ निमित्तं विपदां लोके, देहिनां सर्वसम्पदः । तन्नास्ति यन्न दुःखाय, यत्तु
"सांसारिकं जनाः! ॥ २३५ ॥ एवं च स्थिते—अमूर्ताः सर्वभावज्ञाखिलोकयोपरिवर्तिनः । क्षीणसङ्गा महात्मानः, केवलं सुख-
"मासते ॥ २३६ ॥ सर्वद्वन्द्वविनिर्मुक्ताः, सर्वाबाधाविवर्जिताः । सर्वसंसिद्धसत्कार्याः, सुखं तेषां किमुच्यते ॥ २३७ ॥ किं च—
"जन्माभावे जरामृत्योरभावो हेत्वभावतः । तदभावे च निःशेषदुःखाभावः सदैव हि ॥ २३८ ॥ परमानन्दभावश्च, तदभावे हि सा
"श्वतः । व्याबाधाभावसंसिद्धं, सिद्धानां सुखमिष्यते ॥ २३९ ॥ अथवा—सत्कषायेतरमन्या, निःस्पृहा भवचारके । संतुष्टा ध्यानयो-
"गेन, प्रशमामृतपायिनः ॥ २४० ॥ निःसङ्गा निरहङ्कारा, निर्मलीभूतचेतसः । सुखिनः केवलं लोके, देहिनोऽपि सुसाधवः ॥ २४१ ॥

"सुखमेव च वाञ्छन्ति, सर्वे जगति जन्तवः । तच्च नास्त्येव संसारे, विहायैकां सुसाधुताम् ॥ २४२ ॥ तदिदं भो महासत्त्वा!, वि-
"निश्चित्य विधीयताम् । विमुच्यासारसंसारं, भवद्भिः सा सुसाधुता ॥ २४३ ॥" ततो भद्रे! तदा मह्यं, प्रलघूभूतकर्मणः । इदं भग-
वतो वाक्यं, चित्तेऽत्यन्तं सुखायितम् ॥ २४४ ॥ चिन्तितं च मया—करोमीदं यदादिष्टं, भदन्तैः सुखकारणम् । ततः कृतं मया
भद्रे!, प्रव्रज्याभिमुखं मनः ॥ २४५ ॥ अत्रान्तरे विरतवचसि भगवति वचनसुधासेकवर्षिणि निर्मलसूरिकेवलिनि कन्दमुनिना बद्धकर-
कमलमुकुलं विधाय ललाटपट्टेऽभिहितमनेन—भगवन्निह जगति कस्य दुःशकः कालविलम्बः कर्तुं?, भगवतोक्तं—जिज्ञासोर्गुरुमूले
स्वसन्देहस्य, कन्दमुनिराह—यद्येवं ततो गुणधारणमहाराजस्येदानीं संशयमपनेतुमर्हन्ति भगवन्तः, भगवतोक्तं—एवं क्रियते, मयोक्तं—
महाप्रसादः, तदा कन्दमुनिं प्रत्यभिहितं—भदन्तानुगृहीतोऽहं भगवता भगवन्तं प्रश्नयता सुतरामनेन वचनविन्यासेन, कन्दमुनिनोक्तं—
महाराजानुमहार्हा एव यूयं, साम्प्रतं भगवद्वचनमाकर्ण्यतां, स्थितोऽहं प्रह्वतरो नतोत्तमाङ्गः, ततो भगवतोक्तं—महाराज! गुणधारणायं
ते सन्देहः, यथा यानि कनकोदरराजेन स्वप्ने दृष्टानि चत्वारि मानुषाणि यानि कुलंधरेण पश्चोपलब्धानि कतमानि तानि कथं वा मदी-
यकार्यपरंपरानिर्वर्तकानि किमिति चैकेन चत्वारि अपरेण पञ्च तानि विलोकितानि तथा किं देवरूपाणि तानि किं वाऽर्थशून्यं स्वप्नमात्रं
तद्द्वयमपीति संशयः, मयोक्तं—भगवन्नेवमिदं यदादिष्टं भगवता, भगवानाह—महाराज! यद्येवं ततो महतीयं कथा कथं निवेद्यतां कथं
वा श्रूयते?, मयोक्तं—तथापि ममानुग्रहेण कथयन्तु भगवन्तः, ततः कथिता भगवताऽसंव्यवहारनगरादारभ्य सर्वा सर्वसंविधानकोपेता
संक्षेपेण मदीयवक्तव्यता, अभिहितं च—तदेवमस्ति ते महाराज! स्वचित्तवृत्तौ विविधनगराकराद्याकुलमन्तरङ्गमहाराज्यं, केवलमभि-
भूय तान् युष्मद्धितकरणशीलांश्चारित्रधर्मराजादीन् बहिष्कृत्य च भवन्तं महामोहादिभिस्तदियन्तं कालमुद्दालितमासीत्, असावपि कर्म-

परिणामो भवतः प्रतिकूलतया तदेव महामोहादिबलं पुष्णाति स्म, साम्प्रतं पुनरसौ भवतोऽनुकूलो वर्तते, तेनैव च भवन्तं प्रति प्रगुणीकृताऽऽत्मीयमहादेवी कालपरिणतिः प्रसादिता ते भार्या भवितव्यता ग्रहीकृतो निजमहत्तमस्तेऽङ्गभूतः स्वभावः प्रोत्साहितश्च सहचरः पुण्योदयः तथाऽवधीरिताः किंचिन्महामोहादयः आश्वासिताश्चारित्रधर्मराजादयः दर्शिता ते पूर्वमत्यन्तसुखमालिका यतःप्रभृति पुनस्ते वल्लभीभूतः सदागमोऽभीष्टीभूतः सम्यग्दर्शनाख्यो महत्तमः तत आरभ्यानुकूलतरोऽसौ कर्मपरिणामो वर्तते ततो जनिता सपरिवारेण तेन विबुधालये निवसतस्ते विशिष्टतरा सुखपद्धतिः अधुना मधुवारणराजमन्दिरमवाप्तस्य ते सुखसन्दोहसिद्धये सुतरां प्रोत्साहितोऽसौ तव वयस्यः पुण्योदयः ततस्तेन संपादितेयं तव बहिरङ्गभार्या मदनमञ्जरी तेनैव च महापुरुषतया किलाहं कोऽत्र कार्यसम्पादनस्य? नूनमेतान्येव सकलकार्याणि घटयन्तीति मन्यमानेन कामरूपितया दर्शितानि स्वप्ने कनकोदरराजस्य, तान्येव कर्मपरिणामकालपरिणतिस्वभावभवितव्यतालक्षणानि, निरूपितोऽस्माभिरेव वरो मदनमञ्जर्याः ततोऽलं भवतामन्यवरान्वेषणेनेति ब्रुवाणान्येव चत्वार्यपि मानुषरूपतया, तेषु च विद्याधरेषु वैमुख्यमस्या मदनमञ्जर्यास्तेनैव तव वयस्येन पुण्योदयेन जनितं, किं तु महानुभावतया तदपि कर्मपरिणामादिभिर्विहितमिति स्वप्ने तन्मुखेनैवानेन प्रकाशितं, ततोऽभिहितः कर्मपरिणामेन पुण्योदयः—यदुतार्य! न सुन्दरमाचरितं भवता यदेवं कृत्वा स्वयमेव प्रयोजनं तथापि त्वयाऽऽत्मा प्रच्छादितो वयं पुनरेवं तत्कर्तृतया प्रकाशितानि, पुण्योदयः प्राह—देव! मा मैवमाज्ञापयत यूयं, आदेशकारी खल्वेष किङ्करजनो यूयमेवात्र परमार्थतः कर्तॄणि तान्येव च मया कनकोदरराजाय प्रकटितानि ततः किमत्रानुचितं?, कर्मपरिणामेनोक्तं—आर्य! सत्यमेवमिदं, तथापि त्वमेवात्र परमो हेतुः यतो न सुखसाधनानि सुन्दरकार्याणि भवद्विरहे वयमपि कर्तुं पारयामः ततः प्रकाशनीयः खल्वात्माऽपि भवता नान्यथा मे चित्तनिर्वृतिरिति, पुण्योदयेनोक्तं—

ख्यापिता च सकलकार्यसाधकता, तदेव-
यदाज्ञापयति देवः, ततः कुलंधराय स्वप्ने प्रकाशितानि पुनरात्मपथ्यमानि तान्येव पुण्योदयेन ख्यापिता च सकलकार्यसाधकता, तदेव-
मेतानि महाराज! मानुषाणि तथैव तेषां चतुर्णां पथ्यानां च दर्शने कारणमेतान्येव वा ते सम्बन्धीनि निःशेषप्रयोजनानि तन्नयन्ति मा
कार्षीः सन्देहमिति, मयोक्तं—भगवन्निदानीं योऽयं मदनमञ्जरीलाभादारात्संपन्नो मम निरुपमः सुखामृतसागरावगाहः किमेषोऽपि ते-
नैव कर्मपरिणामादिभिरुत्साहितेन पुण्योदयेन जनितः?, भगवानाह—बाढं, अपि च—महाराज! न केवलमेष एव जनितस्तवानेन, किं
तर्हि?, पूर्वमप्यमुना पुण्योदयेन विहितानि भवतो भूयांसि सुन्दरप्रयोजनानि, तथाहि—नन्दिवर्धनावस्थायां जनितस्तवानेन कनक-
मञ्जरीसम्बन्धः रिपुदारणकाले विहितो नरसुन्दरीमीलको वामदेवदशायां घटिता सद्गुणनिर्मलेन निर्भिध्यवत्सलेन विमलेन सह
मैत्री धनशेखरावसरे संपादिता नानाविधविचित्रा रत्नराशयो घनवाहनभावे समुत्पादितो निर्व्याजविमुक्तकलङ्कस्य तवोपर्यकलङ्कस्य
तादृशः स्नेहभावः आविर्भावितं तत्तादृशं महाराज्यं तथा विरचिताः सर्वस्थानेषु सुखपद्धतयः, केवलं न विज्ञातं वयस्यपुण्योदयस्य तदा
भवता माहात्म्यं, भवताऽऽरोपितो हिंसावैश्वानरमृषावादशैलराजस्तेयबहुलिकामैथुनसागरपरिग्रहमहामोहादिषु निःशेषदोषपुञ्जेष्वपि गुण-
सन्दोहः, मयोक्तं—भदन्त! यदि ममायं सुखपरंपराहेतुः पुण्योदयो वयस्यः प्रागप्यासीत् ततः किमिति मे तावन्ति दुःखकदम्बकानि
संजातानि किमिति वाऽनन्तकालमित्थमदंवितर्दकं परिभ्रमणं मे संपन्नमिति?, भगवानाह महाराज! यद्येवं ततः समूलमेतत्ते कथयिष्ये
येन समस्तस्ते सन्देहो विट्टलतीति, मयोक्तं भगवन्ननुग्रहो मे, भगवतोक्तं—महाराज! कथितं तावत्तुभ्यमिदं यथा असंव्यवहारनगरे
संसारिजीवाभिधानो वास्तव्यः कुटुम्बिकस्त्वमसि, तव चेदमनादिरूढमन्तरङ्गं चित्तवृत्तौ महाराज्यमिदं च चारित्रधर्मराजादिकं महा
मोहनरेन्द्रादिकं च, तत्र सैन्यद्वयं परस्परविरुद्धमपि सकलकालमवस्थितमेवाभूत्, स तु कर्मपरिणामो राजा तावकीनं वीर्यमुपलक्षयन्नेव

पुण्यपापो-
दयौ से-
नान्यौ

परिणामो भवतः प्रतिकूलतया तदेव महामोहादिबलं पुष्णाति स्म, साम्प्रतं पुनरसौ भवतोऽनुकूलो वर्तते, तेनैव च भवन्तं प्रति प्रगुणीकृताऽऽत्मीयमहादेवी कालपरिणतिः प्रसादिता ते भार्या भवितव्यता प्रह्वीकृतो निजमहत्तमस्तेऽङ्गभूतः स्वभावः प्रोत्साहितश्चाय सहचरः पुण्योदयः तथाऽवधीरिताः किंचिन्महामोहादयः आश्वासिताश्चारित्रधर्मराजादयः दर्शिता ते पूर्वमत्यन्तसुखमालिका यतःप्रभृति पुनस्ते वल्लभीभूतः सदागमोऽभीष्टीभूतः सम्यग्दर्शनाख्यो महत्तमः तत आरभ्यानुकूलतरोऽसौ कर्मपरिणामो वर्तते ततो जनिता सपरिवारेण तेन विबुधालये निवसतस्ते विशिष्टतरा सुखपद्धतिः अधुना मधुवारणराजमन्दिरमवाप्तस्य ते सुखसन्दोहसिद्धये सुतरां प्रोत्साहितोऽसौ तव वयस्यः पुण्योदयः ततस्तेन संपादितेयं तव बहिरङ्गभार्या मदनमञ्जरी तेनैव च महापुरुषतया किलाहं कोऽत्र कार्यसम्पादनस्य? नूनमेतान्येव सकलकार्याणि घटयन्तीति मन्यमानेन कामरूपितया दर्शितानि स्वप्ने कनकोदरराजस्य, तान्येव कर्मपरिणामकालपरिणतिस्वभावभवितव्यतालक्षणानि, निरूपितोऽस्माभिरेव वरो मदनमञ्जर्याः ततोऽलं भवतामन्यवरान्वेषणेनेति ब्रुवाणान्येव चत्वार्यपि मानुषरूपतया, तेषु च विद्याधरेषु वैमुख्यमस्या मदनमञ्जर्यास्तेनैव तव वयस्येन पुण्योदयेन जनितं, किं तु महानुभावतया तदपि कर्मपरिणामादिभिर्विहितमिति स्वप्ने तन्मुखेनैवानेन प्रकाशितं, ततोऽभिहितः कर्मपरिणामेन पुण्योदयः—भद्र! न सुन्दरमाचरितं भवता यदेवं कृत्वा स्वयमेव प्रयोजनं तथापि त्वयाऽऽत्मा प्रच्छादितो वयं पुनरेवं तत्कर्तृतया प्रकाशितानि, पुण्योदयः प्राह—देव! मा मैवमाज्ञापयत यूयं, आदेशकारी खल्वेष किङ्करजनो यूयमेवात्र परमार्थतः कर्तॄणि तान्येव च मया कनकोदरराजाय प्रकटितानि ततः किमत्रानुचितं?, कर्मपरिणामेनोक्तं—आर्य! सत्यमेवमिदं, तथापि त्वमेवात्र परमो हेतुः यतो न सुखसाधनानि सुन्दरकार्याणि भवद्विरहे वयमपि कर्तुं पारयामः ततः प्रकाशनीयः खल्वात्माऽपि भवता नान्यथा मे चित्तनिर्वृतिरिति, पुण्योदयेनोक्तं—

तेऽन्तराऽन्तरा । संपन्नं च सुखं भूप!, तन्माहात्म्येन किंचन ॥ २४७ ॥ कचित्पापोदयो भूयस्तैरेव निकटीकृतः । ततस्त्वं दुःखितो जातः, परित्यक्तः सदागमः ॥ २४८ ॥ एवं च—आलोच्याऽऽलोच्य यत्कृत्यमेकवाक्यतया पुरा । अमीभिर्भूप! निःशेषभवत्कार्यविचिन्तकैः ॥ २४९ ॥ अनन्तवाराः संसारे, पुण्योदयसमन्वितः । पापोदयं तिरोधाय, मीलितस्ते सदागमः ॥ २५० ॥ यदा तु गृहिधर्मेण, सम्यग्दर्शननामकः । युक्तः पार्श्वे तवानीतोऽमीभिरेव स्वतेजसा ॥ २५१ ॥ तदा पुनरसौ त्वत्तोऽमीभिर्दूरतरीकृतः । पापोदयः सैन्ययुतस्तव चोत्पादितं सुखम् ॥ २५२ ॥ युग्मम् । यतः पुण्योदयोपेतो, नीतस्त्वं विबुधालये । आनीतो मानवावासे, कृता कल्याणमालिका ॥ २५३ ॥ पुनश्च सर्वैः संभूय, तैरेव निकटीकृतः । पापोदयःससैन्यस्ते, त्याजिताश्च सुबान्धवाः ॥ २५४ ॥ एवं चासङ्ख्यवारास्ते, कृतौ विरहमीलकौ । अमीभिर्यावदानीतस्त्वमत्र नृपमन्दिरे ॥ २५५ ॥ ततोऽधुनाऽस्ति दूरस्थो, गाढं पापोदयस्तव ।ससैन्यो वर्तते तेन, तूष्णीमास्ते नरोत्तम! ॥ २५६ ॥ तैः कर्मपरिणामाद्यैरेते तु निकटीकृताः । साम्प्रतं ते महाभागाः, सातपुण्योदयादयः ॥ २५७ ॥ किं च—न विद्यतेऽनुबन्धोऽस्य, तेन पापोदयेन भोः । तेनायं तेऽधुना भूप!, जातः पुण्योदयोऽनघः ॥ २५८ ॥ अनेन तेऽधुना शस्या, लौल्यनिर्मुक्तमानसा । ईदृशीयं महाराज!, जनिता सुखमालिका ॥ २५९ ॥ किं बहुना?—चेष्टन्ते सर्वकार्येषु, सुन्दरासुन्दरेषु ते । तान्येव स्वप्रदृष्टानि, मानुषाणि न संशयः ॥ २६० ॥ यदा हि प्रतिकूलानि, वर्तन्ते तानि ते तदा । पापोदयं पुरस्कृत्य, दुःखमुत्पादयन्त्यलम् ॥ २६१ ॥ अनुकूलानि तान्येव, कारणैरपरापरैः । पुण्योदयेन ते तात!, कारयन्ति सुखासिकाम् ॥२६२॥ यत्प्राप्तं प्राप्स्यते यच्च, भवताऽत्र शुभाशुभम् । नित्यं तत्रोपयुक्तानि, तान्येव ननु कारणम् ॥ २६३ ॥ मयोक्तं भगवन्नत्र, विधातव्ये शुभाशुभे । किमकिंचित्करो वर्ते, सर्वथाऽहं बताऽऽत्मना ॥ २६४ ॥ सूरिराह महाराज!, मैवं मंस्थाः कदाचन । परिवारस्तवामूनि,

निजवर्गतया महामोहादिवत्सलोऽपि भवतोऽत्र बलद्वये साधारणमात्मानं दर्शयति, ज्वलद्वितापकः खल्वेष स्वरूपेण यदा यदैव तदो-बलवत्सैन्यमुपलभते तदा तदेवोपबृंहयति, तस्य च कर्मपरिणामस्य द्वौ सेनापती—एकः पापोदयो द्वितीयोऽयमेव पुण्योदय इति, स च पापोदयस्ते गाढं प्रतिकूलः स्वरूपेण, अत एव कर्मपरिणामस्य सम्बन्धि यत्तव वैरिभूतमेकान्तेनासुन्दरं सैन्यं तदेवासावधिकुरुते, पुण्योदयस्तु तवानुकूलः अत एव कर्मपरिणामस्य सत्कं यत्ते बन्धुभूतं सुन्दरमनीकं तदेवायमधिकुरुते, स च पापोदयस्तवानादिरूढोऽसंव्यवहारनगरादारभ्याभिव्यक्तरूपः सखाऽभूदेव, ततः सुप्रसिद्धत्वान्न दर्शितस्ते कचिदप्यसौ विशेषतो भवितव्यतया, ततस्त्वसेदं महाराज! गुणधारण समस्तं माहात्म्यं यत्ते संपन्नमनन्तकालमेवं परिभ्रमणं संभूता भूरिदुःखसन्ततयः परिकल्पितं हिंसादिषु हितत्वं न लक्षितोऽयं हितकरणशीलः पुण्योदयः, अन्यच्च—तेनैव पापोदयेन बहिष्कृतस्त्वं तस्मात्चित्तवृत्तिवर्तिनः स्वकीयादन्तरङ्गमहाराज्यात् तेनैव चाभिभूय प्रच्छादितं तव स्वाङ्गिकमेकान्तहितं चारित्रधर्मराजादिकमन्तरङ्गबलं तेनैव चानवरतं पारितोषिकमेकान्ताहितमपि बन्धुभूतं च दर्शितं महामोहादिसैन्यं वष्टतया च प्रकटितस्ते पुरतो वत्सलमित्ररूपतयाऽऽत्मा, तथाऽयमपि पुण्योदयस्तदा तेन पापोदयेनानुबद्धो यद्यपि ते सुखकारणमभूत् तथापि न कल्याणपरंपराहेतुतां प्रतिपन्न इति, तन्नास्य वराकस्य दोषोऽसौ, किं तर्हि ?, तस्यैव दुरात्मनः सर्वोऽप्ययं दोष इति, मयोक्तं—भगवन्निदानीं किमित्यसौ पापोदयस्तूष्णीमास्ते ?, भगवतोक्तं—महाराज! न स्वतन्त्रः खल्वसौ, किं तर्हि ?, सोऽप्यमीषां कर्मपरिणामकालपरिणतिस्वभावभवितव्यतादीनामायत्तो वर्तते, ततोऽमीभिरेव साम्प्रतं भवतः सकाशाद्दूरीकृतोऽसौ दुरात्मा, तथाहि—यतः प्रभृति भवत्समीपममीभिरनुज्ञातः समागतः सदागमस्तत एवारभ्य निवर्तिता तस्यामीभिः प्रबलता, ततः—

ईषद्दूरस्थितस्तेऽसौ, न जातो दुःखकारणम् । पापोदयोऽवकाशस्तु, लब्धः पुण्योदयेन च ॥ २४६ ॥ ततः सदागमे प्रीतिः, संजाता

क्वचित्पापोदयो भूयस्तैरेव निकटीकृतः । ततस्त्वं दुःखितो
तेऽन्तराऽन्तरा । संपन्नं च सुखं भूप!, तन्माहात्म्येन किंचन ॥ २४७ ॥ आलोच्याऽऽलोच्य यत्कृतमेकवाक्यतया पुरा । अमीभिर्भूप! निःशेषभवत्कार्यवि-
जातः, परित्यक्तः सदागमः ॥ २४८ ॥ एवं च— पुण्योदयसमन्वितः । पापोदयं तिरोधाय, मीलितस्ते सदागमः ॥ २५० ॥ यदा तु गृहि-
चिन्तकैः ॥ २४९ ॥ अनन्तवाराः संसारे, तदा पुनरसौ त्वत्तोऽमीभिर्दूरतरीकृतः । पापोदयः
धर्मेण, सम्यग्दर्शननामकः । युक्तः पार्श्वे तवानीतोऽमीभिरेव स्वतेजसा ॥ २५१ ॥ नीतस्त्वं विबुधालये । आनीतो मानवावासे, कृता कल्या-
सैन्ययुतस्तव चोत्पादितं सुरम् ॥ २५२ ॥ युग्मम् । यतः पुण्योदयोपेतो, त्याजिताश्च सुबान्धवाः ॥ २५४ ॥ एवं चास-
णमालिका ॥ २५३ ॥ पुनश्च सर्वैः संभूय, तैरेव निकटीकृतः । पापोदयः ससैन्यस्ते, गाढं पापोदयस्तव । स-
द्व्यवारास्ते, कृतौ विरहमीलकौ । अमीभिर्यावदानीतस्त्वमत्र नृपमन्दिरे ॥ २५५ ॥ ततोऽधुनाऽस्ति दूरस्थो, सातपुण्योदया-
सैन्यो वर्तते तेन, तूष्णीमास्ते नरोत्तम! ॥ २५६ ॥ तैः कर्मपरिणामाद्यैरेते तु निकटीकृताः । साम्प्रतं ते महाभागाः, जातः पुण्योदयोऽनघः ॥ २५८ ॥
दयः ॥ २५७ ॥ किं च—न विद्यतेऽनुबन्धोऽस्य, तेन पापोदयेन भोः । तेनायं तेऽधुना भूप!, किं बहुना?—चेष्टन्ते सर्वकार्येषु,
अनेन तेऽधुना शस्ता, लौल्यनिर्मुक्तमानसा । ईदृशीयं महाराज!, जनिता सुखमालिका ॥ २५९ ॥ यदा हि प्रतिकूलानि, वर्तन्ते तानि ते तदा । पापोदयं पुर-
सुन्दरासुन्दरेषु ते । तान्येव स्वप्रदष्टानि, मानुपाणि न संशयः ॥ २६० ॥ पुण्योदयेन ते तात!, कारयन्ति सुखासिकाम् ॥२६२॥
स्कृत्य, दुःखमुत्पादयन्त्यलम् ॥ २६१ ॥ अनुकूलानि तान्येव, कारणैरपरापरैः । मयोक्तं भगवन्नत्र, विधातव्ये
यत्प्राप्तं प्राप्स्यते यच्च, भवताऽत्र शुभाशुभम् । नित्यं तत्रोपयुक्तानि, तान्येव ननु कारणम् ॥ २६३ ॥ परिवारस्तवामूनि,
शुभाशुभे । किमकिंचित्करो वर्ते, सर्वथाऽहं वताऽऽत्मना ॥ २६४ ॥ सूरिराह महाराज!, मैवं मंस्थाः कदाचन ।

निजवर्गतया महामोहादिवत्सलोऽपि भवतोऽत्र बलद्वये साधारणमात्मानं दर्शयति, ज्वलद्वितापकः खल्वेष स्वरूपेण यदा यदेव तयोर्बलवत्सैन्यमुपलभते तदा तदेवोपबृंहयति, तस्य च कर्मपरिणामस्य द्वौ सेनापती—एकः पापोदयो द्वितीयोऽयमेव पुण्योदय इति, स च पापोदयस्ते गाढं प्रतिकूलः स्वरूपेण, अत एव कर्मपरिणामस्य सम्बन्धि यत्तव वैरिभूतमेकान्तेनासुन्दरं सैन्यं तदेवासावधिकुरुते, पुण्योदयस्तु तवानुकूलः अत एव कर्मपरिणामस्य सत्कं यत्ते बन्धुभूतं सुन्दरमनीकं तदेवायमधिकुरुते, स च पापोदयस्तवानादिरूढोऽसंव्यवहारनगरादारभ्याभिव्यक्तरूपः सखाऽभूदेव, ततः सुप्रसिद्धत्वान्न दर्शितस्ते कचिदप्यसौ विशेषतो भवितव्यतया, ततस्त्वस्येदं महाराज[1] गुणधारण समस्तं माहात्म्यं यत्ते संपन्नमनन्तकालमेवं परिभ्रमणं संभूता भूरिदुःखसन्ततयः परिकल्पितं हिंसादिषु हितत्वं न लक्षितोऽयं हितकरणशीलः पुण्योदयः, अन्यच्च—तेनैव पापोदयेन बहिष्कृतस्त्वं तस्माच्चित्तवृत्तिवर्तिनः स्वकीयादन्तरङ्गमहाराज्यात् तेनैव चाभिभूय प्रच्छादितं तव स्वाङ्गिकमेकान्तहितं चारित्रधर्मराजादिकमन्तरङ्गबलं तेनैव चानवरतं पारितोषिकमेकान्ताहितमपि बन्धुभूतं च दर्शितं महामोहादिसैन्यं बष्टतया च प्रकटितस्ते पुरतो वत्सलमित्ररूपतयाऽऽत्मा, तथाऽयमपि पुण्योदयस्तदा तेन पापोदयेनानुबद्धो यद्यपि ते सुखकारणमभूत् तथापि न कल्याणपरंपराहेतुतां प्रतिपन्न इति, तन्नास्य वराकस्य दोषोऽसौ, किं तर्हि ?, तस्यैव दुरात्मनः सर्वोऽप्ययं दोष इति, मयोक्तं—भगवन्निदानीं किमित्यसौ पापोदयस्तूष्णीमास्ते ?, भगवतोक्तं—महाराज ! न स्वतन्त्रः खल्वसौ, किं तर्हि ?, सोऽप्यमीषां कर्मपरिणामकालपरिणतिस्वभावभवितव्यतादीनामायत्तो वर्तते, ततोऽमीभिरेव साम्प्रतं भवतः सकाशाद्दूरीकृतोऽसौ दुरात्मा, तथाहि—यतः प्रभृति भवत्समीपममीभिरनुज्ञातः समागतः सदागमस्तत एवारभ्य निवर्तिता तस्यामीभिः प्रबलता, ततः—

ईषद्दूरस्थितस्तेऽसौ, न जातो दुःखकारणम् । पापोदयोऽवकाशस्तु, लब्धः पुण्योदयेन च ॥ २४६ ॥ ततः सदागमे प्रीतिः, संजाता

''सर्वलोकसमाश्रया । वर्तते नृपतेराज्ञा, विधातुर्हितकारिणी ॥ २८४ ॥ संपूजनेन ध्यानेन, स्तवेन व्रतचर्यया । इयमेव विधातव्या,
''तदाज्ञा तस्य सेवकैः ॥ २८५ ॥ निषिद्धाचरणैः सर्वैरियमेव विराध्यते । तदुक्तद्वादशाङ्गार्थैः, सर्वोऽप्यस्यां व्यवस्थितः ॥ २८६ ॥ तां
''च यो यावतीं लोके, विदधाति नरः सदा । अजानन्नपि तद्रूपं, तस्य तावद्भवेत्सुखम् ॥ २८७ ॥ केवलं—यस्तु तां लङ्घयन्नाज्ञां,
''विपरीतं विचेष्टते । जानन्नपि च तद्रूपं, स भवेद्दुःखभाजनम् ॥ २८८ ॥ यो यावत्कुरुते मोहात्तदाज्ञालङ्घनं जनः । तस्य तावद्भवे-
''द्दुःखं, यथा तत्करणे सुखम् ॥ २८९ ॥ एवं च स्थिते—तदाज्ञालङ्घनाद्दुःखं, तदाज्ञाकरणात्सुखम् । यतः संपद्यते सर्वं, सर्वे-
''षामपि देहिनाम् ॥ २९० ॥ अणुमात्रमपि तन्नास्ति, भुवनेऽत्र शुभाशुभम् । तदाज्ञानिरपेक्षं हि, यज्जायेत कदाचन ॥ २९१ ॥ तेने-
''च्छारागविद्वेषरहितोऽपि स भूपतिः । निर्वृतिस्थोऽपि कार्याणां, ज्ञेयः परमकारणम् ॥ २९२ ॥ स एव परमो हेतुरतस्ते गुणधारण! ।
''सुन्दरेतरकार्याणां, सर्वेषां नात्र संशयः ॥ २९३ ॥ तदाज्ञालङ्घनात्पूर्वं, जाता ते दुःखमालिका । अधुना तत्करत्वेन, सुखलेशोऽयमी-
''दृशः ॥ २९४ ॥ यदा तु तस्य संपूर्णामाज्ञाप्तिं तां करिष्यसि । तदा यः सुखसन्दोहस्तस्य विज्ञास्यसे रसम् ॥ २९५ ॥'' तदेवं पर-
मार्थेन, सर्वेऽमी तव हेतवः । प्रधानगुणभावेन, विज्ञेयाः सर्वकर्मसु ॥ २९६ ॥ एकेनापि विना भूप!, कार्यसिद्धिर्न विद्यते । अमीषां
प्रोक्तहेतूनां, समाजः कार्यकारकः ॥ २९७ ॥ मयोक्तं कारणग्रामः, किं पूर्णोऽयं निवेदितः? । एतावानेव किंवाऽस्ति, नाथान्यदपि
कारणम्? ॥ २९८ ॥ सूरिराह महाराज!, प्रायशः प्रतिपादितः । एतावानेव हेतूनां, मीलकः कार्यसाधकः ॥ २९९ ॥ अत्रैव शेषहे-
तूनामन्तर्भावो हि विद्यते । यथा यदृच्छानियती, प्रविष्टे भवितव्यताम् ॥ ३०० ॥ ततो निर्नष्टसन्देहस्तदाऽहं वरलोचने! । प्रतिपद्य
गुरोर्वाक्यं, तत्तथेति कृताञ्जलिः ॥ ३०१ ॥ पृष्टवानपरं सूरिं, सन्देहं मानसे स्थितम् । गाढमद्भुतहेतुत्वात्पूर्वकाले वितर्कितम् ॥ ३०२ ॥

सुस्थितकृते सुखदुःखे

भवानेवात्र नायकः ॥ २६५ ॥ तथाहि—भवतो योग्यताऽपेक्षं, चेष्टन्ते सर्वकर्मसु । ते कर्मपरिणामाद्यास्त्वच्छुभाशुभहेतवः ॥ २६६ ॥ ततस्ते निजयोग्यत्वं, प्रधानं भूप! कारणम् । सुन्दरेतरवस्तूनां, ते पुनः सहकारिणः ॥ २६७ ॥ राजन्ननादिरूढा सा, विद्यते तव योग्यता । यया संपादितः सर्वः, प्रपञ्चोऽयममूदृशः ॥ २६८ ॥ तया विना पुनः सर्वे, सुन्दरेतरवस्तुषु । ते कर्मपरिणामाद्याः, किं कुर्वन्तु वराककाः? ॥ २६९ ॥ ततस्त्वमत्र प्राधान्यात्कारणत्वेन गीयसे । सुन्दरेतरकार्याणां, सर्वेषामात्मभाविनाम् ॥ २७० ॥ मयोक्तं नाथ! यद्येवं, मम कार्यप्रसाधनम् । ततः किमियदेवात्र, कारणानां कदम्बकम्? ॥ २७१ ॥ किंचान्यदपि विद्येत, मम कार्यप्रसाधकम्? । सूरिराह महाराज!, समाकर्णय साम्प्रतम् ॥ २७२ ॥ "याऽस्त्यसौ निर्वृतिर्नाम, नगरी सुमनोहरा । निरन्तानन्दसन्दोहपरिपूर्णा निरा-
"मया ॥ २७३ ॥ तस्यामनन्तवीर्याढ्यः, सर्वज्ञः सर्वदर्शनः । अनन्तानन्दसंपूर्णः, सुस्थितः परमेश्वरः ॥ २७४ ॥ यो विद्यते महा-
"राज!, सर्वस्य जगतः प्रभुः । सुन्दरेतरकार्याणां, स ते परमकारणम् ॥ २७५ ॥ अनेकोऽप्येकरूपोऽसौ, गीयते वरसूरिभिः । अचि-
"न्त्यवीर्ययुक्तात्मा, परमात्मा स गद्यते ॥ २७६ ॥ स बुद्धः स विरिञ्चाख्यः, स विष्णुः स महेश्वरः । निष्कलः स जिनः प्रोक्तो,
"दृष्टतत्त्वैर्महात्मभिः ॥ २७७ ॥ न चेच्छया करोत्येष, तव कार्यपरम्पराम् । वीतरागो गतद्वेषो, निरिच्छोऽयं यतो मतः ॥ २७८ ॥
"यथा तु कुरुते तात!, तवायं सुन्दरेतरम् । कार्यजातं तथा वच्मि, साम्प्रतं विशदाक्षरैः ॥ २७९ ॥ सिद्धा भगवतस्तस्य, निश्चला
"सुप्रतिष्ठिता । अस्त्याज्ञा सर्वलोकानामाकालं करणोचिता ॥ २८० ॥ यदुत—निरन्धकारा कर्तव्या, चित्तवृत्तिः प्रभास्वरा । गोक्षी-
"रहारनीहारकुन्देन्दुविशदा सदा ॥ २८१ ॥ गृहीत्वा रिपुबुद्ध्या च, महामोहादिकं बलम् । अनुक्षणं निहन्तव्यं, घोरसंसारकारणम्
"॥ २८२ ॥ बन्धुबुद्ध्याऽवधार्येदं, पोषणीयं च सर्वदा । चारित्रधर्मराजाद्यं, सैन्यं कल्याणकारणम् ॥ २८३ ॥ इयमेतावती तस्य,

निजयोग्यता

सुस्थितकृते सुखदुःखे

परां तज्जनकान्यबाह्याध्यात्मिकवस्तुप्रचोदनमुखेनैव संपादयन्ति, तदेषां 'सामग्री जनिका न पुनरेकं किंचित्कस्यचिज्जनकमस्ती'ति, केवलं यदादिष्टं भगवद्भिर्यथाऽयं तथामुना पुण्योदयेनेदानीमीदृशः सुखलेशः संपादित इत्यनेन वाक्येन जनितो मे कुतूहलातिरेकः, यतश्चिन्तितं मया—अये यस्मिन्नहनि मया लब्धा मदनमञ्जरी तथाऽवाप्ता अनर्घेया भूरिरत्नराशयः प्रशमितं चिन्तितमात्रेण खेचराणां रणविड्वरं समुत्पन्नस्तेषां परस्परं बन्धुभावः गताः सर्वेऽपि मम भृत्यतां जनितस्तातांम्बादिपरितोषः प्रादुर्भूतो महोत्सवः समुत्पादितो नागरकानन्दः प्राप्ता मङ्गलेऽम्बरचराः विहितं सातेन तत्सन्मानादिकं श्लाघितोऽहं सर्वैः उल्लासितो यशःपटहः तदहर्मम सुखनिर्भरतयाऽमृतमयमिव प्रतिभासितमासीत्, तथा वर्धमाने मदनमञ्जर्या सह प्रेमाबन्धे जाते कन्दमुनिदर्शने मित्रतामुपगतेषु सातसदागमसम्यग्दर्शनगृहिधर्मेषु परिणते महाराज्ये विलसतो यथेच्छया सुखसन्दोहपरिपूर्णतया संजाता मम देवलोकसुखेऽप्यवज्ञा, तथाऽधुना दृष्टे भगवति वन्दिते सविनयं नष्टे सन्देहे पश्यतो भगवद्वदनकमलमाकर्णयतो वचनामृतं मम सुखातिरेको वाग्गोचरातीतो वर्तते तत्कथं भगवद्भिरादिष्टं यथाऽधुना संपादितस्तवानेन पुण्योदयेनायं सुखलेश इति ?, तथाहि—यद्ययमपि सुखलवस्तर्हि कीदृशं पुनस्तत्संपूर्णं सुखं स्यादिति संजातो मे मनसि वितर्कः, ततः कथयन्तु भगवन्तः कीदृशं पुनः शरीरिणस्तत्संपूर्णं सुखमिति ?, निर्मलसूरिणोक्तं—महाराज ! गुणधारण स्वानुभवेनैव विज्ञास्यसि त्वं तत्स्वरूपं किं तस्य कथनेन ?, मयोक्तं—भदन्त ! कथं ?, भगवानाह—महाराज ! यदा परिणेष्यसि त्वं दश कन्यकाः भविष्यति ताभिः सह सद्भावसारस्ते प्रेमाबन्धः ततस्तदोद्दामलीलया विलसतस्ते तन्मध्ये यत्सुखं संजनिष्यते तदपेक्षया सुखलव एवायमधुनातनो वर्तते, मयोक्तं—भगवन्नवधारितमिदानीं मया यथाऽहमेनामपि मदनमञ्जरीं परित्यज्य भगवत्पादमूले प्रव्रजितको भविष्यामि तत्कथमहं कन्यकादशकं परिणेष्ये ?, भगवतोक्तं—अवश्यं त्वया परिणेतव्यास्ताः कन्यकाः, किं च—युक्तमेव

यदुत भगवन्!—एकं भूमौ तथाऽऽकाशे, वर्तमानं द्वितीयकम् । तदाऽम्बरचरं सैन्यं, स्तम्भितं केन हेतुना? ॥ ३०३ ॥ सूरिराह म- हाराज!, तत्रापि परकारणम् । सैव पुण्योदयो ज्ञेयः, शेषकारणचोदितः ॥ ३०४ ॥ केवलं तस्य वीर्येण, प्रज्ञप्ता वनदेवता । तयोर्नरं तया सर्वं, स्तम्भितं तद्बलद्वयम् ॥३०५॥ रक्षितं मरणं तेषां, खेचराणां तवेच्छया । विमुक्तास्त्वदभिप्रेता, जनिता बान्धवोपमाः ॥३०६॥ तयाऽपि च कृतं कार्यं, कृतं तेनाभिधीयते । यतः प्रचोदकस्तस्याः, सैव पुण्योदयोऽनघः ॥ ३०७ ॥ अयं हि कार्यं कुर्वाणः, सुन्दरं ते नरोत्तम! । संप्रेर्य कारयत्यन्यैर्हेतुभिर्न पुनः स्वयम् ॥ ३०८ ॥ पापोदयोऽपि कुर्वाणस्तव कार्यमसुन्दरम् । प्रयोध कारयत्यन्यैर्हेतुभिर्न पुनः स्वयम् ॥ ३०९ ॥ तदन्ये हेतवो भूप!, सुन्दरेतरवस्तुषु । अप्रधानास्त्वया ज्ञेयास्तावेव परमौ यतः ॥ ३१० ॥ तथाहि—पूर्वं पापोदयेनैव, कारणैरपरापरैः । कारितानि विचित्राणि, दुःखानि बहुशस्तव ॥ ३११ ॥ इदानीं कारयत्येष, स्वसामर्थ्येन ते सुखम् । निमित्तमात्रं बाह्यानि, वस्तूनि गुणधारण! ॥ ३१२ ॥ मयोक्तं—भगवन्नष्टो मेऽधुना समस्तसन्देहः, अवधारितमिदं मया भगवद्व- चनेन यदुत—यदाऽहमज्ञानात्तिष्ठामि निर्वृतिनगरीपरमेश्वरमहाराजसुस्थिताज्ञालङ्घने करोमि भावान्धकारमलिनां चित्तवृत्तिं पोषयामि महामोहादिबलं तदा तत्तादृशं मदीयस्वरूपमालोक्य प्रतिकूलतां गतानि कर्मपरिणामकालपरिणतिस्वभावभवितव्यतादीनि तेन कर्मपरि- णामसेनापतिना पापोदयेन मत्प्रतिकूलात्मीयानीकसहितेन मम विविधदुःखपरंपरां तत्सम्पादकपरापरबाह्याभ्यन्तरवस्तुप्रेरणद्वारेण जन- यन्ति, यदा पुनरहं स्वयोग्यतामपेक्ष्य तस्यैव भगवतः सुस्थितमहानृपतेः प्रसादेनावाप्तसंज्ञानो भवामि तदाज्ञायां वर्ते विदधामि भाव- तमःक्षालनेन निर्मलां चित्तवृत्तिं प्रीणयामि चारित्रधर्मराजादिकं सैन्यं तदा तत्तादृशं मदीयचरितमाकलय्यानुकूलतां गतानि कर्मपरि- णामकालपरिणतिस्वभावभवितव्यतादीनि अनेन द्वितीयेन कर्मपरिणामसेनापतिना पुण्योदयेन मदनुकूलात्मीयसैन्यसहितेन मम सुखपरं-

अम्बरच- रछेन्द्रस्त- म्भनादि- हेतुः

शुभाशुभ- योः पा- ह्यानां नि- मित्तता

परां तज्जनकान्यबाह्याध्यात्मिकवस्तुप्रचोदनमुखेनैव संपादयन्ति, तदेषां 'सामग्री जनिका न पुनरेकं किंचित्कस्यचिज्जनकमस्ती'ति, केवलं यदादिष्टं भगवद्भिर्यथाऽयं तवामुना पुण्योदयेनेदानीमीदृशः सुखलेशः संपादित इत्यनेन वाक्येन जनितो मे कुतूहलातिरेकः, यतश्चिन्तितं मया—अये यस्मिन्नहनि मया लब्धा मदनमञ्जरी तथाऽवाप्ता अनर्घेया भूरिरत्नराशयः प्रशमितं चिन्तितमात्रेण खेचराणां रणविड्वरं समुत्पन्नस्तेषां परस्परं बन्धुभावः गताः सर्वेऽपि मम भृत्यतां जनितस्ताताम्बादिपरितोषः प्रादुर्भूतो महोत्सवः समुत्पादितो नागरकानन्दः प्राप्ता मद्भवनेऽम्बरचराः विहितं तातेन तत्सन्मानादिकं श्लाघितोऽहं सर्वैः उल्लासितो यशःपटहः तदहर्मम सुखनिर्भरतयाऽमृतमयमिव प्रतिभासितमासीत्, तथा वर्धमाने मदनमञ्जर्या सह प्रेमाबन्धे जाते कन्दमुनिदर्शने मित्रतामुपगतेषु सातसदागमसम्यग्दर्शनगृहिधर्मेषु परिणते महाराज्ये विलसतो यथेच्छया सुखसन्दोहपरिपूर्णतया संजाता मम देवलोकसुखेऽप्यवज्ञा, तथाऽधुना दृष्टे भगवति वन्दिते सविनयं नष्टे सन्देहे पश्यतो भगवद्वदनकमलमाकर्णयतो वचनामृतं मम सुखातिरेको वाग्गोचरातीतो वर्तते तत्कथं भगवद्भिरादिष्टं यथाऽधुना संपादितस्तवानेन पुण्योदयेनायं सुखलेश इति ?, तथाहि—यद्ययमपि सुखलवस्तर्हि कीदृशं पुनस्तत्संपूर्णं सुखं स्यादिति संजातो मे मनसि वितर्कः, ततः कथयन्तु भगवन्तः कीदृशं पुनः शरीरिणस्तत्संपूर्णं सुखमिति ?, निर्मलसूरिणोक्तं—महाराज ! गुणधारण स्वानुभवेनैव विज्ञास्यसि त्वं तत्स्वरूपं किं तस्य कथनेन ?, मयोक्तं—भदन्त ! कथं ?, भगवानाह—महाराज ! यदा परिणेष्यसि त्वं दश कन्यकाः भविष्यति ताभिः सह सद्भावसारस्ते प्रेमाबन्धः ततस्तदोद्दामलीलया विलसतस्ते तन्मध्ये यत्सुखं संजनिष्यते तदपेक्षया सुखलव एवायमधुनातनो वर्तते, मयोक्तं—भगवन्नवधारितमिदानीं मया यथाऽहमेनामपि मदनमञ्जरीं परित्यज्य भगवत्पादमूले प्रव्रजितको भविष्यामि तत्कथमहं कन्यकादशकं परिणेष्ये ?, भगवतोक्तं—अवश्यं त्वया परिणेतव्यास्ताः कन्यकाः, किं च—युक्तमेव

यदुत भगवन्!—एकं भूमौ तथाऽऽकाशे, वर्तमानं द्वितीयकम् । तदाऽम्बरचरं सैन्यं, स्तम्भितं केन हेतुना? ॥ ३०३ ॥ सूरिराह म-
हाराज!, तत्रापि परकारणम् । सैव पुण्योदयो ज्ञेयः, शेषकारणचोदितः ॥ ३०४ ॥ केवलं तस्य धैर्येण, प्रसभा मनसेरिता । कठोरतं
तया सर्वं, स्तम्भितं तद्बलद्वयम् ॥३०५॥ रक्षितं मरणं तेषां, खेचराणां स्वेच्छया । विद्युत्कान्तमदभिप्रेता, अनिता कान्धपोषमाः॥३०६॥
तयाऽपि च कृतं कार्यं, कृतं तेनाभिधीयते । यतः प्रचोदकस्तस्याः, सैव पुण्योदयोऽनघः ॥ ३०७ ॥ अयं हि कार्यं कुर्वाणः, सुन्दरं ते
नरोत्तम! । संप्रेर्य कारयत्यन्यैर्हेतुभिर्न पुनः स्वयम् ॥ ३०८ ॥ पापोदयोऽपि कुर्वाणस्तव कार्यमसुन्दरम् । प्रयोप कारयत्यन्यैर्हेतुभिर्न
पुनः स्वयम् ॥ ३०९ ॥ तदन्ये हेतवो भूप!, सुन्दरेतरवस्तुषु । अप्रधानास्त्वया ज्ञेयास्तावेव परमौ यतः ॥ ३१० ॥ तथाहि—पूर्वं
पापोदयेनैव, कारणैरपरापरैः । कारितानि विचित्राणि, दुःखानि बहुशस्तव ॥ ३११ ॥ इदानीं कारयत्येष, स्वसामर्थ्येन ते सुखम् ।
निमित्तमात्रं बाह्यानि, वस्तूनि गुणधारण! ॥ ३१२ ॥ मयोक्तं—भगवन्नष्टो मेऽधुना समस्तसन्देहः, अवधारितमिदं मया भगवद्-
वचनेन यदुत—यदाऽहमज्ञानात्तिष्ठामि निर्वृतिनगरीपरमेश्वरमहाराजसुस्थिताज्ञालङ्घने करोमि भावान्धकारमलिनां चित्तवृत्तिं पोषयामि महामोहादिबलं तदा तथादृशं मदीयस्वरूपमालोक्य प्रतिकूलतां गतानि कर्मपरिणामकालपरिणतिस्वभावभवितव्यतादीनि तेन कर्मपरिणामसेनापतिना पापोदयेन मत्प्रतिकूलात्मीयानीकसहितेन मम विविधदुःखपरंपरां तत्सम्पादकपरापरबाह्याभ्यन्तरवस्तुप्रेरणद्वारेण जनयन्ति, यदा पुनरहं स्वयोग्यतामपेक्ष्य तस्यैव भगवतः सुस्थितमहानृपतेः प्रसादेनायातसंज्ञानो भवामि तदाज्ञायां यत्नं विदधामि भावतमःक्षालनेन निर्मलां चित्तवृत्तिं प्रीणयामि चारित्रधर्मराजादिकं सैन्यं तदा तथादृशं मदीयचरितमाकलय्यानुकूलतां गतानि कर्मपरिणामकालपरिणतिस्वभावभवितव्यतादीनि अनेन द्वितीयेन कर्मपरिणामसेनापतिना पुण्योदयेन मदनुकूलात्मीयसैन्यसहितेन मम सुखपरं-

अम्बरचरखेचरस्तम्भनादिहेतुः

शुभाशुभयोः बाह्यानां निमित्तता

परां तज्जनकान्यबाह्याध्यात्मिकवस्तुप्रचोदनमुखेनैव संपादयन्ति, तदेषां 'सामग्री जनिका न पुनरेकं किंचित्कस्यचिज्जनकमस्ती'ति, केवलं यदादिष्टं भगवद्भिर्यथाऽयं तवामुना पुण्योदयेनेदानीमीदृशः सुखलेशः संपादित इत्यनेन वाक्येन जनितो मे कुतूहलातिरेकः, यतश्चिन्तितं मया—अये यस्मिन्नहनि मया लब्धा मदनमञ्जरी तथाऽवाप्ता अनर्घेया भूरिरत्नराशयः प्रशमितं चिन्तितमात्रेण खेचराणां रणविड्वरं समुत्पन्नस्तेषां परस्परं बन्धुभावः गताः सर्वेऽपि मम भृत्यतां जनितस्तातताम्बादिपरितोपः प्रादुर्भूतो महोत्सवः समुत्पादितो नागरकानन्दः प्राप्ता मद्भवनेऽम्बरचराः विहितं तातेन तत्सन्मानादिकं श्लाघितोऽहं सर्वैः उल्लासितो यशःपटहः तदहर्मम सुखनिर्भरतयाऽमृतमयमिव प्रतिभासितमासीत्, तथा वर्धमाने मदनमञ्जर्या सह प्रेमाबन्धे जाते कन्दमुनिदर्शने मित्रतामुपगतेपु सातसदागमसम्यग्दर्शनगृहिधर्मेषु परिणते महाराज्ये विलसतो यथेच्छया सुखसन्दोहपरिपूर्णतया संजाता मम देवलोकसुखेऽप्यवज्ञा, तथाऽधुना दृष्टे भगवति वन्दिते सविनयं नष्टे सन्देहे पश्यतो भगवद्वदनकमलमाकर्णयतो वचनामृतं मम सुखातिरेको वाग्गोचरातीतो वर्तते तत्कथं भगवद्भिरादिष्टं यथाऽधुना संपादितस्तवानेन पुण्योदयेनायं सुखलेश इति ?, तथाहि—यद्ययमपि सुखलवस्तर्हि कीदृशं पुनस्तत्संपूर्णं सुखं स्यादिति संजातो मे मनसि वितर्कः, ततः कथयन्तु भगवन्तः कीदृशं पुनः शरीरिणस्तत्संपूर्णं सुखमिति ?, निर्मलसूरिणोक्तं—महाराज! गुणधारण स्वानुभवेनैव विज्ञास्यसि त्वं तत्स्वरूपं किं तस्य कथनेन ?, मयोक्तं—भदन्त! कथं ?, भगवानाह—महाराज! यदा परिणेष्यसि त्वं दश कन्यकाः भविष्यति ताभिः सह सद्भावसारस्ते प्रेमाबन्धः ततस्तदोद्दामलीलया विलसतस्ते तन्मध्ये यत्सुखं संजनिष्यते तदपेक्षया सुखलव एवायमधुनातनो वर्तते, मयोक्तं—भगवन्नवधारितमिदानीं मया यथाऽहमेनामपि मदनमञ्जरीं परित्यज्य भगवत्पादमूले प्रव्रजितको भविष्यामि तत्कथमहं कन्यकादशकं परिणेष्ये ?, भगवतोक्तं—अवश्यं त्वया परिणेतव्यास्ताः कन्यकाः, किं च—युक्तमेव

ताभिः प्रव्राजयिष्यामो भवन्तं, न विरुध्यते ताभिः सार्धं प्रव्रज्या किं वा तद्रहितस्य ते प्रव्रजितेन?, न वलते हि प्रव्रजितो विरहितस्तादृशकुटुम्बिनीभिः, ततस्ताः परिणीय नियमाद्भवता प्रव्रजितव्यमिति, एतदाकर्ण्य किमेवं भगवान् भाषत इति विमर्शेन स्थितोऽहं विस्मितः, कन्दमुनिनोक्तं—भदन्त! कतमास्ताः कन्यकाः याः परिणेतव्या महाराजेन?, भगवानाह—यास्ताः पूर्वं निवेदिता मयाऽस्यैव चिरन्तनवृत्तान्तं कथयता ता एव ताः कन्यका नान्याः, कन्दमुनिराह—भदन्त! विस्मृतास्ता मेऽधुना अतो ममानुग्रहेण यत्र ता वर्तन्ते यस्य वा सम्बन्धिन्यो यन्नामिका वा सर्वमिदं निवेदयितुमर्हन्ति भगवन्तः, भगवतोक्तं—आकर्णय, अस्ति चित्तसौन्दर्यं नाम नगरं तत्र शुभपरिणामो राजा तस्य निष्प्रकम्पताचारुते द्वे भार्ये तयोर्यथाक्रमं क्षान्तिदये कन्यके विद्येते, तथाऽपरमस्ति शुभ्रमानसं नाम नगरं तत्र शुभाभिसन्धिर्नरेन्द्रः तस्य वरतावर्यते देव्यौ तयोर्मृदुतासत्यते कन्यके संजाते इति, तथाऽन्यदस्ति विशदमानसं नगरं तत्र शुद्धाभिसन्धिर्नरेश्वरः तस्य शुद्धतापापभीरुते गृहिण्यौ तयोश्च ऋजुताऽचौरते नाम द्वे कन्यके संभूते इति, तथा शुभ्रचित्तपुरेऽस्ति सदाशयो नरपतिः तस्य वरेण्यता देवी तस्या द्वे कन्यके, तद्यथा—ब्रह्मरतिर्मुक्तता चेति, तथाऽन्याऽस्ति तेनैव सम्यग्दर्शनेन स्ववीर्येण निर्वर्तिता मानसीविद्या नाम कन्यका, तथाऽपरा चारित्रधर्मराजस्य विरतेर्महादेव्याः कुक्षेः संभूताऽस्ति निरीहता नाम कन्येति, तदेतानि तान्यार्य! कन्दमुने तासां दशानामपि कन्यकानां वासाभिजननामानि ते निवेदितानि, कन्दमुनिनोक्तं—नाथ! महाप्रसादः, केवलं कथं पुनरेताः कन्यकाः प्राप्तव्या महाराजेन?, भगवतोक्तं—आलोच्य सह कालपरिणत्यादिभिर्गृहीत्वा तदनुमतिं कृत्वा पुरतः पुण्योदयं गत्वा तेषु पुरेषु अनुकूल्य तज्जननीजनकान् स एव कर्मपरिणामो दापयिष्यति समस्ता अपि ताः कन्यका महाराजायेति, केवलमनेनाप्यभ्यसनीयाः सद्गुणाः करणीयाऽऽत्मयोग्यता येनानुकूलतरो भवत्येनं प्रति स कर्मपरिणामः तदा-

नाभिमुखा जायन्ते स्वयमेव तासां पितरः ताश्च स्वत एवानुरज्यन्तेऽस्य ततो भवति निष्कृत्रिमः प्रेमाबन्धः, न खलु राजाक्रान्त्या प्रेमाबन्धो घटितः सुघटितो भवति, न च घटयितुं शक्यत इति, कन्दमुनिराह—भदन्त! किमत्र वक्तव्यमधुनैवायं भगवद्वचनकरणेन यथार्थो भविष्यति गुणधारणः, तत्करोत्येवैष यदाज्ञापयन्ति भगवन्तः, केवलमादिशन्तु विशेषेण नाथाः के पुनरनेन तासां कन्यकानां लाभाय सद्गुणाः सततमनुशीलनीयाः?, भगवतोक्तं—"आर्य! क्षान्तिमभिवाञ्छता तावदनेन भावनीया समस्तजन्तुषु मैत्री "सहनीयः परविहितः परिभवः अनुमोदनीयस्तद्द्वारेण परप्रीतियोगः चिन्तनीयस्तत्सम्पादनेनात्मानुग्रहः निन्दनीयः परिभावकदुर्गतिहे"तुतयाऽऽत्मा श्लाघनीयाः परकोपकारणभावरहिता धन्यतया भगवन्तो मुक्तात्मानः ग्रहीतव्याः कर्मनिर्जरणहेतुतया न्यक्कारकर्तारो हित"बुद्ध्या प्रतिपत्तव्याः संसारासारत्वदर्शितया त एव गुरुभावेन सर्वथा विधेयं निष्प्रकम्पमन्तःकरणमिति ॥ दयां पुनः परिणिनीषता"ऽनेन सर्वथा वर्जनीयः स्तोकोऽपि परोपतापः दर्शनीयः सर्वदेहिनां बन्धुभावः प्रवर्तितव्यं परोपकारकरणे नोदासितव्यं परव्यसनेषु "सर्वथा भवितव्यं समस्तजगदाह्लादकरामृताशयधारिणेति ॥ मृदुतां पुनरार्य! विवाहयिषता महाराजेन मोक्तव्यो जातिमदः परित्याज्यः "कुलाभिमानः वर्जनीयो बलोद्रेकः रहयितव्यः रूपोत्सेकः परिहर्तव्यस्तपोऽवष्टम्भः निराकरणीयो धनगर्वः निर्वासनीयः श्रुताहङ्कारः "अपक्षेप्तव्यो लाभमदः शिथिलयितव्यो वाल्लभ्यकानुशयः सेवनीया नम्रता अभ्यसनीयो विनयः सर्वथा कर्तव्यं नवनीतपिण्डोपमं हृद"यमिति ॥ तथा परिहरतः परेषां मर्मोद्घट्टनं वर्जयतः पैशुन्यं विमुञ्चतोऽवर्णवादं शिथिलयतो वाक्पारुष्यं गर्हयतो वक्रोक्तिं अनाचरतः "परिहासं अवदतोऽलीकवचनं त्यजतो वाचाटतां विदधतो भूतार्थोद्भावनं प्रगुणीभविष्यति गुणानुरक्ता महाराजस्य स्वयमेव सा सत्य"तेति । तथा निर्भर्त्सयता कौटिल्यं दर्शयता सर्वत्र सरलभावं परित्यजता परवञ्चनं विमलयता मानसं समनुशीलयता प्रकटाचारतां

"अनुवर्तयता सद्भावप्रधानतां सर्वथा कुर्वता प्रगुणदण्डोपममात्मान्तःकरणं महाराजेन सा ऋजुता वशीकर्तव्येति । तथा भारयति पर-
"पीडाभीरुतां निराकुर्वति परद्रोहबुद्धिं वर्जयति परधनहरणं लक्षयति तदपायहेतुतां गृह्णति दुर्गतिभयं महाराजे संजातानुरागाऽगमि-
"ष्यति स्वयंवरा सा नूनमचौरतेति । मुक्तां पुनरभिलषताऽऽर्य! महाराजेन सात्मीभावमानेतव्यो विवेकः द्रष्टव्यो यथास्वन्तरमन्या-
"द्भिन्नः खल्वात्मा शमनीया ग्रन्थपिपासा धारणीयं भावतो बहिरन्तश्चालम्बमन्तःकरणं सर्वथा पङ्कजलाभ्यामिवार्थकामाभ्यामलिप्तः
"पद्मवज्जनयितव्यो निजभाव इति । ब्रह्मरतिं पुनः पाणौ जिघृक्षता कन्दमुने! महाराजेन प्रतिपत्तव्याः समस्ता अपि मातर इव सुरनरतिरश्चां
"नार्यः न वस्तव्यं तद्वसतौ न कार्या तत्कथा न भजनीया तन्निषद्या न विलोकनीयानि तदिन्द्रियाणि न स्थातव्यं रतिस्वनिपुनकुड्या-
"भ्यर्णे न स्मरणीयं पूर्वललितं नाहरणीयः प्रणीताहारः रक्षणीया तदतिमात्रा न करणीया शरीरशोभा सर्वथोज्झनीया रताभिलाषितेति ।
"तथा सर्वपुद्गलद्रव्याणां देहधनविषयादीनां भावयते सततमनित्यतां चिन्तयते गाढमशुचिरूपतां ध्यायते दुःखात्मकतां लक्षयते चात्म-
"भिन्नस्वभावतां विरहयते सकलं कुवितर्कजालं विमृशते समस्तवस्तुतत्त्वमसौ महाराजाय गुणधारणाय स सद्बोधः समानीय दास्यति
"तां सम्यग्दर्शनात्मजां विद्याकन्यकामिति । तथा चित्तसन्तापायेच्छा मनोदुःखाय भोगाभिलाषो मरणाय जन्म वियोगाय प्रियसङ्गमः
"कोशकारकीटस्येव तन्तुसन्तानरचना निबिडात्मबन्धनाय जीवस्य सङ्ग्रहपरता क्लेशायासाय सकलं सङ्गजालं प्रवृत्तिर्दुःखं निवृत्तिः
"सुखमित्येवमनवरतं भावयतो महाराजस्य भविष्यति गाढमनुरक्ता सा निरीहतेति ॥" तदेते सद्गुणास्तासां दशानामपि कन्यकानामरा-
धने महाराजेनाभ्यसनीयाः, अन्यच्च—एवं कुर्वतोऽस्यानुकूलतयैवावसरं विज्ञाय दर्शयिष्यति समस्तं चारित्रधर्मराजादिकं निजबलं स
कर्मपरिणामः, ततः प्रत्येकमनुरूपगुणाभ्यासेनैवारमन्यनुरागमानेतव्यास्ते महाराजेन सुभटाः, ततः स्वाम्यनुरक्तास्ते निराकरिष्यन्ति

तन्महामोहादिसैन्यं, ततोऽयमवाप्तभावराज्यः स्वबलकलितो विनिर्जितभावशत्रुस्ताभिः प्रियकामिनीभिः सार्धं ललमानोऽत्यन्तसुखितो भविष्यति महाराजः, तदिदमेवानेन तावदनुष्ठेयमिति । कन्दमुनिराह—भदन्त! कियता पुनः कालेन महाराजस्येदं सेत्स्यति प्रयोजनं?, भगवतोक्तं—आर्य! षण्मासमात्रेण, ततो मयोक्तं—नाथ! त्वरयति मामतीव प्रव्रज्याग्रहणायान्तःकरणं भूयांश्चैष कालविलम्बः तत्क- थमिदं?, भगवानाह—राजन्नलमत्र त्वरया इयमेव हि परमार्थतः प्रव्रज्या यदस्य मदुपदिष्टस्यानुष्ठानं, द्रव्यलिङ्गं हि भवता गृहीतं पूर्व- मप्यनन्तवाराः न चैतद्व्यतिकरव्यतिरेकेण भवतस्तेन द्रव्यलिङ्गेन कश्चिद्विशिष्टतरः सम्पादितो गुणः, तदलं तावत्ते तदर्थमुत्त्वरितेनेदमेव मदुपदिष्टं कुर्वाणस्तिष्ठेति, कन्दमुनिनोक्तं—भदन्त! केन पुनः क्रमेण महाराजेन ताः कन्यकाः परिणेतव्याः?, भगवतोक्तं—आर्य! मदुपदेशमनुतिष्ठतोऽस्य समीपमागमिष्यत्यसौ विद्यामादाय सद्बोधो मन्त्री विवाहयिष्यत्यनेन तां कन्यकां स्थास्यत्यस्य समीपस्थः, ततः किमनेन बहुना?, यदसौ किमपि ब्रूते तदेवानेनानुष्ठेयं, जानात्येवासौ प्राप्तकालं सर्वं कारयितुं, तस्यागमने हि समाप्यतेऽस्मादृशामुप- देशावकाशः, तस्मात्स एव सद्बोधः सर्वत्र महाराजेन प्रमाणीकर्तव्य इति, मयोक्तं—नाथ! महाप्रसाद इच्छामोऽनुशास्तिं, ततोऽभि- वन्द्य सपरिवारः सपरिकरं भगवन्तं प्रविष्टोऽहं नगरे प्रारब्धोऽनुष्ठातुं भगवदुपदेशं गच्छन्ति दिनानि भगवत्पर्युपासनया च। अन्यदा भावयतो भगवदुपदिष्टास्ता भावनाः रात्रौ समागता मे निद्रा प्रबुद्धस्तयैव वासनया ततः प्रवृद्धा गाढतरं भावनाः, ततो रात्रिशेषे संजातो मे प्रमोदातिरेकः, ततः किमेतदिति विस्मितोऽहं यावत्समागतो मत्समीपं सद्बोधो मन्त्री विलोकितोऽसौ मया, तदभ्यर्णे च—आनन्द- दायिका दृष्टेः, सर्वावयवसुन्दरा । आस्तिक्यचारुवदना, धवलामललोचना ॥ ३१३ ॥ तत्त्वावगमसंवेगनामकं स्तनमण्डलम् । धारयन्ती नितम्बं च, प्रशमाख्यं मनोहरम् ॥ ३१४ ॥ सर्वथा—स्पृहणीयगुणोपेता, चित्तनिर्वाणकारिका । सा चिरं स्तिमिताक्षेण, मया विद्या-

"अनुवर्तयता सद्भावप्रधानतां सर्वथा कुर्वता प्रगुणदण्डोपममात्मान्तःकरणं महाराजेन सा ऋजुता वशीकर्तव्येति । यदा पारदार्य दर-
"पीडाभीरुतां निराकुर्वति परद्रोहबुद्धिं वर्जयति परधनहरणं लक्षयति तदपायहेतुतां गृह्णाति दुर्गतिभयं महाराजे तदा तामनुरागः कर्णि-
"ष्यति स्वयंवरा सा नूनमचौरतेति । मुक्तां पुनरभिलषताऽऽर्य! महाराजेन सात्मीभावमानेतव्यो विवेकः द्रष्टव्यो दारिद्र्यन्त्रादन्धा-
"क्लिष्टः खल्वात्मा शमनीया ग्रन्थपिपासा धारणीयं भावतो बहिरन्तश्चालपमन्तःकरणं सर्वथा पद्मपत्रवदम्भसा निर्लेपं कामाभ्यासाभिरतः
"पञ्चवज्जनयितव्यो निजभाव इति । ब्रह्मरतिं पुनः पाणौ जिघृक्षता कन्दमुने! महाराजेन प्रतिपत्तव्याः समस्ता अपि मातर इव सुरनरतिर्यक्स्त्रियः
"नार्यः न वस्तव्यं तद्वसतौ न कार्या तत्कथा न भजनीया तन्निषद्या न विलोकनीयानि तदिन्द्रियाणि न श्रोतव्यं तत्स्वनितकुड्या-
"न्तरं न स्मरणीयं पूर्वललितं नाहरणीयः प्रणीताहारः रक्षणीया तदतिमात्रा न करणीया शरीरशोभा सर्वथोपेक्षणीया रत्नाभिलाषितेऽपि ।
"तथा सर्वपुद्गलद्रव्याणां देहधनविषयादीनां भावयते सततमनित्यतां चिन्तयते गाढमशुचिरूपतां ध्यायते दुःखात्मकतां लक्षयते पारत-
"भिन्नस्वभावतां विरहयते सकलं कुवितर्कजालं विमृशते समस्तवस्तुतत्त्वमसौ महाराजाय गुणधारणाय स सन्तोषः समानीय दास्यति
"तां सम्यग्दर्शनात्मजां विद्याकन्यकामिति । तथा चित्तसन्तापायेच्छा मनोदुःखाय भोगाभिलाषो मरणाय जन्म वियोगाय प्रियसङ्गमः
"कोशकारकीटस्येव तन्तुसन्तानरचना निबिडात्मबन्धनाय जीवस्य सङ्ग्रहपरता क्लेशायासाय सकलं सङ्गजालं प्रवृत्तिर्दुःखं निवृत्तिः
"सुखमित्येवमनवरतं भावयतो महाराजस्य भविष्यति गाढमनुरक्ता सा निरीहतेति ॥" तदेते सद्गुणास्तासां दशानामपि कन्यकानामवा-
प्तये महाराजेनाभ्यसनीयाः, अन्यच्च—एवं कुर्वतोऽस्यानुकूलतयैवावसरं विज्ञाय दर्शयिष्यति समस्तं चारित्रधर्मराजादिकं निजबलं स
कर्मपरिणामः, ततः प्रत्येकमनुरूपगुणाभ्यासेनैवात्मन्यनुरागमानेतव्यास्ते महाराजेन सुभटाः, ततः स्वाम्यनुरक्तास्ते निराकरिष्यन्ति

रिणा? ॥ ३३३ ॥ यूयं हि यात मा यात, भयेन श्लथसन्धयः । मया यातव्यमेवास्य, प्रतिस्खलनकाम्यया ॥ ३३४ ॥ चलिते चारिभिधायेत्थं, ज्ञानसंवरणे नृपे । लज्जया चलितास्तेऽपि, सर्वे पापोदयादयः ॥ ३३५ ॥ रुद्धश्चागत्य तैर्मार्गस्तदा सद्बोधमन्त्रिणः । साशङ्काः केवलं सर्वे, भोः किमत्र भविष्यति? ॥ ३३६ ॥ इतश्च—चारित्रधर्मराजीयं, सैन्यं सद्बोधमन्त्रिणः । तदाऽनुव्रजनं कुर्वदागतं तावतीं भुवम् ॥ ३३७ ॥ ततः परस्पराह्वानचण्डनिर्घोषभीषणम् । आयोधनं दृढस्पर्धमालग्नं बलयोस्तयोः ॥ ३३८ ॥ अपि च—रथविलग्नसविशदशङ्खसमप्रभमेकतो, मधुकरच्छविसन्निभमन्यतः । त्रिपथगायमुनाजलवत्तदाऽमिलदलं प्रविभाति बलद्वयम् ॥ ३३९ ॥ रथविलग्नसयोधमहारथं, गजघटापतितापरवारणम् । हयनिरुद्धलसद्धरिसाधनं, वरपदातिनिपातितपत्तिकम् ॥ ३४० ॥ अथ विपाटितयोधशतोत्कटं, प्रकटविस्मयकार्यपि योगिनाम् । अभवदुद्भटपौरुषशालिनोस्तदितिसङ्कुलयुद्धमनीकयोः ॥ ३४१ ॥ ततस्तं तादृशं वीक्ष्य, संशयारूढमुच्चकैः । स कर्मपरिणामाख्योऽचिन्तयत्तत्प्रयोजनम् ॥ ३४२ ॥ अये!—मया तावन्न कर्तव्यश्चित्तभेदविधायकः । प्रकटः पक्षपातोऽत्र, सर्व्वसाधारणो ह्ययम् ॥ ३४३ ॥ यतः—कृते मत्तो विरज्यन्ते, पक्षपाते स्वबांधवाः । महामोहादयोऽतो मे, युक्तं नाकाण्डविड्वरम् ॥ ३४४ ॥ तथाहि—अद्य चारित्रधर्मीयं, वल्लभं मे महाबलम् । गुणाः संसारिजीवस्य, सुंदरं प्रतिभासते ॥ ३४५ ॥ अथ दोषेषु वर्तेत, भूयोऽप्येषु यथा पुरा । ततश्चिरंतनस्थित्या, गतिर्मे निजबान्धवाः ॥ ३४६ ॥ तस्मात् प्रच्छन्नरूपेण, तस्येदं हितकारकम् । बलं चारित्रधर्मीयमहं पुष्णामि साम्प्रतम् ॥३४७॥ येनेदं जीयतेऽनेन, बलं पापोदयादिकम् । न च मत्तो विरज्यन्ते, महामोहादिबान्धवाः ॥३४८॥ ततः सम्यग् विनिश्चित्य, तेनोपायं महात्मना । तथा मदुपविष्टास्ते, वर्द्धिता वरभावनाः ॥ ३४९ ॥ यावच्च भावनारूढः, स्थितस्त्वं गुणधारण! । तावत्तत्प्रबलीभूतं, सद्बोधसहितं बलम् ॥ ३५० ॥ यतः—मणिमन्त्रौषधादीनां, भावनानां विशेषतः । अचिन्त्यमिह विज्ञेयं,

ऽवलोकिता ॥ ३१५ ॥ ततश्च—सा सद्बोधेन मे दत्ता, परिणीता मयाऽनघा । जातः सदागमादीनामानन्दो लङ्घिता निशा ॥ ३१६ ॥ प्रभाते तु समुत्थाय, परिवारविवेष्टितः । गतोऽहं भगवन्मूलं, वन्दिताः सर्वसाधवः ॥ ३१७ ॥ ततो विनयनम्रेण, विहिताञ्जलिना मया । समस्तं रात्रिवृत्तान्तं, पृष्टा निर्मलसूरयः ॥ ३१८ ॥ यदुत—सा किं मे तादृशी नाथ!, प्रवृत्ता वरभावना । किं वा तादृक्समुद्भूतो, हर्षोल्लासोऽतिसुन्दरः ॥ ३१९ ॥ सूरिराह महाराज!, समाकर्णय कथ्यते । स कर्मपरिणामाख्यस्तुष्टस्ते साधुकर्मणा ॥ ३२० ॥ ततस्तेन स्वयं गत्वा, सद्बोधोऽयं सविद्यकः । प्रोत्साहितो यथा गच्छ, भजस्व गुणधारणम् ॥ ३२१ ॥ अथ चारित्रधर्मेण, सार्धमालोच्य पण्डितः । ततः प्रचलितोऽयं ते, समीपागमनेच्छया ॥ ३२२ ॥ विज्ञायामुं च वृत्तान्तं, महामोहादिशत्रवः । पापोदयं पुरस्कृत्य, पर्यालोचमुपागताः ॥ ३२३ ॥ विषयाभिलाषेणोक्तं—विनष्टाः साम्प्रतं यूयं, सद्बोधो हतको यदि । तस्य संसारिजीवस्य, पार्श्वे यायात् सुवष्टकः ॥ ३२४ ॥ तत्साम्प्रतं यथाशक्त्या, कुरुध्वं यत्नमुत्तमम् । मार्गे तिष्ठत सर्वेऽपि, तस्य स्खलनतत्पराः ॥ ३२५ ॥ ततः पापोदयेनोक्तमार्य! किं क्रियतेऽधुना? । यदा देवोऽपि नः स्वामी, तेषां पक्षे व्यवस्थितः ॥ ३२६ ॥ तथाहि—स कर्मपरिणामाख्यो, देवोऽस्मत्पक्षपूरकः । यदाऽऽसीद्बोः पुराऽभूम, बलवन्तस्तदा वयम् ॥ ३२७ ॥ उदासीनोऽपि यद्येष, स्याद्देवोऽत्र बलद्वये । तथापि युज्यतेऽस्माकं, योद्धुं तैः सार्धमञ्जसा ॥३२८॥ इदानीं देवनिर्दिष्टो, यः पुनर्याति सत्वरम् । सोऽयं सद्बोधसचिवो, नैव स्खलनमर्हति ॥३२९॥ न चाधुना ममादेशो, देवकीयोऽत्र विद्यते । योद्धव्ये सर्वथा यस्मात्तेन दूरीकृता वयम् ॥ ३३० ॥ तदेवं संस्थिता एवं, प्रस्तावं लब्धुमर्हथ । यातु यावदयं तस्य, पार्श्वे सद्बोधनामकः ॥ ३३१ ॥ एतदाकर्ण्य वचनं, रोषेण स्फुरिताधरः । रणाय चलितः शीघ्रं, ज्ञानसंवरणो नृपः ॥ ३३२ ॥ उक्तं च तेन—यद्ययं प्रतिपक्षो मे, तत्पार्श्वे याति लीलया । मया किं जीवितेनेह, जननीक्लेशका-

रिणा? ॥ ३३३ ॥ यूयं हि यात मा यात, भयेन श्लथसन्धयः । मया यातव्यमेवास्य, प्रतिस्खलनकाम्यया ॥ ३३४ ॥ चलिते चाभिधायेत्थं, ज्ञानसंवरणे नृपे । लज्जया चलितास्तेऽपि, सर्वे पापोदयादयः ॥ ३३५ ॥ रुद्धश्चागत्य तैर्मार्गस्तदा सद्बोधमन्त्रिणः । साशङ्काः केवलं सर्वे, भोः किमत्र भविष्यति? ॥ ३३६ ॥ इतश्च—चारित्रधर्मराजीयं, सैन्यं सद्बोधमन्त्रिणः । तदाऽनुव्रजनं कुर्वदागतं तावतीं भुवम् ॥ ३३७ ॥ ततः परस्पराह्वानचण्डनिर्घोषभीषणम् । आयोधनं दृढस्पर्धमालग्नं बलयोस्तयोः ॥ ३३८ ॥ अपि च—विशदशङ्खसमप्रभमेकतो, मधुकरच्छविसन्निभमन्यतः । त्रिपथगायमुनाजलवत्तदाऽमिलदलं प्रविभाति बलद्वयम् ॥ ३३९ ॥ रथविलग्नसयोधमहारथं, गजघटापतितापरवारणम् । हयनिरुद्धलसद्धरिसाधनं, वरपदातिनिपातितपत्तिकम् ॥ ३४० ॥ अथ विपाटितयोधशतोत्कटं, प्रकटविस्मयकार्यपि योगिनाम् । अभवदुद्भटपौरुषशालिनोस्तदितिसङ्कुलयुद्धमनीकयोः ॥ ३४१ ॥ ततस्तं तादृशं वीक्ष्य, संशयारूढमुग्धकैः । स कर्मपरिणामाख्योऽचिन्तयत्तत्प्रयोजनम् ॥ ३४२ ॥ अये!—मया तावन्न कर्तव्यश्चित्तभेदविधायकः । प्रकटः पक्षपातोऽत्र, सर्व्वसाधारणो ह्ययम् ॥ ३४३ ॥ यतः—कृते मत्तो विरज्यन्ते, पक्षपाते स्वबांधवाः । महामोहादयोऽतो मे, युक्तं नाकाण्डविड्वरम् ॥ ३४४ ॥ तथाहि—अद्य चारित्रधर्मीयं, वल्लभं मे महाबलम् । गुणाः संसारिजीवस्य, सुंदरं प्रतिभासते ॥ ३४५ ॥ अथ दोषेषु वर्तेत, भूयोऽप्येषु यथा पुरा । ततश्चिरंतनस्थित्या, गतिर्मे निजबान्धवाः ॥ ३४६ ॥ तस्मात् प्रच्छन्नरूपेण, तस्येदं हितकारकम् । बलं चारित्रधर्मीयमहं पुष्णामि साम्प्रतम् ॥३४७॥ येनेदं जीयतेऽनेन, बलं पापोदयादिकम् । न च मत्तो विरज्यन्ते, महामोहादिबान्धवाः ॥३४८॥ ततः सम्यग् विनिश्चित्य, तेनोपायं महात्मना । तथा मदुपविष्टास्ते, वर्द्धिता वरभावनाः ॥ ३४९ ॥ यावच्च भावनारूढः, स्थितस्त्वं गुणधारण! । तावत्तत्प्रबलीभूतं, सद्बोधसहितं बलम् ॥ ३५० ॥ यतः—मणिमन्त्रौषधादीनां, भावनानां विशेषतः । अचिन्त्यमिह विज्ञेयं,

ऽवलोकिता ॥ ३१५ ॥ ततश्च—सा सद्बोधेन मे दत्ता, परिणीता मयाऽनघा । जातः सदागमादीनामानन्दो लङ्घिता निशा ॥ ३१६ ॥ प्रभाते तु समुत्थाय, परिवारविवेष्टितः । गतोऽहं भगवन्मूलं, वन्दिताः सर्वसाधवः ॥ ३१७ ॥ ततो विनयनम्रेण, विहिताञ्जलिना मया । समस्तं रात्रिवृत्तान्तं, पृष्टा निर्मलसूरयः ॥ ३१८ ॥ यदुत—सा किं मे तादृशी नाथ!, प्रवृत्ता वरभावना । किं वा तादृक्समुद्भूतो, हर्षोल्लासोऽतिसुन्दरः ॥ ३१९ ॥ सूरिराह महाराज!, समाकर्णय कथ्यते । स कर्मपरिणामाख्यस्तुष्टस्ते साधुकर्मणा ॥ ३२० ॥ ततस्तेन स्वयं गत्वा, सद्बोधोऽयं सविद्यकः । प्रोत्साहितो यथा गच्छ, भजस्व गुणधारणम् ॥ ३२१ ॥ अथ चारित्रधर्मेण, सार्धमालोच्य पण्डितः । ततः प्रचलितोऽयं ते, समीपागमनेच्छया ॥ ३२२ ॥ विज्ञायामुं च वृत्तान्तं, महामोहादिशत्रवः । पापोदयं पुरस्कृत्य, पर्यालोचमुपागताः ॥ ३२३ ॥ विषयाभिलाषेणोक्तं—विनष्टाः साम्प्रतं यूयं, सद्बोधो हतको यदि । तस्य संसारिजीवस्य, पार्श्वे यायात् सुवष्टकः ॥ ३२४ ॥ तत्साम्प्रतं यथाशक्त्या, कुरुध्वं यत्नमुत्तमम् । मार्गे तिष्ठत सर्वेऽपि, तस्य स्खलनतत्पराः ॥ ३२५ ॥ ततः पापोदयेनोक्तमार्य! किं क्रियतेऽधुना? । यदा देवोऽपि नः स्वामी, तेषां पक्षे व्यवस्थितः ॥ ३२६ ॥ तथाहि—स कर्मपरिणामाख्यो, देवोऽस्मत्पक्षपूरकः । यदाऽऽसीद्धोः पुराऽभूम, बलवन्तस्तदा वयम् ॥ ३२७ ॥ उदासीनोऽपि यद्येष, स्याद्देवोऽत्र बलद्वये । तथापि युज्यतेऽस्माकं, योद्धुं तैः सार्धमञ्जसा ॥३२८॥ इदानीं देवनिर्दिष्टो, यः पुनर्याति सत्वरम् । सोऽयं सद्बोधसचिवो, नैव स्खलनमर्हति ॥३२९॥ न चाधुना समादेशो, देवकीयोऽत्र विद्यते । योद्धव्ये सर्वथा यस्मात्तेन दूरीकृता वयम् ॥ ३३० ॥ तदेवं संस्थिता एवं, प्रस्तावं लब्धुमर्हथ । यातु यावदयं तस्य, पार्श्वे सद्बोधनामकः ॥ ३३१ ॥ एतच्चाकर्ण्य वचनं, रोषेण स्फुरिताधरः । रणाय चलितः शीघ्रं, ज्ञानसंवरणो नृपः ॥ ३३२ ॥ उक्तं च तेन—यद्ययं प्रतिपक्षो मे, तत्पार्श्वे याति लीलया । मया किं जीवितेनेह, जननीक्लेशका-

तदेतासु सम्यग्वर्तितव्यं देवेन, न वर्तेते खल्वासामभावे तव परमोपकारिणाविमौ पुरुषौ, अनयोश्च बलेन भवता तद्राज्यमासादनीयं ततः सम्यक् पोषणीया देवेनेमा नार्य इति, मयोक्तं—एवं करिष्ये, ततः प्रवृत्तोऽहं तदुपदेशकरणे प्रविशामि पुनः पुनश्चित्तवृत्तौ विलसामि सह विद्यया मन्त्रयामि मुहुर्मुहुः सद्बोधेन सार्धं सन्मानयामि सदागमसम्यग्दर्शनगृहिधर्मान्, एवं च कुर्वतो मे गते भगवति लङ्घितं किंचिन्न्यूनं पञ्चमासमात्रं संजातो मद्गुणैः समावर्जितहृदयः कर्मपरिणामः ततो गतस्तथैव तेषु नगरेषु गमितास्ते राजानः कृताः सर्वे मे निजनिजकन्यकादानाभिमुखाः ततः समागतो मन्मूलं प्रवेशितोऽहं तेन पुरस्कृतपुण्योदयेन कालपरिणत्यादिपरिवारोपेतेन कर्मपरिणामेन तासां कन्यकानां विवाहार्थं सपरिकरश्चित्तवृत्तौ, ततस्तस्मिन् सात्त्विकमानसवर्तिविवेकगिरिशिखरनिविष्टे जैनसत्पुरे समाहूतास्ते समस्ताः शुभपरिणामादयः समागताः सपरिवाराः कृतस्तेषां समुचितोपचारः गणितं विवाहदिनं। अत्रान्तरे संजातो महामोहादिबले सर्वसमाजः प्रवृत्तः पर्यालोचः अभिहितं विषयाभिलाषेण—देव! यद्यनेन संसारिजीवेनेमाः क्षान्त्यादिकाः कन्यकाः परिणीताः स्युस्ततः प्रलीना एव वयमिति मन्तव्यं अतो नास्माभिरुपेक्षाऽत्र विधेया कर्तव्यः सर्वथा यत्नोऽवलम्बनीयं साहसं मोक्तव्यो विषादः—**भयं हि तावत्कर्तव्यं, यावदन्तो न दृश्यते। प्रयोजनस्य तत्प्राप्तौ, प्रहर्तव्यं सुनिर्भयैः** ॥३६४॥ ततोऽनुमतं तन्मन्त्रिणो वचनं महामोहेन समर्थितं शेषसुभटैः विहिता सामग्री संनद्धं बलं समागतास्ते संभूय रणोत्साहेन केवलं दृष्टभयतया कर्मपरिणामप्रतिकूलताभीरुतया च पर्याकुलाश्चित्तेन, ततः पृष्टाऽमीभिः सविनयं भवितव्यता—यथा भगवति! किमस्माकमधुना प्राप्तकालमिति?, तयोक्तं—भद्रा! न युक्तस्तावद्भवतां रणारम्भः यतः समादृतोऽयमधुनाऽऽर्यपुत्रः कर्मपरिणामेन मिलिता विशेषतः शुभपरिणामादयः संजातमार्यपुत्रस्याधुना विशेषतो निजबलदर्शनौत्सुक्यं दर्शयिष्यति तदपि कर्मपरिणामः करिष्यत्यार्यपुत्रस्तस्य पोषणं ततोऽधुना

क्षान्त्यादिवीवाहारम्भः

मोहपर्यालोचः

वीर्यमाश्चर्यकारणम् ॥ ३५१ ॥ ततो यथा यथा भूयः, प्रवृद्धास्तव भावनाः । तथा तथा परिक्षीणा, महामोहादयः स्वयम् ॥ ३५२ ॥ ततः प्रबलतां प्राप्य, क्षणादेव विनिर्जितम् । तेन सद्बोधसैन्येन, बलं पापोदयादिकम् ॥ ३५३ ॥ सर्वे प्रहारिताः प्रायो, महामोहादिशात्रवः । चूर्णितः स विशेषेण, ज्ञानसंवरणो नृपः ॥ ३५४ ॥ स्थिता निस्स्पन्दमन्दास्ते, सर्वे पापोदयादयः । निर्वाहितः स्वसैन्येन, सद्बोधः सह विद्यया ॥ ३५५ ॥ गते चाभ्यर्णतां भूप!, तव सद्बोधमन्त्रिणि । स तादृशस्तदा जातो, हर्षोल्लासोऽतिसुन्दरः ॥ ३५६ ॥ सद्बोधसचिवो दृष्टः, परिणीता च कन्यका । राजन्! पुनस्त्वया सर्वं, ज्ञातमेव ततः परम् ॥ ३५७ ॥ तदिदं कारणं भूप!, भावनानां विवृद्धये । हर्षोल्लासाय चोत्पन्नं, रात्रौ ते नात्र संशयः ॥ ३५८ ॥ मयोक्तं—अधुना किं प्रकुर्वन्ति, ते ममान्तरशत्रवः ? । सूरिराह महाराज!, कुर्वते कालयापनाम् ॥ ३५९ ॥ उदीर्णास्ते गता नाशमुपशान्तास्तथा परे । सर्वेऽपि चित्तवृत्तौ ते, लीनलीनतया स्थिताः ॥ ३६० ॥ पुनः प्रस्तावमासाद्य, कृत्वा ते सर्वमीलकम् । संग्रामाय लगिष्यन्ति, मत्सराध्मातचेतसः ॥ ३६१ ॥ ततस्त्वया महाराज!, सद्बोधवचनात्तदा । चारित्रधर्मसुभटैर्वारणीयाः पृथक् पृथक् ॥ ३६२ ॥ मयोक्तं—यदाज्ञापयति नाथः, इतश्च संपूर्णो मासकल्पः ततो गतास्तेऽन्यत्र भगवन्तो **निर्मलसूरयः**✓विशेषतोऽनुष्ठिता मया तदुपदेशाः प्रसादितमन्तःकरणं परिकर्मितं शरीरं विहितश्चित्तवृत्तौ मे सद्बोधेन प्रवेशः दर्शितौ सामान्यतः समाधिनामानौ द्वौ पुरुषौ धवलौ वर्णेन चारू दर्शनेन सुखदौ स्वरूपेण, ततोऽभिहितं सद्बोधेन —देव! विशेषतो धर्मशुक्लाभिधानाविमौ पुरुषौ प्रवेशकौ भवतोऽन्तरङ्गराज्ये तदनयोर्महानादरो विधेयः, मयोक्तं—यदादिशत्यार्यः, ततो दर्शिताः सद्बोधेन विद्युत्पद्मस्फटिकवर्णाः सुन्दराकारधारिण्यः सुखस्वरूपा लेश्या इति गोत्रेण पीतपद्मशुक्ला इति नाम्ना प्रसिद्धास्तिस्रो नार्यः, अभिहितं च तेन—यदा देव!—प्रथमस्य नरस्येमास्तिस्रोऽपि परिचारिकाः । शुक्लैवैका द्वितीयस्य, जायते परिपोषिका ॥३६३॥

दर्शिताश्चारित्रधर्मराजादयः विहिता तैर्मे प्रतिपत्तिः सन्मानिताः प्रत्येकं मया गताः पदातिभावं नियुक्ता रिपुनिराकरणे सह चतुरङ्गसे-
नया ॥ ततस्तेषां समुल्लासमालोक्य रणशालिनाम् । प्रत्येकं प्रभुणा राज्ञा, कृतं सन्मानतोषणम् ॥ ३६५ ॥ दूरादेव भयोद्भ्रान्ता, महा-
मोहादयस्तदा । पापोदयं पुरस्कृत्य, नष्टास्ते मृत्युभीरवः ॥ ३६६ ॥ तैस्तु भग्नास्तदावासाः, शोधिता सा महाटवी । रिपुनाशेन लब्धा
च, लोके जयपताकिका ॥ ३६७ ॥ केवलं ते दुरात्मानः, किंचित्क्षयमुपागताः । किंचित्प्रशान्ततां धृत्वा, संस्थिता बकचर्यया ॥ ३६८ ॥
ततो महाविमर्देन, विवाहोऽतिमनोरमः । प्रारब्धो मे तदा कर्तुं, मुदितान्तरबान्धवैः ॥ ३६९ ॥ स्थापिताः प्रथमं तावत्तत्राष्टौ चारु
मातरः । तासां च विहिता पूजा, प्रयत्नेन यथोचिता ॥ ३७० ॥ निवेदितं च मे वीर्यं, सद्बोधेन पृथक् पृथक् । मातॄणां यत्तदा तासां,
तत्ते भद्रे! निवेदये ॥ ३७१ ॥ "आद्या हि कुरुते माता, युगमात्रप्रलोकिनम् । मुनिलोकं पुरे जैने, मार्गे व्याक्षेपवर्जितम् ॥ ३७२ ॥
"सद्बुद्धिपूतवाक्येन, तथ्यं पथ्यं मिताक्षरम् । द्वितीया भापयत्येवं, माता यतिजनं सदा ॥ ३७३ ॥ तृतीयमाता निःशेषदोषनिर्मुक्तम-
"ञ्जसा । आहारमेपयत्येव, यतिलोकेन कारणे ॥ ३७४ ॥ चतुर्थमाता मुनिभिः, सुदृष्टं सुप्रमार्जितम् । पात्राद्यादाननिक्षेपं, कारयन्ती
"विजृम्भते ॥ ३७५ ॥ यत्किंचित्स्यात्परित्याज्यं, देहाहारमलादिकम् । स्थण्डिले पञ्चमी माता, तन्नीत्या त्याजयत्यलम् ॥ ३७६ ॥ षष्ठी
"माता पुनर्नित्यं, साधुचित्तमनाकुला । रक्षन्ती क्षपयत्येव, दोपसङ्घातमञ्जसा ॥ ३७७ ॥ सप्तमी कारणाभावे, माता मौनविधायिका ।
"साधूनां कारणे वाक्यदोपरक्षणतत्परा ॥३७८॥ अष्टमी कूर्मवल्लीनं, मुनिलोकमकारणे । धारयेत्कारणे कायदोषविप्लवधारिका ॥३७९॥"
तदिमा मातरस्तत्र, स्थापिताः प्रथमे दिने । पूजिताश्च विधानेन, जैनसत्पुरसारिकाः ॥ ३८० ॥ ततश्चित्तसमाधाने, तत्रैव वरमण्डपे ।
सैव निःस्पृहता वेदिर्विशेषेण समारिता ॥ ३८१ ॥ विनिर्मितं च धर्मेण, प्रदीप्तं निजतेजसा । तत्राग्निकुण्डं विस्तीर्णं, कृतं सर्वं यथो-

मात्रष्टक-स्थापना

रणेन लगतां भवतां सर्वप्रलयः संपत्स्यते तस्मात्कालयापनां कुर्वन्तस्तावदट्टष्टसेवया तिष्ठत यूयं, यदा तु भवतां प्रस्तावो भविष्यति तदाऽहमेव निवेदयिष्ये, दत्तावधाना हि भवत्प्रयोजने सकलकालमहं वर्ते, का भवतां चिन्ता ?, ततस्तदनुरोधेनोपसंहृतस्तैः प्रकटसङ्ग्रामाबन्धः, केवलं तथापि वष्टतया प्रयुक्ता एव तैः प्रच्छन्नस्थितैरपि निजनिजा योगशक्तयः, ततस्तन्माहात्म्येन संजाता मम चेतसि कल्लोलाः —यथेदमादिष्टं भगवता यदुत परिणीतासु तासु कन्यकासु भवन्तमहं प्रव्राजयिष्ये "अतिदुष्करा च प्रव्रज्या तुल्या याहुभ्यां स्वयंभूर"मणतरणेन नैष्ठिकं यत्यनुष्ठानं सुखलालितं मे शरीरं संभविनो रोगातङ्काः तन्न क्षमिष्यते प्रायो दीर्घकालं मे रूक्षवृत्तिता कातरहृदया "च वराकी मदनमञ्जरी बाधिष्यते द्राघीयसा यावज्जीविकमदीयवियोगेन इत्यादि चिन्तयतश्च मे संजातो मनाक् मनोभङ्गः, ततश्चि"न्तितं मया—तत् किं न परिणयामि तावदेताः तिष्ठामि यथासुखासिकया गमयामि यौवनं स्वाधीनाश्च ममैताः ततः पश्चात्काले परि"णीय प्रव्रजिष्यामीति," अयं च सर्वोऽपि दूरवर्तिनि सद्बोधे मम स्वगतः पर्यालोचः, अत्रान्तरे समागतः सद्बोधः निवेदितो मयाऽस्मै निजाभिप्रायः, सद्बोधः प्राह—देव! न सुन्दरमिदं मन्त्रितं देवेन क्षतिकरमिदमात्महितस्य विबन्धकं सुखसन्दोहानां चिह्नमेतदक्षतायाः न च स्वाभाविकमेतन्मन्त्रणं देवस्य, किं तर्हि ?, विलसितमिदं तेषां पापात्मनां महामोहादीनां, ते हि निधिग्रहणकाल इव वेतालाः पर्युपस्थिताः साम्प्रतं कृतान्तर्धाना विघ्नकरणाय देवस्य तन्न वञ्चनीयस्तैरात्मा देवेन, ततो लग्नं सद्बोधभाषितं मच्चित्ते, अभिहितं च मया —आर्य! कथं पुनरमी निराकर्तव्याः, सद्बोधेनोक्तं—देव! निजबलेन, मयोक्तं—दर्शय मे निजबलं, सद्बोधेनोक्तं—एष सज्जोऽस्मि केवलं तद्दर्शने कर्मपरिणामस्याधिकारः, कर्मपरिणामेनोक्तं—आर्य! मयाऽऽदिष्टेन त्वयाऽमी दर्शिताः परमार्थतो मयैव ते दर्शिता भवन्ति तन्मा करोतु विकल्पं दर्शयत्वार्यः, सद्बोधेनोक्तं—यदादिशति महाराजः, ततः प्रवेशितोऽहं सद्बोधेन चित्तसमाधानमण्डपे

मनोभङ्गः

सद्बोधोपदेशः

सूचितो मम । भगवद्भिर्मया हन्त, साक्षादेवानुभूयते ॥ ३९५ ॥ यावच्चैवं प्रमोदाढ्यः, सप्रमोदे तदा पुरे । स्थितोऽहं तत्र संप्राप्तास्तावन्निर्मलसूरयः ॥ ३९६ ॥ स्थिताः सपरिवारास्ते, तत्रैवाह्लादमन्दिरे । गत्वा समस्तसामग्र्या, वन्दिताः सादरं मया ॥ ३९७ ॥ ततो विधाय नम्रेण, ललाटे करकुड्मलम् । भद्रे! भगवतामग्रे, मयेदं भाषितं तदा ॥ ३९८ ॥ सर्वो भगवदादेशः, संपन्नः साम्प्रतं यदि । नाथ! तद्दीयतां दीक्षा, प्रसादः क्रियतामिति ॥ ३९९ ॥ सूरिराह महाराज!, संपन्ना तव भावतः । स्वतो भागवती दीक्षा, तस्याः किं दीयतेऽधुना? ॥ ४०० ॥ तथाहि—यदेतत्तव संपन्नं, गृहेऽपि वसतोऽधुना । इदमेव विधातव्यं, यतित्वेऽपि विशेषतः ॥ ४०१ ॥ तथापि व्यवहारोऽत्र, लङ्घनीयो न पण्डितैः । अतस्ते साम्प्रतं भूप!, द्रव्यलिङ्गं विधीयते ॥ ४०२ ॥ किं च—भावलिङ्गबहिश्चिह्नमिदं हेतुरपीष्यते । तद्दीयते महाराज!, लिङ्गं ते द्रव्यतोऽधुना ॥ ४०३ ॥ मयोक्तं—नाथ! महाप्रसादः, ततो "विधायाष्ट दिनानि जिन-

"मुनिपूजां समुत्पाद्य नागरकानन्दं संभाल्य बन्धुवर्गं पूरयित्वाऽर्थिसङ्घातं स्थापयित्वा निजसुतं जनतारणाभिधानं राज्ये समाप्य तत्का-

"लोचितं निःशेषं कृत्यविधिं सह मदनमञ्जर्या युक्तः कुलंधरेण प्रधानपरिजनेन च निष्क्रान्तो निर्मलसूरिपादमूले विधानेनाहमिति,

"ततोऽभ्यस्तः समस्तः साधुक्रियाकलापः वल्लभीभूतो गाढतरं सदागमः शिक्षितानि तदुपदिष्टान्येकादशाङ्गानि कालिकोत्कालिकश्रुतानि च

"तथाऽभीष्टतरीभूतः सम्यग्दर्शनः संजातश्चारित्रधर्मे चित्ताबन्धः विज्ञातं विशेषतस्तत्सैन्यं पालितौ नितरां संयमतपोयोगौ भग्नानि सुतरां

"प्रमत्ततानद्यादीनि रिपुक्रीडास्थानानि निर्मलीकृता चित्तवृत्तिः, तदेवं गुरुचरणशुश्रूषारतो विहृतोऽहं भूरिकालं मुनिचर्यये"ति, तदन्ते विहिता संलेखना कृतमनशनविधानं तद्दर्शनात्तुष्टा मे भवितव्यता दत्ताऽपरा गुडिका तत्तेजसा नीतोऽहं विबुधालये कल्पातीतेषु विबुधेषु स्थापितः प्रथमग्रैवेयके, तत्र च—मनोहारिणि पर्यङ्के, दिव्ये दिव्यांशुकावृते । शुभ्रातिनिर्मलाकारः, स्थितोऽहममृतोपमे ॥ ४०४ ॥ त-

द्रव्यलिङ्ग्रहणं

चितम् ॥ ३८२ ॥ तैजसीपद्मगुक्ताभिर्जननीभिश्च सादरम् । स्नानाङ्गरागभूषादि, वधूकर्म विनिर्मितम् ॥ ३८३ ॥ तास्तिष्ठ तथाऽन्यैः, सर्वैः सामन्तपार्थिवैः । स्नापितोऽहं विलिप्तश्च, भूषितो वासितोऽंशुकैः ॥ ३८४ ॥ ततः प्रवृत्तो विवाहानन्दः स्थितः सद्बोध एव पुरोहितः हूयन्ते कर्मनामिकाः समिधः क्षिप्यन्ते सद्भावनाहुतयः विकीर्यन्ते कुवासनाभिधाना लाजाञ्जलयः, ततः कारितोऽहं सदागमेनैव सांवत्सरतां भजताऽतिसुन्दरे धृपलग्नांशे पाणिग्रहणं क्षान्तिदारिकायाः, अत्रान्तरेऽतिदर्पेण विजृम्भिताः शुभपरिणामादयः विलसिता निष्प्रकम्पतादयः प्रवृत्तो महाप्रमोदः भ्रान्तानि मण्डलानि, एवं च क्रमेण तस्मिन्नेव धृपलग्ने परिणीताः शेषा अपि मयाऽष्टौ दयादिकन्यकाः, उपविष्टः सहितस्ताभिस्तस्मिन्नेव जीववीर्यनामके विस्तीर्णे वरासने, ततः समानन्दिताश्चारित्रधर्मराजादयः प्रवृत्ता विविधास्तद्विलासाः, इतश्च—यदैव विद्या सा कन्या, परिणीता मया पुरा । तदैवासौ महामोहः, प्रलीनः परमार्थतः ॥ ३८५ ॥ किं तु—सर्वेषां समुदायात्मा, सारभूतः स वर्तते । दग्धरज्जुसमाकारस्तेन पार्श्वे स मे स्थितः ॥ ३८६ ॥ यदा तु परिणीतास्ताः, क्षान्त्यादिवरकन्यकाः । सर्वा वैश्वानरादीनां, प्रतिपक्षतया स्मृताः ॥ ३८७ ॥ तदा सोऽनीकसहितः, पापोदयसमन्वितः । चारित्रधर्मराजादिनोदितोऽपि तथा पुरा ॥ ३८८ ॥ लीनोऽपि लीनतरतां, हिंसावैश्वानरादिभिः । सार्धं तैर्नवभिस्त्रासाद्दूराद्दूरतरं गतः ॥ ३८९ ॥ त्रिभिर्विशेषकम् । तथास्थितेषु तेषूच्चैः, शान्ताबाधः प्रमोदितः । आश्लिष्टो वरनारीभिः, स्वसैन्यपरिवारितः ॥३९०॥ अन्तरङ्गविलासेन, ललन्नुद्दामलीलया । स्वसंवेदनतो वेद, तदा सत्यं मुनेर्वचः ॥ ३९१ ॥ तथा शुभपरिणामस्य, मयाऽन्या अपि कन्यकाः । तन्निष्प्रकम्पताजातास्तदा बहुधो विवाहिताः ॥ ३९२ ॥ एताश्च ता धृतिश्रद्धामेधाविविदिषासुताः । मैत्रीमुदितोपेक्षाविज्ञप्तिकरुणादिकाः ॥ ३९३ ॥ ततस्तेन सुभार्याणां, वृन्देन सह लीलया । अत्यर्थं निर्भरीभूता, लसतो मे सुखासिका ॥ ३९४ ॥ चिन्तितं च मया—स एष सुखसन्दोहो, यः पूर्वं

सूचितो मम । भगवद्भिर्मया हन्त, साक्षादेवानुभूयते ॥ ३९५ ॥ यावच्चैवं प्रमोदाढ्यः, सप्रमोदे तदा पुरे । स्थितोऽहं तत्र संप्राप्तास्तत्र निर्मलसूरयः ॥ ३९६ ॥ स्थिताः सपरिवारास्ते, तत्रैवाह्लादमन्दिरे । गत्वा समस्तसामग्र्या, वन्दिताः सादरं मया ॥ ३९७ ॥ ततो विधाय नम्रेण, ललाटे करकुड्मलम् । भद्रे! भगवतामग्रे, मयेदं भाषितं तदा ॥ ३९८ ॥ सर्वो भगवदादेशः, संपन्नः साम्प्रतं यदि । नाथ! तद्दीयतां दीक्षा, प्रसादः क्रियतामिति ॥ ३९९ ॥ सूरिराह महाराज!, संपन्ना तव भावतः । स्वतो भागवती दीक्षा, तस्याः किं दीयतेऽधुना? ॥ ४०० ॥ तथाहि—यदेतत्तव संपन्नं, गृहेऽपि वसतोऽधुना । इदमेव विधातव्यं, यतित्वेऽपि विशेषतः ॥ ४०१ ॥ तथापि व्यवहारोऽत्र, लङ्घनीयो न पण्डितैः । अतस्ते साम्प्रतं भूप!, द्रव्यलिङ्गं विधीयते ॥ ४०२ ॥ किं च—भावलिङ्गबहिश्चिह्नमिदं हेतुरपीष्यते । तद्दीयते महाराज!, लिङ्गं ते द्रव्यतोऽधुना ॥ ४०३ ॥ मयोक्तं—नाथ! महाप्रसादः, ततो "विधायाष्ट दिनानि जिन- "मुनिपूजां समुत्पाद्य नागरकानन्दं संभाल्य बन्धुवर्गं पूरयित्वाऽर्थिसङ्घातं स्थापयित्वा निजसुतं जनतारणाभिधानं राज्ये समाप्य तत्का- "लोचितं निःशेषं कृत्यविधिं सह मदनमञ्जर्या युक्तः कुलंधरेण प्रधानपरिजनेन च निष्क्रान्तो निर्मलसूरिपादमूले विधानेनाहमिति, "ततोऽभ्यस्तः समस्तः साधुक्रियाकलापः वल्लभीभूतो गाढतरं सदागमः शिक्षितानि तदुपदिष्टान्येकादशाङ्गानि कालिकोत्कालिकश्रुतानि च "तथाऽभीष्टतरीभूतः सम्यग्दर्शनः संजातश्चारित्रधर्मे चित्तावन्धः विज्ञातं विशेषतस्तत्सैन्यं पालितौ नितरां संयमतपोयोगौ भग्नानि सुतरां "प्रमत्ततानद्यादीनि रिपुक्रीडास्थानानि निर्मलीकृता चित्तवृत्तिः, तदेवं गुरुचरणशुश्रूषारतो विहृतोऽहं भूरिकालं मुनिचर्यये"ति, तदन्ते विहिता संलेखना कृतमनशनविधानं तद्दर्शनात्तुष्टा मे भवितव्यता दत्ताऽपरा गुडिका तत्तेजसा नीतोऽहं विबुधालये कल्पातीतेषु विबुधेषु स्थापितः प्रथमग्रैवेयके, तत्र च—मनोहारिणि पर्यङ्के, दिव्ये दिव्यांशुकावृते । शुभ्रातिनिर्मलाकारः, स्थितोऽहममृतोपमे ॥ ४०४ ॥ त-

द्रव्यलिङ्गग्रहणं

त्सागरोपमाण्युच्चैस्त्रयोविंशतिमुत्तमम् । शान्तात्मा विगताबाधमनुभूय सुखामृतम् ॥ ४०५ ॥ ततो मनुजगत्यन्तःपातुकं वरपाटवम् । ऐरवतमायातो, भद्रे! भार्यानियोगतः ॥ ४०६ ॥ तत्र सिंहपुरे जातः, सुतो वीणामहेन्द्रयोः । अहं गङ्गाधरो नाम, क्षत्रियः ख्यातपौरुषः ॥ ४०७ ॥ जातिस्मरणसंपन्नो, दीक्षामादाय सुन्दराम् । कृत्वा च पूर्ववत्कालं, सुघोषाचार्यसन्निधौ ॥ ४०८ ॥ तदन्ते च विधानेन, पूर्वव्यावर्णितक्रमात् । ग्रैवेयके द्वितीयेऽहं, गतो भार्यानियोगतः ॥ ४०९ ॥ परिपाट्याऽनया भद्रे!, कृताः पञ्च गमागमाः । भावदीक्षां समादाय, ग्रैवेयकनिवासिषु ॥ ४१० ॥ एकैकवृद्ध्या संजाता, स्थितिस्तत्र ममानघे! । सागरोपमतो यावत्पञ्चमे सप्तविंशतिः ॥ ४११ ॥ शरीरचित्तनिर्वाणी, शर्मसन्दोहदायिका । इह तत्र च जाता मे, चार्वी कल्याणमालिका ॥ ४१२ ॥ ततश्च पञ्चवारायां, भरते शङ्खनामके । पुरे मनुजगत्यन्तर्धातकीखण्डमण्डले ॥ ४१३ ॥ पुत्रो भद्रामहागिर्योर्जातोऽहं सिंहनामकः । नरेन्द्रवंशे सद्भोगः, सुन्दराकारधारकः ॥ ४१४ ॥ अथ यौवनसंस्थेन, धर्मबन्धुमहामुनिम् । प्राप्य भागवती दीक्षा, मयाऽऽत्ता वरलोचने! ॥ ४१५ ॥ ततः क्रियाकलापेन, साधूनां चारुगामिनि! । विहृतोऽहं ससद्भावः, सूत्रार्थग्रहणोद्यतः ॥ ४१६ ॥ अथ स्वल्पेन कालेन, द्वादशाङ्गः सदागमः । सपूर्वः सातिशेषो मे, सर्वथा बन्धुतां गतः ॥ ४१७ ॥ पुराऽप्यस्य मया ज्ञातं, विज्ञानं बहुशो बहु । किं तु संपूर्णपूर्वाणि, न प्राप्तानि कदाचन ॥ ४१८ ॥ तदा तु स्तोककालेन, विज्ञानं लीलया मया । निःशेषमस्य विज्ञातं, सर्वं पूर्वैः समन्वितम् ॥ ४१९ ॥ ततोऽधिगतसूत्रार्थो, गुरुणा धर्मबन्धुना । स्थापितोऽहं निजस्थाने, सू(भू)रिसङ्घस्य पश्यतः ॥ ४२० ॥ कृतश्च शृहदानन्दो, देवदानवमानवैः । आचार्यस्थापनायां मे, सचमत्कारकारकः ॥ ४२१ ॥ गुरुणा शेषलोकैश्च, श्लाघितोऽहं मुहुर्मुहुः । धन्यस्त्वं कृतकृत्योऽसि, येन ज्ञातः सदागमः ॥४२२॥ तथा—वस्त्रालङ्कारमाल्यैश्च, पूजिता लोकबान्धवाः । विहिता सङ्घपूजा च, विधिना वसनाशनैः ॥४२३॥

सिंहभवः

आचार्यपदं

किं च—ते देवास्ते महाभागा, मुनयस्ते च सज्जनाः । समाकृष्टा गुणैः सर्वैर्नम्राः किङ्करतां गताः ॥ ४२४ ॥ तथाऽन्तेवासिनोऽनेके,
पण्डिता विनयोद्यताः । स्वीया गच्छान्तरेभ्यश्च, मम पार्श्वमुपागताः ॥ ४२५ ॥ ततो विचरतश्चित्रग्रामाकरपुरादिषु । कुर्वतश्च प्रबन्धेन,
व्याख्यानमतिसुन्दरम् ॥ ४२६ ॥ अनेकवादसङ्घट्टाटव्यां वाक्खड्गयष्टिना । कुतीर्थिमत्तमातङ्गकुम्भनिर्भेदकारिणः ॥ ४२७ ॥ स्वशास्त्रपर-
शास्त्राणां, स्फुटगर्भार्थदर्शिनः । पूजितस्य महाराजसामन्तपरमेश्वरैः ॥ ४२८ ॥ उद्दामवर्णसत्कीर्तिशब्दश्लाघापुरःसरः । उल्लासितो यशो-
रूपो, जनैर्मे पटहोऽनघः ॥ ४२९ ॥ चतुर्भिः कलापकम् ॥ तथा—धन्योऽसि कृतकृत्योऽसि, भूषिता नाथ! मेदिनी । त्वयाऽवतरता मर्त्ये,
परमब्रह्मरूपिणा ॥ ४३० ॥ निर्मिथ्यं सत्यमित्युक्त्वमित्येवं नतमस्तकाः । तीर्थिका अपि मां सर्वे, स्तुवन्तः पर्युपासते ॥ ४३१ ॥ युग्मम् ।
एवमाचार्यके जाते, सर्वलोकमनोहरे । भद्रेऽगृहीतसङ्केते!, यज्जातं तन्निबोध मे ॥ ४३२ ॥ तां तादृशीं समुद्वीक्ष्य, समृद्धिं भुवनाद्भु-
ताम् । ईर्ष्ययेव महापापा, रुष्टा मे भवितव्यता ॥ ४३३ ॥ चिन्तितं च तया हन्त, प्रतिपन्नः पुरा मया । योऽसाववसरस्तेषां, महामो-
हादिभूभुजाम् ॥ ४३४ ॥ स एष वर्तते लग्नः, साम्प्रतं कार्यसाधकः । आशाभृतो वराकास्ते, पुरा मद्वाक्यतः स्थिताः ॥ ४३५ ॥ तत्तेषां
लक्षयाम्येनं, प्रस्तावमधुनातनम् । येन ते लब्धमाहात्म्या, जायन्ते सुखभाजनम् ॥ ४३६ ॥ त्रिभिर्विशेषकम् । एवं निश्चित्य ते सर्वे, भद्रे!
पापोदयादयः । ज्ञापिताः कार्यगर्भार्थं, भवितव्यतया तया ॥ ४३७ ॥ किं च—ते कर्मपरिणामाद्यास्ते च मे बन्धवोऽनघाः । विमूढा नष्ट-
चेष्टाकाः, स्वशक्त्या विहितास्तया ॥ ४३८ ॥ ततश्च—पापोदयं पुरस्कृत्य, महामोहादयस्तदा । पुनः संस्थापनां कृत्वा, प्रवृत्ता मम स-
म्मुखम् ॥ ४३९ ॥ केवलं जातशङ्कैस्तैर्दृष्टात्यन्तभयैः पुरा । कः स्यान्नो विजयोपाय, इति प्रारम्भि मन्त्रणम् ॥ ४४० ॥ "विषयाभिला-
"षेणोक्तं—इदमत्र प्राप्तकालं—अभ्यर्णीभवतु तावत्तस्य समिथ्यादर्शनो ज्ञानसंवरणः निकटीभवन्तु शैलराजसहितानि गौरवाभिधानानि

देवादि-भवाः

रसागरोपमाण्युच्चैस्त्रयोविंशतिमुत्तमम् । शान्तात्मा विगताबाधमनुभूय सुरामृतम् ॥ ४०५ ॥ ततो मनुजगत्यन्तःपातुकं वरपाटकम् । ऐरवतमायातो, भद्रे! भार्यानियोगतः ॥ ४०६ ॥ तत्र सिंहपुरे जातः, सुतो धीणामहेन्द्रयोः । अहं गङ्गाधरो नाम, क्षत्रियः ख्यातपौरुषः ॥ ४०७ ॥ जातिस्मरणसंपन्नो, दीक्षामादाय सुन्दराम् । कृत्वा च पूर्ववत्कृत्यं, सुघोषाचार्यसन्निधौ ॥ ४०८ ॥ तदन्ते च विधानेन, पूर्वव्यावर्णितक्रमात् । ग्रैवेयके द्वितीयेऽहं, गतो भार्यानियोगतः ॥ ४०९ ॥ परिपाट्याऽनया भद्रे!, कृताः पञ्च गमागमाः । भावदीक्षां समादाय, ग्रैवेयकनिवासिषु ॥ ४१० ॥ एकैकवृद्ध्या संजाता, स्थितिस्तत्र ममानघे! । सागरोपमतो यावत्पञ्चमे सप्तविंशतिः ॥ ४११ ॥ शरीरचित्तनिर्वाणी, शर्मसन्दोहदायिका । इह तत्र च जाता मे, धात्री कल्याणमालिका ॥ ४१२ ॥ ततश्च पञ्चवारायां, भरते शङ्खनामके । पुरे मनुजगत्यन्तर्धातकीखण्डमण्डले ॥ ४१३ ॥ पुत्रो भद्रामहागिर्योर्जातोऽहं सिंहनामकः । नरेन्द्रवंशे सद्भोगः, सुन्दराकारधारकः ॥ ४१४ ॥ अथ यौवनसंस्थेन, धर्मबन्धुमहामुनिम् । प्राप्य भागवती दीक्षा, मयाऽऽप्ता वरलोचने! ॥ ४१५ ॥ ततः क्रियाकलापेन, साधूनां चारुगामिनि! । विहृतोऽहं ससद्भावः, सूत्रार्थग्रहणोद्यतः ॥ ४१६ ॥ अथ स्वल्पेन कालेन, द्वादशाङ्गः सदागमः । सपूर्वः सातिशेषो मे, सर्वथा बन्धुतां गतः ॥ ४१७ ॥ पुराऽप्यस्य मया ज्ञातं, विज्ञानं बहुशो बहु । किं तु संपूर्णपूर्वाणि, न प्राप्तानि कदाचन ॥ ४१८ ॥ तदा तु स्तोककालेन, विज्ञानं लीलया मया । निःशेषमस्य विज्ञातं, सर्वं पूर्वैः समन्वितम् ॥ ४१९ ॥ ततोऽधिगतसूत्रार्थो, गुरुणा धर्मबन्धुना । स्थापितोऽहं निजस्थाने, सू(भू)रिसङ्घस्य पश्यतः ॥ ४२० ॥ कृतश्च बृहदानन्दो, देवदानवमानवैः । आचार्यस्थापनायां मे, सच्चमत्कारकारकः ॥ ४२१ ॥ गुरुणा शेषलोकैश्च, श्लाघितोऽहं मुहुर्मुहुः । धन्यस्त्वं कृतकृत्योऽसि, येन ज्ञातः सदागमः ॥४२२॥ तथा—वस्त्रालङ्कारमाल्यैश्च, पूजिता लोकबान्धवाः । विहिता सङ्घपूजा च, विधिना वसनाशनैः ॥४२३॥

सिंहभवः

आचार्य-पदं

"पात्रादयस्तथा । अहं पूज्यो जने मां हि, वन्दन्ते देवदानवाः ॥ ४५५ ॥ ममाणिमादयः सर्वा, विद्यन्ते भावभूतयः । इत्युत्सेकपरो
"भूत्वा, प्रार्थयामि च भाविनीः ॥४५६॥ युग्मम् । तथा—आस्वादितेषु लब्धेषु, रसेषु परमा रतिः । आविर्भूताऽतिलौल्यान्मे, प्रार्थनाऽ-
"नागतेषु च ॥ ४५७ ॥ शय्यासनादिसंपाद्ये, वस्त्राहारादिगोचरे । सुखे शारीरिके तोषः, प्राप्ते लौल्यं च भाविनि ॥ ४५८ ॥ जातं मे
"त्रितयस्यापि, तदानीं वशवर्तिनः । विहायोमविहारं च, जातोऽहं शिथिलस्तदा ॥ ४५९ ॥ गौरवत्रितयेनापि, ततो मे हृतचेतसः ।
"आर्तोशयोऽपि संपन्नो, दुष्टसङ्कल्पकारकः ॥ ४६० ॥ स च रौद्राभिसन्धिर्मे, न जातो बाधकस्तदा । आर्तोशयसमीपस्थः, केवलं सोऽ-
"व्यवस्थितः ॥ ४६१ ॥ ततस्ता अपि संपन्नास्तिस्रस्तत्परिचारिकाः । तस्यैव वर्धनोद्युक्ता, मम दौःशील्यकारिकाः ॥ ४६२ ॥ इतश्च
"चित्तविक्षेपो, मण्डपो वेदिका च सा । चित्तवृत्तौ कृता सज्जा, विष्टरं च समारितम् ॥ ४६३ ॥ चारित्रधर्मराजाद्याश्चित्तवृत्तौ तिरो-
"हिताः । जातः श्रमणवेषोऽपि, मिथ्यादृष्टिरहं तदा ॥ ४६४ ॥ ततो लब्धावकाशैस्तैरेवं सर्वैररातिभिः । आयुर्नामा च संदिष्टः, स राजा
"मम भार्यया ॥ ४६५ ॥ यदुत—निरूपयाऽऽर्यपुत्रस्य, भद्र! स्थानं मनोहरम् । साम्प्रतं चारुवासार्थं, योग्यमीदृशकर्मणाम् ॥ ४६६ ॥
"तेनोक्तं—भगवति! निरूपितमेवास्य निवासस्थानं, यतो मिलितः साम्प्रतं महामोहबलेऽमुष्य चरितेन विरञ्जितहृदयः कर्मपरिणामः
"पुरस्कृतस्तेन पापोदयः प्रस्थापितोऽहमेकाक्षनिवासनगरे आकारितौ च ततस्तीव्रमोहोदयात्यन्ताबोधौ महत्तमबलाधिकृतौ रुष्टश्च केनचि-
"त्कारणेन वेदनीयस्योपरि कर्मपरिणामः ततः सर्वस्वमपहृत्य कृतोऽसावकिंचित्करः ततस्ताभ्यां तीव्रमोहोदयात्यन्ताबोधाभ्यां सहानेन स-
"परिवारेण मया भगवत्या च तस्मिन्नेवैकाक्षनिवासनगरेऽधुना निवस्तव्यं," किमत्र निरूपणीयं?, जानाति चेदं सर्वं स्वयमेव भगवती,
केवलं मयि दयां कुर्वती मामेवमुज्ञापयति, भवितव्यतयोक्तं—भद्रायुष्क! सत्यमेवमिदं, तथाहि—नियोगो यत्र ते जातस्तत्रावश्यंतया

"त्रीणि मानुषाणि तदनु प्रहेतव्यावार्ताशयरौद्राभिसन्धिनामानौ द्वौ पुरुषौ तयोश्च परिचारिका वर्तन्ते अत एव कृष्णनीलकापोताभि-
"धाना लेश्या इति गोत्रेण प्रसिद्धास्तिस्रो नार्यः वयं तु तावत्प्रमत्ततानदीं पुनः संस्थाप्य प्रवाहयामो मन्दपारांश्च भूयः सम्भारयामः,
"एवं च कुर्वतां भविष्यत्यक्लेशेनैवास्माकं प्रभाव इति," ततः प्रतिभातं तन्मन्त्रिणो वचनं सर्वेषामपि महामोहादिभूभुजां, ततस्तैस्तत्समर्थितं
वाक्येन प्रारब्धं क्रियया—ततो मे निकटस्थेषु, तेषु जातेषु सुन्दरि! । पूर्वोदितेषु सर्वेषु, यज्जातं तन्निशामय ॥ ४४१ ॥ वामाटोपतनो
गुर्वी, यशस्सन्मानपूजनाम् । आत्मनश्चित्तकल्लोलाः, समुत्पन्ना ममेदृशाः ॥४४२॥ यदुत—"अहो ममातुलं तेजश्चाहो मम गौरवम् ।
"अहो जगति पाण्डित्यमन्यासाधारणं मम ॥ ४४३ ॥ अहो युगप्रधानोऽहं, यथाऽतिक्रान्तभाविनोः । कालयोरपि मादृशो, न भूतो न
"भविष्यति ॥ ४४४ ॥ सर्वा विद्याः कलाः सर्वाः, सर्वे चातिशयाः परम् । अहो विमुच्य भुवनं, मय्येव ननु संस्थिताः ॥ ४४५ ॥
"नरेन्द्रः पूर्वपर्याये, सुरूपो भोगलालितः । अधुना त्वीदृशः सूरिरहो नाहं लघुः पुमान् ॥ ४४६ ॥ महत्कुलं महत्तेजो, महती भाग्य-
"हत्तपः । महती च मम प्रज्ञा, सर्वं हि महतां महत् ॥ ४४७ ॥ एवंविधविकल्पैश्च, साहङ्कारस्य मे तदा । समं तेनानुबन्धेन, शैल-
"राजो विजृम्भितः ॥ ४४८ ॥ तथा—यत्रासौ तत्र नियमान्मिथ्यादर्शनवश्यता । ज्ञानसंवरणस्यापि, विलासो विद्यते भुवः ॥ ४४९ ॥
"ताभ्यां वशीकृतश्चाहं, मलिनीभूतचेतनः । जानन्नपि न जानामि, शास्त्रगर्भार्थमञ्जसा ॥ ४५० ॥ पठामि पाठयाम्यन्यं, व्याचक्षे शा-
"स्त्रसंहतिम् । भावार्थं न च बुध्येऽहं, तद्वशीभूतमानसः ॥ ४५१ ॥ केवलं मे परिभ्रष्टं, सार्धं पूर्वचतुष्टयम् । पाश्चात्यं हन्त तत्काले,
"शेषज्ञानं न विस्मृतम् ॥ ४५२ ॥ अत्रान्तरे प्रयत्नेन, चित्तवृत्तौ ममानघे! । प्रवाहिता नदी तूर्णं, रिपुभिः सा प्रमत्तता ॥ ४५३ ॥
"ततो विजृम्भितान्युच्चैर्निजवीर्येण सुन्दरि! । तानि गौरवसंज्ञानि, मानुषाणि विशेषतः ॥ ४५४ ॥ कथं?—ईदृशः शिष्यवर्गो मे, वस्त्र-

गौरवं

"पात्रादयस्तथा । अहं पूज्यो जने मां हि, वन्दन्ते देवदानवाः ॥ ४५५ ॥ ममाणिमादयः सर्वा, विद्यन्ते भावभूतयः । इत्युत्सेकपरो
"भूत्वा, प्रार्थयामि च भाविनीः ॥४५६॥ युग्मम् । तथा—आस्वादितेषु लब्धेषु, रसेषु परमा रतिः । आविर्भूताऽतिलौल्यान्मे, प्रार्थनाऽ-
"नागतेषु च ॥ ४५७ ॥ शय्यासनादिसंपाद्ये, वस्त्राहारादिगोचरे । सुखे शारीरिके तोषः, प्राप्ते लौल्यं च भाविनि ॥ ४५८ ॥ जातं मे
"त्रितयस्यापि, तदानीं वशवर्तिनः । विहायोग्रविहारं च, जातोऽहं शिथिलस्तदा ॥ ४५९ ॥ गौरवत्रितयेनापि, ततो मे हृतचेतसः ।
"आर्ताशयोऽपि संपन्नो, दुष्टसङ्कल्पकारकः ॥ ४६० ॥ स च रौद्राभिसन्धिर्मे, न जातो बाधकस्तदा । आर्ताशयसमीपस्थः, केवलं सोऽ-
"व्यवस्थितः ॥ ४६१ ॥ ततस्ता अपि संपन्नास्तिस्रस्तत्परिचारिकाः । तस्यैव वर्धनोद्युक्ता, मम दौःशील्यकारिकाः ॥ ४६२ ॥ इतश्च
"चित्तविक्षेपो, मण्डपो वेदिका च सा । चित्तवृत्तौ कृता सज्जा, विष्टरं च समारितम् ॥ ४६३ ॥ चारित्रधर्मराजाद्याश्चित्तवृत्तौ तिरो-
"हिताः । जातः श्रमणवेषोऽपि, मिथ्यादृष्टिरहं तदा ॥ ४६४ ॥ ततो लब्धावकाशैस्तैरेवं सर्वैरयातिभिः । आयुर्नामा च संदिष्टः, स राजा
"मम भार्यया ॥ ४६५ ॥ यदुत—निरूपयाऽऽर्यपुत्रस्य, भद्र! स्थानं मनोहरम् । साम्प्रतं चारुवासार्थं, योग्यमीदृशकर्मणाम् ॥ ४६६ ॥
"तेनोक्तं—भगवति! निरूपितमेवास्य निवासस्थानं, यतो मिलितः साम्प्रतं महामोहबलेऽमुष्य चरितेन विरञ्जितहृदयः कर्मपरिणामः
"पुरस्कृतस्तेन पापोदयः प्रस्थापितोऽहमेकाक्षनिवासनगरे आकारितौ च ततस्तीव्रमोहोदयात्यन्ताबोधौ महत्तमबलाधिकृतौ दृष्टश्च केनचि-
"त्कारणेन वेदनीयस्योपरि कर्मपरिणामः ततः सर्वस्वमपहृत्य कृतोऽसावकिंचित्करः ततस्ताभ्यां तीव्रमोहोदयात्यन्ताबोधाभ्यां सहानेन स-
"परिवारेण मया भगवत्या च तस्मिन्नेवैकाक्षनिवासनगरेऽधुना निवस्तव्यं," किमत्र निरूपणीयं?, जानाति चेदं सर्वं स्वयमेव भगवती,
केवलं मयि दयां कुर्वती मामेवमुल्लापयति, भवितव्यतयोक्तं—भद्रायुष्क! सत्यमेवमिदं, तथाहि—नियोगो यत्र ते जातस्तत्रावश्यंतया

"त्रीणि मानुषाणि तदनु प्रहेतव्यावार्ताशयरौद्राभिसन्धिनामानौ द्वौ पुरुषौ तयोश्च परिचारिका यास्सन्ति स्तत एव कृष्णनीलकापोताभि-
"धाना लेश्या इति गोत्रेण प्रसिद्धास्तिस्रो नार्यः वयं तु तावत्प्रमत्ततानदीं पुनः संस्थाप्य प्रवादयामो मण्डपादीनि च भूयः समारचयामः,
"एवं च कुर्वतां भविष्यत्यक्लेशेनैवास्माकं प्रभाव इति," ततः प्रतिभातं तन्मन्त्रिणो वचनं सर्वेषामपि महामोहादिभूभुजां, तदधीसारसमर्पितं
वाक्येन प्रारब्धं क्रियया—ततो मे निकटस्थेषु, तेषु जातेषु सुन्दरि! । पूर्वोदितेषु सर्वेषु, यज्जातं तन्निशामय ॥ ४४१ ॥ वामालोकयतो
गुर्वी, यशस्सन्मानपूजनाम् । आत्मनश्चित्तकल्लोलाः, समुत्पन्ना ममेदृशाः ॥४४२॥ यदुत—"अहो ममातुलं तेजस्तथाऽहो मम गौरवम् ।
"अहो जगति पाण्डित्यमन्यासाधारणं मम ॥ ४४३ ॥ अहो युगप्रधानोऽहं, यथाऽतिक्रान्तभाविनोः । कालयोरपि मादृशो, न भूतो न
"भविष्यति ॥ ४४४ ॥ सर्वा विद्याः कलाः सर्वाः, सर्वे चातिशयाः परम् । अहो विमुच्य भुवनं, मय्येव ननु संस्थिताः ॥ ४४५ ॥
"नरेन्द्रः पूर्वपर्याये, सुरूपो भोगलालितः । अधुना त्वीदृशः सूरिरहो नाहं लघुः पुमान् ॥ ४४६ ॥ महत्कुलं महत्तेजो, महती भीम-
"हत्तपः । महती च मम प्रज्ञा, सर्वं हि महतां महत् ॥ ४४७ ॥ एवंविधविकल्पैश्च, साहङ्कारस्य मे सदा । समं तेनानुपन्थेन, शैल-
"राजो विजृम्भितः ॥ ४४८ ॥ तथा—यत्रासौ तत्र नियमान्मिथ्यादर्शनवश्यता । ज्ञानसंवरणस्यापि, विलासो विद्यते भृशः ॥ ४४९ ॥
"ताभ्यां वशीकृतश्चाहं, मलिनीभूतचेतनः । जानन्नपि न जानामि, शास्त्रगर्भार्थमञ्जसा ॥ ४५० ॥ पठामि पाठयाम्यन्यं, व्याचक्षे शा-
"स्त्रसंहतिम् । भावार्थं न च बुध्येऽहं, तद्वशीभूतमानसः ॥ ४५१ ॥ केवलं मे परिभ्रष्टं, सार्धं पूर्वचतुष्टयम् । पाश्चात्यं हन्त तत्काले,
"शेषज्ञानं न विस्मृतम् ॥ ४५२ ॥ अत्रान्तरे प्रयत्नेन, चित्तवृत्तौ ममानघे! । प्रवाहिता नदी तूर्णं, रिपुभिः सा प्रमत्तता ॥ ४५३ ॥
"ततो विजृम्भितान्युच्चैर्निजवीर्येण सुन्दरि! । तानि गौरवसंज्ञानि, मानुषाणि विशेषतः ॥ ४५४ ॥ कथं?—ईदृशः शिष्यवर्गो मे, वस्त्र-

गौरवं

"पात्रादयस्तथा । अहं पूज्यो जने मां हि, वन्दन्ते देवदानवाः ॥ ४५५ ॥ ममाणिमादयः सर्वा, विद्यन्ते भावभूतयः । इत्युत्सेकपरो "भूत्वा, प्रार्थयामि च भाविनीः ॥४५६॥ युग्मम् । तथा—आस्वादितेषु लब्धेषु, रसेषु परमा रतिः । आविर्भूताऽतिलौल्यान्मे, प्रार्थनाऽ- "नागतेषु च ॥ ४५७ ॥ शय्यासनादिसंपाद्ये, वस्त्राहारादिगोचरे । सुखे शारीरिके तोषः, प्राप्ते लौल्यं च भाविनि ॥ ४५८ ॥ जातं मे "त्रितयस्यापि, तदानीं वशवर्तिनः । विहायोमविहारं च, जातोऽहं शिथिलस्तदा ॥ ४५९ ॥ गौरवत्रितयेनापि, ततो मे हृतचेतसः । "आर्ताशयोऽपि संपन्नो, दुष्टसङ्कल्पकारकः ॥ ४६० ॥ स च रौद्राभिसन्धिर्मे, न जातो बाधकस्तदा । आर्ताशयसमीपस्थः, केवलं सोऽ- "प्यवस्थितः ॥ ४६१ ॥ ततस्ता अपि संपन्नास्तिस्रस्तत्परिचारिकाः । तस्यैव वर्धनोद्युक्ता, मम दौःशील्यकारिकाः ॥ ४६२ ॥ इतश्च "चित्तविक्षेपो, मण्डपो वेदिका च सा । चित्तवृत्तौ कृता सज्जा, विष्टरं च समारितम् ॥ ४६३ ॥ चारित्रधर्मराजाद्याश्चित्तवृत्तौ तिरो- "हिताः । जातः श्रमणवेषोऽपि, मिथ्यादृष्टिरहं तदा ॥ ४६४ ॥ ततो लब्धावकाशैस्तैरेवं सर्वैररातिभिः । आयुर्नामा च संदिष्टः, स राजा "मम भार्यया ॥ ४६५ ॥ यदुत—निरूपयाऽऽर्यपुत्रस्य, भद्र! स्थानं मनोहरम् । साम्प्रतं चारुवासार्थं, योग्यमीदृशकर्मणाम् ॥ ४६६ ॥ "तेनोक्तं—भगवति! निरूपितमेवास्य निवासस्थानं, यतो मिलितः साम्प्रतं महामोहबलेऽमुष्य चरितेन विरञ्जितहृदयः कर्मपरिणामः "पुरस्कृतस्तेन पापोदयः प्रस्थापितोऽहमेकाक्षनिवासनगरे आकारितौ च ततस्तीव्रमोहोदयात्यन्ताबोधौ महत्तमबलाधिकृतौ रुष्टश्च केनचि- "त्कारणेन वेदनीयस्योपरि कर्मपरिणामः ततः सर्वस्वमपहृत्य कृतोऽसावकिंचित्करः ततस्ताभ्यां तीव्रमोहोदयात्यन्ताबोधाभ्यां सहानेन स- "परिवारेण मया भगवत्या च तस्मिन्नेवैकाक्षनिवासनगरेऽधुना निवस्तव्यं," किमत्र निरूपणीयं?, जानाति चेदं सर्वं स्वयमेव भगवती, केवलं मयि दयां कुर्वती मामेवमुल्लापयति, भवितव्यतयोक्तं—भद्रायुष्क! सत्यमेवमिदं, तथाहि—नियोगो यत्र ते जातस्तत्रावश्यंतया

गौरवं

गौरवपरि-णामः

मया । स्थाने सहार्यपुत्रेण, वस्तव्यं शेषकैरपि ॥ ४६७ ॥ केवलं—त्रिभागमात्रमद्यापि, स्थातव्यस्येह तिष्ठति । ततोऽतिलङ्घिते तत्र, यास्यामो भद्र! लीलया ॥ ४६८ ॥ तेनोक्तं भगवत्येव, जानीते केऽत्र मादृशाः ? । किं च—संपूर्णा कार्यतां सिद्धः, सामग्री गमनोचिताम् ॥४६९॥ ततस्तैः प्रचलीभूतैः, सवैरेव वरानने! । अत्यन्तशिथिलो मार्गे, कृतोऽहं सुखलम्पटः ॥४७०॥ मोष्णं मे मा च शीतं मे, मा सन्त्वन्ये परीषहाः । एवं सुखासिकाशीलस्त्यक्तमार्गस्तदाऽभवम् ॥ ४७१ ॥ ततस्तदन्ते रहितो विधानेन संमूढया चेतनया प्रबलैः शारीरदोषैरलक्षयन्नात्मानं जीर्णायां प्राचीनगुडिकायामास्वाद्य तामपरां नीतोऽहं तत्रैकाक्षनिवासनगरे स्थापितो वनस्पतिपाटके तेन पूर्वोदितेन प्रासादापवरकन्यायेन, स्थितः कियन्तमपि कालं भक्षयन्नपरापरगुडिकां, ततोऽन्यदा नीतोऽहं शेषपाटकेषु तदन्यनगरेषु च, कदाचिदानीतः पञ्चाक्षपशुसंस्थाने—ततो विशुद्धभावत्वान्नीतोऽहं विबुधालये । कृताश्च बहवस्तस्माद्भूयस्तत्र गमागमाः ॥ ४७२ ॥ तथाहि—पञ्चाक्षपशुसंस्थानाद्भूरिशो व्यन्तरादिषु । अकामनिर्जरां प्राप्य, गतोऽहं शुभभावतः ॥ ४७३ ॥ तथा—विशिष्टपरिणामेन, क्वचित्कल्पोपपातिषु । सौधर्माद्येषु संपन्नो, विबुधाकारधारकः ॥ ४७४ ॥ किं बहुना ?—गृहिधर्मसमेतेन, सम्यग्दर्शनसंयुजा । उत्कृष्टतस्ततः स्थानादष्टौ कल्पा मयेक्षिताः ॥४७५॥ तथा—बहुशो मानवावासमवाप्तोऽहं सुलोचने! । कर्माकर्मान्तरद्वीपभूमिजेषु नृषु स्थितः ॥४७६॥ तत्र—अकर्मभूमिजातोऽहमेकं द्वे त्रीणि वा मुदा । स्थितः पल्योपमान्युच्चैः, कल्पपादपलालितः ॥ ४७७ ॥ तावद्रम्यूतमानश्च, सत्कान्ताभोगमोदितः । सुखाहारविहारश्च, विशुद्धाशयबन्धुरः ॥४७८॥ तदन्ते भार्यया युक्तो, गतोऽहं विबुधालये । आस्वाद्य गुडिकां चार्वी, पूर्वोक्तविधिना तथा ॥ ४७९ ॥ भूरिवाराः प्रजातोऽहमन्तरद्वीपवासिषु । असंख्यवर्षायुष्को (ष्केषु), गतश्च विबुधालये ॥ ४८० ॥ तथा—कर्मभूमिषु जातेन, यदज्ञानान्मया कृतम् । जलज्वलनशैलादिपतनं विषभक्षणम् ॥ ४८१ ॥ पञ्चाग्नितपनाद्यं वा, रज्ज्वाद्युद्बन्धनादि

वनस्पतिषु गतिः भवपरम्परा

वा । कर्मशुद्धेन भावेन, धर्मबुद्ध्याऽन्यथापि वा ॥ ४८२ ॥ प्राप्तं तदापि तद्भद्रे!, सत्पुरं विबुधालयम् । किं तु किल्बिषिकावासे, जातो
ज्यन्तरपाटके ॥ ४८३ ॥ त्रिभिर्विशेषकम् ॥ तथा—कृत्वा बालतपो घोरं, सरोषो वैरतत्परः । तपोगौरवयुक्तोऽहं, गतो भवनवासिषु
॥ ४८४ ॥ तथा—तापसव्रतमासाद्य, तदनुष्ठानभावतः । ज्योतिश्चारिषु नीतोऽहं, बहुशो निजभार्यया ॥ ४८५ ॥ तथा—प्राप्य भा-
गवती दीक्षां, तपोनिष्टप्तदेहकः । युक्तः क्रियाकलापेन, ध्यानाभ्यासपरायणः ॥४८६॥ केवलं—सर्वज्ञभाषितं किंचित्पदं वाक्यमथाक्षरम् ।
अश्रद्दधानो मूढत्वात्सम्यग्दर्शनवर्जितः ॥४८७॥ गतोऽहं भूरिशो भद्रे!, सर्वग्रैवेयकेष्वपि । आगतो मानवावासं, भूयो भूयोऽन्तराऽन्तरा
॥ ४८८ ॥ युग्मम् । अस्य च भ्रमणस्यैवं, भद्रे! जानीहि कारणम् । तत्सिंहाचार्यताकाले, शैथिल्यं यन्मया कृतम् ॥ ४८९ ॥ इतरथा
—तदैव निर्मलीकृत्य, चित्तवृत्तिं निहत्य च । रिपुवर्गं स्थितो राज्ये, गतः स्यां निर्वृतावहम् ॥ ४९० ॥ तदिदमखिलं जातं, भूयो भ्रम-
णलक्षणम् । निजाया दुष्टचेष्टायाः, फलं नान्यस्य कस्यचित् ॥ ४९१ ॥ अगृहीतसङ्केतयोक्तं—न केवलमिदं तात!, समस्तं यन्निवेदि-
तम् । त्वयेह बत तत्सर्वं, निजं चेष्टाविजृम्भितम् ॥ ४९२ ॥ तथाहि—यद्यवर्तिष्यथास्तात!, सर्वदा त्वं निरापदि । तस्य सुस्थितराजस्य,
सदाज्ञायां स्थिराशयः ॥ ४९३ ॥ नाभविष्यत्ततो दीर्घा, तवेयमतिदारुणा । भीषणा श्रूयमाणाऽपि, तीव्राऽनर्थपरंपरा ॥ ४९४ ॥ युग्मम् ।
संसारिजीवेनोक्तं—चारु चारूदितं सुभ्रु!, संप्रति त्वं हि वर्तसे । नाम्नाऽगृहीतसङ्केता, भावतस्तु विचक्षणा ॥ ४९५ ॥ तदाकर्ण्य
चार्वङ्गि!, साम्प्रतं येन हेतुना । जातोऽहमीदृशावस्थस्तस्कराकारधारकः ॥ ४९६ ॥ अगृहीतसङ्केतयोक्तं—निवेदयतु भद्रः, संसारिजी-
वेनोक्तं—तस्माद्ग्रैवेयकादन्त्यादानीतोऽहं महेलया । पुरीं मनुजगत्यन्तःपातिनीं क्षेमनामिकाम् ॥ ४९७ ॥ इतश्च जानात्येव भवती यथा-
अनेकापणमालाढ्ये, भूरिविस्तारसुन्दरे । महाविदेहरूपेऽत्र, हट्टमार्गेऽतिदूरगे ॥ ४९८ ॥ वसन्ति चित्ररूपाणि, सत्पुराण्यन्तराऽन्तरा ।

मया । स्थाने सद्दार्यपुत्रेण, वस्तव्यं शेपकैरपि ॥ ४६७ ॥ केवलं—त्रिभागमात्रमद्यापि, स्थातव्यस्येह विद्यते । ततोऽविलङ्घिते तत्र, यास्यामो भद्र! लीलया ॥ ४६८ ॥ तेनोक्तं भगवत्येव, जानीते केऽत्र मादृशाः ? । किं च—संपूर्णां कार्यतां सिद्धः, सामग्री गमनोचिताम् ॥४६९॥ ततस्तैः प्रचलीभूतैः, सर्वैरेव वरानने! । अत्यन्तशिथिलो मार्गे, कृतोऽहं सुरतलम्पटः ॥४७०॥ मोष्णं मे मा च शीतं मे, मा सन्त्वन्ये परीपहाः । एवं सुखासिकाशीलस्त्यक्तमार्गस्तदाऽभवम् ॥ ४७१ ॥ ततस्तदन्ते रहितो विधानेन संमूढया चेतनया प्रयत्नैः शारीरदोपैरलक्षयन्नात्मानं जीर्णायां प्राचीनगुडिकायामास्वाद्य तामपरां नीतोऽहं तत्रैकाक्षनिवासनगरे स्थापितो वनस्पतिपाटके तेन पूर्वोदितेन प्रासादापवरकन्यायेन, स्थितः कियन्तमपि कालं भक्षयन्नपरापरगुडिकां, ततोऽन्यदा नीतोऽहं शेपपाटकेषु तदन्यनगरेषु च, कदाचिदानीतः पञ्चाक्षपशुसंस्थाने—ततो विशुद्धभावत्वान्नीतोऽहं विबुधालये । कृताश्च बहवस्तस्माद्भूयस्तत्र गमागमाः ॥ ४७२ ॥ तथाहि—पञ्चाक्षपशुसंस्थानाद्भूरिशो व्यन्तरादिषु । अकामनिर्जरां प्राप्य, गतोऽहं शुभभावतः ॥ ४७३ ॥ तथा—विशिष्टपरिणामेन, क्वचित्कल्पोपपातिषु । सौधर्मादेषु संपन्नो, विबुधाकारधारकः ॥ ४७४ ॥ किं बहुना ?—गृहिधर्मसमेतेन, सम्यग्दर्शनसंयुजा । उत्कृष्टतस्ततः स्थानादष्टौ कल्पा मयेक्षिताः ॥४७५॥ तथा—बहुशो मानवावासमवाप्तोऽहं सुलोचने! । कर्माकर्मान्तरद्वीपभूमिजेषु नृषु स्थितः ॥४७६॥ तत्र—अकर्मभूमिजातोऽहमेकं द्वे त्रीणि वा मुदा । स्थितः पल्योपमान्युच्चैः, कल्पपादपलालितः ॥ ४७७ ॥ तावद्भव्यूलमानश्च, सत्कान्ताभोगमोदितः । सुखाहारविहारश्च, विशुद्धाशयबन्धुरः ॥४७८॥ तदन्ते भार्यया युक्तो, गतोऽहं विबुधालये । आस्वाद्य गुडिकां चार्वी, पूर्वोक्तविधिना तथा ॥ ४७९ ॥ भूरिवाराः प्रजातोऽहमन्तरद्वीपवासिषु । असंख्यवर्षायुष्को (ष्केषु), गतश्च विबुधालये ॥ ४८० ॥ तथा—कर्मभूमिषु जातेन, यदज्ञानान्मया कृतम् । जलज्वलनशैलादिपतनं विपभक्षणम् ॥ ४८१ ॥ पञ्चाग्नितपनाद्यं वा, रज्ज्वाद्युद्बन्धनादि

वनस्पतिषु गतिः भवपरम्परा

अथासौ भास्कराकारस्तातोऽस्तं समुपागतः । नलिनी च गता तेन, सार्धं माता ममानघा ॥ ५१८ ॥ ततो यावत्करिष्यन्ति, किल राज्येऽभिषेचनम् । सामन्तास्तावदुत्पन्नं, चक्ररत्नं ममातुलम् ॥ ५१९ ॥ तथा—जातानि शेषरत्नानि, सुन्दराणि त्रयोदश । निधयश्च समायाता, नव यक्षैः सुरक्षिताः ॥ ५२० ॥ ततोऽयं चक्रवर्तीति, मत्वा सर्वे नराधिपाः । गताः किङ्करतां मेऽत्र, सुकच्छविजये तदा ॥ ५२१ ॥ ततो निर्जित्य निःशेषं, पट्खण्डं भूमिमण्डलम् । क्षेमपुर्यां स्थितेनैव, प्रतापेन मयाऽर्जितम् ॥ ५२२ ॥ कृतो द्वादश वर्षाणि, द्वात्रिंशद्भिर्महीभुजाम् । सहस्रैरभिषेको मे, किरीटाटोपराजिनाम् ॥ ५२३ ॥ ततो देवीसहस्राणां, चतुःषष्ट्या सहाखिलाम् । कुङ्कनीलाब्जनेत्राणां, भुञ्जानो भोगसंहतिम् ॥ ५२४ ॥ कुर्वाणो जनतानन्दं, दधानश्चक्रवर्तिताम् । महाभूतिविमर्देन, भूरिकालमहं स्थितः ॥ ५२५ ॥ युग्मम् । किं बहुना ?—चतुर्भिरधिकाशीतिपूर्वलक्षाणि लीलया । उद्दामराज्यसम्भोगं, कृत्वाऽहं चारुलोचने ! ॥ ५२६ ॥ निर्गतः पश्चिमे काले, स्वपुर्या राजलीलया । पट्खण्डविजयस्यापि, स्वस्य दर्शनकाम्यया ॥५२७॥ पुराकरादिसंकीर्णां, तां पर्यट्य वसुन्धराम् । अहमत्र समायातः, सत्पुरे शङ्खनामके ॥ ५२८ ॥ ततश्च—पश्चात्कृत्वा बलं शेषं, राजवल्लभवेष्टितः । प्राप्तश्चित्तरमं चेदमुद्यानं नन्दनोपमम् ॥ ५२९ ॥ इतश्च—यानि गुणधारणावस्थायामभूवंस्तद्यथा प्रथमो मे धर्मदेशकः कन्दमुनिः तथा वयस्यः कुलंधरो भार्या च मदनमञ्जरी, तान्यप्यारेटितानि भवितव्यतया भ्रमितानि भवचक्रे दर्शितानि सुन्दरासुन्दररूपेण, ततः स कन्दमुनिः क्वचित्कृतबहुलिकासम्पर्कः समानीतोऽस्यैव सुकच्छविजयस्यान्तर्भूते हरिपुरे तत्र च भीमरथो राजा तस्य च सुभद्रा नाम महादेवी तयोश्चास्ति समन्तभद्रो नाम तनयः ततः प्रवेशितोऽसौ कन्दः सुभद्राकुक्षौ निर्गतः क्रमेण जाता दारिका प्रतिष्ठितं तस्या नाम महाभद्रेति । इतश्च समन्तभद्रः संप्राप्य सुघोषमाचार्यं संजातवैराग्यः संभाल्य पितरौ निष्क्रान्तः संपन्नः संपूर्णद्वादशाङ्गधरः स्थापितो गुरुभिः सूरि-

अनुसुन्दरस्य चक्रित्वं

कन्दमुनि-कुलन्धर-मदनमञ्जरीणां मेलाः

ततः क्षेमपुरी साऽस्य, हट्टमार्गस्य मध्यगा ॥ ४९९ ॥ सुकच्छविजयस्थानमिदं भद्र! निगद्यते । यत्र स्थिता वयं यूयं, पुरी सा च मनोहरा ॥ ५०० ॥ तस्यां च क्षेमपुर्यां—अभूदरातितामिस्रवर्हणस्तेजसां निधिः । राजा युगंधरो नाम, भास्कराकारधारकः ॥५०१॥ तस्य दर्शनमात्रेण, प्रोत्फुल्लमुखपङ्कजा । आसीदिष्टा महादेवी, नलिनी नाम विश्रुता ॥ ५०२ ॥ अथागृहीतसङ्केते!, भवितव्यतया तया । तस्याः प्रवेशितः कुक्षावहं पुण्योदयान्वितः ॥ ५०३ ॥ इतश्च—तस्यां रात्रौ सुशय्यायां, सा सुप्ता कमलेक्षणा । चतुर्दश महास्वप्नानवलोक्य समुत्थिता ॥ ५०४ ॥ ततः प्रहृष्टयाऽऽख्यातास्ते युगंधरभूभुजे । तया फलोपलम्भार्थं, महास्वप्ना गजादयः ॥ ५०५ ॥ तेनाप्युक्तं यथा देवि!, देवदानवपूजितः । कुलप्रदीपस्ते पुत्रश्चक्रवर्ती भविष्यति ॥ ५०६ ॥ ततः प्रोत्फुल्लनेत्रा सा, भर्तुर्वाक्यैर्मनोहरैः । अभिनन्द्य तदुल्लापैर्गर्भं धारयतेऽनघा ॥५०७॥ ततः संपूर्णकालेन, सुन्दराकारधारकः । पुण्योदययुतो जातस्तोपाहृष्टोऽहमम्बया ॥५०८॥ अथ गत्वा प्रियङ्कर्या, हर्षगद्गदया गिरा । प्रोत्फुल्लनेत्रयाऽऽस्थाने, तातायाहं निवेदितः ॥ ५०९ ॥ ततः पुलकचार्वङ्गः, स दत्त्वा पारितोषिकम् । दानं तस्यै यथाकाममादिदेश महोत्सवम् ॥ ५१० ॥ अथ विलासविभूषणबन्धुरः, सरसनर्तनवादनसुन्दरः । मदविघूर्णितलोकमनोहरः, प्रववृते मम जन्ममहोत्सवः ॥ ५११ ॥ गानपानवरस्वादनवन्तो, मानदानमदनादरवन्तः । तातवाक्यवशतो विलसन्तस्तत्र गाढमुदिता ननु सन्तः ॥ ५१२ ॥ यथैकं तद्दिनं भद्रे!, तथाऽन्यद्दिनपञ्चकम् । गतमुद्दामलीलाभिर्बृहदुत्सवसुन्दरम् ॥ ५१३ ॥ ततः प्रयत्नतः सर्वैस्ताताम्बाबान्धवादिभिः । षष्ठिकाजागरो रम्यः, कृतो मे नाकविभ्रमः ॥ ५१४ ॥ ततो महाप्रमोदेन, छद्दिते मासमात्रके । प्रतिष्ठितं च मे नाम, यथाऽयमनुसुन्दरः ॥ ५१५ ॥ अथ संवर्धमानोऽहं, धात्रीपञ्चकलालितः । कुमारभावमापन्नो, गृहीताः सकलाः कलाः ॥ ५१६ ॥ ततश्च यौवनस्थोऽहं, यौवराज्येऽभिषेचितः । तातेन महता भद्रे!, विमर्देन मनोरमे ॥ ५१७ ॥

तदर्थं ददात्युपयाचितशतानि पिबत्यौषधमूलजातानि, ततो भवितव्यतया स कुलंधरो भूरिषु भवेषु कृतकुशलाभ्यासः प्रवेशितस्तस्याः कुक्षौ, दृष्टोऽनया स्वप्नो यथा सुन्दराकारधरः पुरुषो वदनेन मे प्रविश्य शरीरे हृदयेन निर्गत्य गतः केनचिन्नरेण सार्धं, ततः कथितोऽनया भर्त्रे स स्वप्नः, तेनोक्तं—भविष्यति ते पुत्रः केवलमचिरेण कंचन गुरुं प्राप्य प्रव्रजिष्यति, तदाकर्ण्य तुष्टा कमलिनी, ततस्तृतीये मासि संजातोऽस्याः कुशलकर्मकरणमनोरथः संपादितः श्रीगर्भराजेन संपूर्णकाले च जातो दारकः परिपुष्टो राजा कारितस्तज्जन्मानन्दः, इतश्च समुत्पन्नविमलकेवलालोकः समागतोऽसौ समन्तभद्राचार्यः स्थितोऽत्रैव चित्तरमे कानने निर्गता तद्वन्दनार्थं महाभद्रा कथंचिन्न विज्ञातः सुललितया, संजातः कथंचिद्राजदारकजल्पः, भगवतोक्तं—एष बहुशोऽभ्यस्तकुशलकर्मा राजपुत्रो न स्थास्यति भवने ग्रहीष्यति प्रव्रज्यां भविष्यति सर्वज्ञागमधारकः, तदाकर्ण्यागता निजोपाश्रये महाभद्रा, इतश्च तस्य नरेन्द्रतनयस्य पौण्डरीक इति प्रतिष्ठितमभिधानं विहितो नामकरणप्रमोदः, इतश्च सा सुललिता कुतूहलपरतया विचरन्ती प्राप्ता तत्र चित्तरमे कानने दृष्टः सङ्घमध्यस्थोऽनया स समन्तभद्रसूरिर्नृपतिसुतगुणसन्दोहं वर्णयमानः, उक्तं च भगवता—यतोऽयं शुभेन कर्मपरिणामेन अनुकूलीभूतया कालपरिणत्या अस्यां मनुजगतौ जनितस्तस्मादेवंविधगुण एवायं भविष्यति, भव्यपुरुषो हि सुमतिः सन्निखिलैर्गुणैर्युज्यत एव कोऽत्र सन्देहः ?, ततस्तदाकर्ण्य हृष्टाः सर्वे लोकाः, सुललितया चिन्तितं—कथं कालपरिणतिकर्मपरिणामयोजनकत्वं कथं चैष भाविगुणजातं जानाति ?, ततो गत्वा वसतिं पृष्टाऽनया महाभद्रा, तया चिन्तितं—अत्यन्तमुग्धेयं सुललिता, ततोऽयमेवास्याः प्रतिबोधनोपाय इति संचिन्त्य युक्तितः समर्थितं महाभद्रया कालपरिणतिकर्मपरिणामयोर्जनकत्वं, उत्पादयामि च सदागमगोचरामस्याः प्रीतिमिति चिन्तयन्त्याऽभिहितमनया—भद्रे! स तदा लोकमध्ये व्याचक्षाणः सदागमस्त्वयाऽवलोकितः स हि भगवान् भूतभवद्भविष्यद्भावान्निःशेषानाविर्भावयत्येव नास्त्यत्र सन्देहः

पौण्डरीकजन्मादि

सुललितायाः समन्तभद्रदर्शनं

पदे, सापि च महाभद्रा संप्राप्ता यौवनं परिणीता गन्धपुराधिपतिना पद्मावतीरविप्रभपुत्रेण दिवाकरेण गतोऽसौ कालवशेनास्तं प्रतिबोधिता समन्तभद्रसूरिणा महाभद्रा गृहीताऽनया भागवती दीक्षा संजातैकादशाङ्गधारिणी गीतार्था स्थापिता गुरुभिः प्रवर्तिनीपदे ततः सा सुसाध्वीभिः परिवारिता विहरन्ती संप्राप्ता रत्नपुरे, तत्र च मगधसेनो राजा तस्य च सुमङ्गला नाम महादेवी, इतश्च सा मदनमञ्जरी जनिता तत्सुतात्वेन भवितव्यतया तया कृतं तस्याः सुललितेति नाम प्राप्ता क्रमेण यौवनं संपन्ना पुरुषद्वेषिणी लङ्घितो भूरिकालः नेष्टो वरगन्धोऽप्यनया ततः कथमियं वरिष्यत इति संजाता जननीजनकयोश्चिन्ता ततो महाभद्रां समागतामाकर्ण्य गृहीत्वा तां सुललितां प्रियपुत्रिकां गतौ तदुपाश्रये वन्दनार्थं देवीनरेन्द्रौ वन्दिता सपरिकरा भगवती दत्तोऽनया परमपदकल्पपादपनिरुपहतबीजभूतो धर्मलाभः विहितामृतप्रवाहकल्पा सद्धर्मदेशना ततः सा सुललिता परिस्फुटमबुध्यमानापि भगवतीवचनभावार्थमत्यन्तमुग्धतया पूर्वपरिचयादुत्पन्नस्नेहरागा भगवतीवदनकमलावलोकनान्निजलोचने कचिदन्यत्र नेतुमपारयन्ती पितरं प्रत्याह—तात! मया भगवत्याश्चरणयुगलं पर्युपासितव्यं तदनुजानातु मां तातो येनाहमनयैव सार्धं सर्वत्र विचरामीति, तदाकर्ण्य प्ररुदिता सुमङ्गला, नृपतिराह—देवि! अलमत्र रुदितेन करोतु वत्सा समीहितं अयमेवास्या विनोदनोपायो भविष्यति, केवलं भगवतीपार्श्वस्थयाऽनया सामग्रीयुक्तया गृहस्थयैव सत्या पर्यटितव्यं न चास्मदपृच्छयाऽनया प्रव्रज्याजल्पोऽपि विधेयः, सुललितयोक्तं—तात! महाप्रसादः, ततः सा सुललिता तया महाभद्रया प्रवर्तिन्या सह तथैव नानादेशेषु विचरितुं प्रवृत्ता, केवलं कर्मोदयान्न प्रवर्तते तस्याः पाठः न लगति सामाचारीक्रमः न बुध्यते च सा परिस्फुटमपि कथ्यमानमागमार्थं, अन्यदा समायाता भगवती महाभद्राऽत्र शङ्खपुरे स्थिता नन्दस्य श्रेष्ठिनो पंचशालायां, इतश्चात्र शङ्खपुरे मम मातुलः श्रीगर्भो नाम राजा तस्य च महाभद्रामातृष्वसा कमलिनी नाम महादेवी सा च निरपत्या

सुललितायाः साध्व्या सह पर्यटनं

श्रीगर्भराजाय च संजातस्तयोः प्रमोदः ततो गत्वा महानन्देन समर्पितस्ताभ्यां भगवतो निजतनयः ततः कुरुते स प्रतिदिनमागमाधिगमं पौण्डरीकः, ततोऽत्रैव चित्तरमे काननेऽत्रैव च मनोनन्दने चैत्यभवने सङ्घसमुदयमध्यस्थिते भगवति समन्तभद्रसूरौ धर्मं व्याचक्षणे स्थितायां महाभद्रायां निकटवर्तिनि पौण्डरीके समागतायां सुललितायां धर्मकथाऽऽक्षिप्तहृदये भव्यलोके समुल्लसितो मदीयबहलकलकलः, तच्छ्रवणादुत्कर्णिता परिपत्, ततः सुललितया महाभद्रां प्रत्युक्तं—भगवति! किमेतत्?, सा प्राह—नाहं जाने, ततो भगवता तयोः सुललितापौण्डरीकयोः प्रतिबोधायेदमुक्तं—यथा महाभद्रे! किं न जानीषे त्वं प्रसिद्धैव तावदियं मनुजगतिर्नगरी प्रख्यातोऽयं महाविदेहरूपो हट्टमार्गो यत्राधुना सर्वेऽपि वयमास्महे, ततोऽद्य संसारिजीवो नाम तस्करो गृहीतः सलोप्त्रको दुष्टाशयादिभिर्दण्डपाशिकैः दर्शितः कर्मपरिणाममहाराजाय, ततस्तेन पृष्ट्वा कालपरिणति स्वभावादींश्चाज्ञापितोऽसौ वध्यतया, ततः सोऽयं संसारिजीवः खल्वेवं वेष्टितस्तै राजपुरुषैर्महाकलकलेन हट्टमार्गमध्येन नगर्या निःसार्य नीत्वा च पापिपञ्जरनामके वध्यस्थाने दुःखमारेण मारयिष्यते, तदेष तस्मिन्नीयमाने कोलाहलः श्रूयते, सुललितयोक्तं—भगवति! ननु शङ्खपुरमिदं न मनुजगतिः चित्तरमं चेदं काननं न हट्टमार्गः श्रीगर्भश्चात्र राजा न कर्मपरिणामः तत्किमित्येवं भगवन्तो जल्पन्ति?, भगवानाह—धर्मशीलेऽगृहीतसङ्केता त्वमसि न जानीषे परमार्थं, सुललितया चिन्तितं—ही ममाप्यपरं नाम कृतं भगवता, ततः स्थिता विस्मितवदना, महाभद्रया बुद्धो भगवद्वाक्यार्थः, चिन्तितमनया—कश्चिदेष कृतभूरिपापो नरकगामी भगवता जीवो निर्दिष्टः, ततः संजाता महाभद्रायाः करुणा, अभिहितमनया—भगवन्! किमेष कथंचिन्मोचयितुं पार्यते तस्करो न वेति, भगवानाह—आर्ये! तव दर्शनेनास्य तत्समीपागमनेन च भविष्यत्यस्य मोक्षः, महाभद्रयोक्तं—भदन्त! गच्छाम्यहमस्याभिमुखं, भगवतोक्तं—गच्छ, ततः करुणापरिगतहृदयाऽऽगता महाभद्रा मदभ्यर्णं, अभिहितोऽहं—

तत्प्रसादादेव मयाऽपीदं समस्तं विज्ञातं चिरपरिचितः स मे भगवान्महाप्रभावश्चेत्यादि वर्णितं सदागममाहात्म्यं कथितं च तस्य तथा परितोषकारणं, सुललितयाऽभिहितं—भगवति! ममापि विधेहि तेन भगवता सह परिचयं, महाभद्राऽऽह—बाढं, ततो नीताऽनया समन्तभद्रसूरिसमीपे सुललिता, तद्दर्शनाज्जातः सुललितायाः प्रमोदः संपन्नः कथितगुणेषु संप्रत्ययः, अभिहितमनया—भगवति! वञ्चिताऽहमियन्तं कालं भगवत्या यदेष न दर्शितो मे महाभागः सदागमः अहो ते स्वार्थपरता ततः परं भगवति! दर्शनीयो मे दिने दिने भगवान् येनाहमपि भगवत्या सदृशी पण्डिता भवामि, महाभद्रयोक्तं—एवं करिष्ये, ततः प्रारब्धा ताभ्यां प्रतिदिनं भगवत्पर्युपासना लङ्घितो मासकल्पः, ततो भगवानाह—महाभद्रे! क्षीणजङ्घाबलाऽसि त्वमधुना न शक्नोषि विहर्तुं अवतिष्ठ त्वमत्रैव शङ्खपुरे वयं तु विहरामस्तावत् पुनरागमिष्यामः, युष्मत्प्रतिजागरणमेवेहास्माकं मासकल्पकरणे कारणं, अन्यथा हि न कल्पते साध्वीसमध्यासिते क्षेत्रे साधूनां कर्तुं मासकल्पः, ग्लानप्रतिजागरणं तु पुष्टमालम्बनं, प्रतिचरणीयश्च भवत्या पौण्डरीकोऽयं राजदारकः भविष्यत्येष वर्धमानो मे शिष्यः, ततस्तथेति प्रतिपन्नं सूरिवचनं महाभद्रया विहृता भगवन्तः, प्राप्तः क्रमेण पौण्डरीकः कुमारभावं प्रादुर्भूतोऽस्य यथानिर्दिष्टो गुणकलापः जातोऽयं स्नेहप्रतिबद्धहृदयो महाभद्रायां, समागता भूयो भगवन्तः समन्तभद्रसूरयः नीतस्तदभ्यर्णे महाभद्रया पौण्डरीकः, स च भाविभद्रतया हृष्टस्तन्मूर्तिदर्शनेन रञ्जितस्तद्गुणकलापेन प्रीणितस्तद्वचनाकर्णनेन, शुश्रूषुबुद्धितया च महाभद्रां प्रत्याह—भगवति! किंनामायं महाभागः?, तया चिन्तितं—सरलहृदयोऽयं राजपुत्रो रञ्जितश्च भगवद्गुणैरिति लक्ष्यते, तदस्यापि जनयाम्येतद्द्वारेणैव सर्वज्ञागमविषयां भक्तिमिति संचिन्त्याभिहितमनया—भद्र! सदागमोऽयमभिधीयते, पौण्डरीकेणोक्तं—भगवति! यद्यम्बातातयोः प्रतिभाति ततोऽहमस्यैव भगवतः सकाशे गृह्णाम्यागमार्थं, महाभद्रयोक्तं—युक्तमिदं, ततो निवेदितस्तदभिप्रायो महाभद्रया कमलिन्यै

वृत्तान्तजातं जानाति भवान्? इत्येतत्सर्वं निवेदयितुमर्हति भद्रः, अनुसुन्दरेणोक्तं—अस्ति तावदागतोऽहमन्त्यग्रैवेयकात् समुत्पन्नोऽत्र सुकच्छविजये क्षेमपुर्यां युगन्धरनलिनीपुत्रतयाऽनुसुन्दराभिधानः, अत्रान्तरे प्रोत्साहितास्ते भवितव्यतया महामोहादयः, कथं?—सम्यग्दर्शनदूरस्थो, यावदेषोऽनुसुन्दरः । यतध्वं तावदेवात्र, यूयं भोः स्वार्थसिद्धये ॥ ५३० ॥ इतरथा—कथंचित्तं समासाद्य, परिपोष्य निजं बलम् । भवतां प्राग्वदेवायं, बाधाकारी भविष्यति ॥ ५३१ ॥ अन्यच्च—अक्लेशेन वशं याति, साम्प्रतं भवतामयम् । सद्बोधाद्यैर्वृतो भूयो, दुर्ग्रहोऽयं भविष्यति ॥ ५३२ ॥ ततोऽधुना यथाशक्त्या, कृत्वेमं वशवर्तिनम् । चित्तवृत्तिमहाराज्यं, लात यूयं निराकुलाः ॥ ५३३ ॥ ततस्तैश्चोदितैर्भद्रे!, वल्गमानैर्निरङ्कुशैः । बालकालात्समारभ्य, तैरहं परिवेष्टितः ॥ ५३४ ॥ अहं तु तेषां मध्यस्थो, ध्यान्ध्यान्धीभूतचेतनः । विस्मृताशेषसद्बन्धुः, पुनस्तन्मयतां गतः ॥ ५३५ ॥ ततः समस्तैस्तैः पापैः, संप्रयुज्य निजं निजम् । वीर्यं कृतोऽहं भूयोऽपि, पापार्जनपरायणः ॥ ५३६ ॥ कथं?—कौमारे वर्तमानोऽहं, प्रवृत्तो मांसभक्षणे । मद्यपाने रतो द्यूते, जन्तुसङ्घातपीडने ॥ ५३७ ॥ यौवने वर्तमानेन, पारदार्यादयस्तथा । लोके प्रभवताऽत्यर्थं, प्रसह्य विहिता मया ॥ ५३८ ॥ तथा—स्थितेन चक्रवर्तित्वे, महारम्भपरिग्रहाः । पापर्द्धयोऽन्यदोषाश्च, निरपेक्षेण सेविताः ॥ ५३९ ॥ सर्वत्र मूर्च्छितो गृद्धो, विभूतौ विषयेषु च । एतावन्तमहं कालं, स्थितोऽत्यन्तसुखी किल ॥५४०॥ एवं च वर्तमानेन, मया ते भावशत्रवः । विस्मृत्य पूर्ववृत्तान्तं, बन्धुबुद्ध्याऽवधारिताः ॥५४१॥ ततस्तैर्लब्धप्रसरैर्मे मलिनतरीकृता चित्तवृत्तिः नितरामभिभूतं चारित्रधर्मराजबलं धारितं (दूरे) निरुद्धमभ्यन्तरे तिरोहितं तत्क्षान्त्यादिकं सुतरामन्तरङ्गमन्तःपुरं बहिर्भावितोऽहं प्रभुभावात् प्रकाशितं कर्मपरिणामराज्यं प्रबलीभूतः पापोदयः वलिगतमुद्दामतया महामोहसैन्यं संस्थापितानि निजनगरादीनि प्रवृत्ता बोढुं महापूरेण प्रमत्ततानदी विस्तीर्णीभूतं तद्विलसितं प्रत्यग्रीकृतश्चित्तविक्षेपमण्डपः समारिता तृष्णा-

यथा भद्र! भगवन्तं सदागमं शरणं प्रतिपद्यस्वेति, ततः समानीतोऽहमेवं वदन्त्या भगवत्समीपं, दृष्टोऽहमेवं यष्यत्तस्कराकारधारकः समस्तपरिषदा, ममापि भगवन्तमवलोकयतोऽनाख्येयसुखरसनिर्भरतया समागता मूर्च्छा लब्धा चेतना प्रतिपन्नः शरणतया भगवान् माभीर्दानेन समाश्वासितोऽहं भगवता दूरीभूता भगवद्भयेन किलैते राजपुरुषाः ततो विश्रब्धीभूतोऽहं पृष्टस्तया व्यतिकरं कथितश्च मयैवमात्मवृत्तान्तो विस्तरेण, अयं च भद्रे! भगवतः समन्तभद्रसूरेर्महाभद्रायाः पौण्डरीकस्य भवत्याश्च सम्बन्धी वृत्तान्तः प्रस्तावोऽपि तव स्वसंवित्त्यर्थं मया निवेदितः येन ते मदीयकथिते सुनिर्णीतमेवायं कथयतीति सर्वत्र सम्प्रत्ययो भवति, सञ्जातस्तेऽधुना सम्प्रत्ययः?, सा प्राह—बाढमात्मगोचरः संजातः, केवलं यदि त्वमनुसुन्दरनामा चक्रवर्ती ततः किमित्येवं तस्कराकारधारको दृश्यसे?, अयं मेऽधुना सन्देहः, स प्राह—भद्रे! युवयोः प्रतिबोधनार्थं मयेदं बहिरपि तस्कररूपं विरचितं यतोऽहमन्तरङ्गं चौर्यमुद्दिश्य भवतां पुरतो भगवता संसारिजीवो नामायं तस्करः कलकलेनेत्थं बद्ध्वा नीयते ऽत्र इत्याख्यातः, ततो गतायां मम सम्मुखं महाभद्रायां तद्दर्शनानुभावात्संजाते प्रबोधे मया चिन्तितं—यद्यप्येषा प्रज्ञाविशाला महाभद्रा जानात्येवेदं भगवदादिष्टं मदीयमन्तरङ्गं चौर्यं ततो लक्षयति भावतो मम तस्करतां तथाप्यगृहीतसङ्केताऽद्यापि सा सुललिता न जानीते गन्धमप्यस्य व्यतिकरस्य, ततश्चक्रवर्तिरूपधारिणं मामुपलभ्य भवेदस्याः सदागमवचने विप्रत्ययो न जानीते किंचिदयं सदागमो यतश्चक्रवर्त्यप्यनेन तस्करोऽभिहित इति भावनया, किं च—असावपि पौण्डरीकोऽनेनैव द्वारेण प्रतिबोधितो भविष्यति, भव्यपुरुषो ह्यसौ सुमतिश्च वर्तते विज्ञास्यति मामपीनंवृत्तान्तश्रवणोत्तरकालमस्य सर्वस्य परिस्फुटमैदंपर्यं भविष्यत्यस्य प्रबोध इत्येवं विचिन्त्य विरचितमिदमन्तरङ्गात्मरूपसूचकं वैक्रियकरणलब्ध्या मया बहिरपि सर्वमेवंविधं रूपमिति, सुललितयोक्तं—कीदृशं पुनस्तदन्तरङ्गं चौर्यं यद्भवता विहितं कथं वा तत्रेदृशी विडम्बना कथं वाऽभगवं परगतं च निःशेषं

अनुसुन्दरस्यागमनं

चौररूपताकरणकारणं

णात् । आलोक्य काननं दिव्यं, संस्थितस्तद्दिदृक्षया ॥ ५४६ ॥ राजपुत्राश्च मे यावद्विनीताश्चाटुकारिणः । वदन्तो देव देवेति, दर्शयन्ति
वनश्रियम् ॥ ५४७ ॥ तावदेषा महाभागा, सुसाध्वीपरिवारिता । आगच्छन्ती महाभद्रे!, महाभद्रा विलोकिता ॥ ५४८ ॥ चतुर्भिः
कलापकम् । अथ निःशेषरूपेभ्यो, व्यावृत्ता कीलितेव मे । अस्यां निपतिता दृष्टिः, संजाताऽत्यन्तनिश्चला ॥ ५४९ ॥ एषापि मां प्रप-
श्यन्ती, संपन्ना स्नेहबन्धुरा । निःस्पृहापि महाभागा, पूर्वाभ्यासेन सुन्दरि! ॥ ५५० ॥ अथ प्राप्ता ममाभ्यर्णे, चिन्तयन्ती गुरोर्वचः ।
अयं नरकगामीति, करुणाऽऽगतचेतना ॥ ५५१ ॥ ततः कन्दमुनिकाले गुणधारणेन सता मया नितरामेतद्गोचरस्याभ्यस्ततया बहुमान-
स्यानुशीलिततया विनयस्य प्रतिपन्नतया हृदयस्य भावितततया गौरवस्यानुष्ठिततया वत्सलभावस्य प्रादुर्भूतश्चेतसि मे विमर्शः यदुत—
कैषा पुनर्भगवती या दृष्टमात्रापि मे हृदयमेवमाह्लादयति नयने शीतलयति शरीरं निर्वापयति अमृतकुण्ड इव मां क्षिपतीति, ततः कृतो
मया भगवत्याः शिरःप्रणामः दत्तोऽनया धर्मलाभाशीर्वादः, अभिहितं च—भो भो महाराज—मोक्षसम्प्रापके प्राप्ते, मानुष्ये ते नरो-
त्तम! । उन्मार्गगमनान्नैवं, गन्तुमन्यत्र युज्यते ॥ ५५२ ॥ निजकर्मापराधेन, तस्कराकारधारिणः । वध्यस्य नीयमानस्य, कृत्वा भावबि-
डम्बनाम् ॥ ५५३ ॥ किं राज्यं स्युर्विलासाः के, के भोगाः का विभूतयः । किं वा स्वास्थ्यं? महाराज!, चिन्तयेदं स्वचेतसा ॥ ५५४ ॥
युग्मम् । किं च—मद्दर्शनात्तदा समुत्पन्नविमर्शायाः संजातमस्या भगवत्या महाभद्राया जातिस्मरणं स्मृतस्तेन कन्दमुनिकालादारभ्य
समस्तो वृत्तान्तः प्रादुर्भूतं तदनुसारेण शुभाध्यवसायादवधिज्ञानं दृष्टं तेन मदीयमपि विचरणं, ततोऽभिहितमनया—किं न स्मरसि रा-
जेन्द्र!, यत्तदा गुणधारणः । भवन्नुद्दामलीलाभिर्ललितस्त्वं ममाग्रतः ॥ ५५५ ॥ क्षान्त्याद्यन्तःपुरं प्राप्य, सुखसम्भारपूरितः । स्थितो
यद्भावराज्ये त्वं, तत्किं ते विस्मृतं किल? ॥ ५५६ ॥ किं न निर्मलसूरीणां, वचनानि स्मरन्ति ते । भवप्रपञ्चो यैस्तुभ्यमनन्तोऽपि

महाभद्रायां रागः

महाभद्राकृत उपदेशः

महाभद्राया जातिस्मृतिरवधिश्च

वेदिका संस्कृतं विपर्यासविष्टरं परिपोषिता महामोहेन निजाऽविद्यागात्रयष्टिः सर्वथा पुनर्नवीभूता समस्ता सामग्री, ततः प्रवृत्तोऽमीषां पर्यालोचः—अभिहितं विषयाभिलापेण—भो भोः सर्वे महीपालाः!, संचिन्तयत मद्वचः । दृष्टद्रोहः पुरा यूयं, किं वा वः परिकथ्यते? ॥ ५४२ ॥ मन्दादरेण निर्नाशं, तादृशं वीक्ष्य पूर्वकम् । मन्दादरो न युक्तो वः, साम्प्रतं कर्तुमत्र भोः! ॥ ५४३ ॥ तथा यतध्वमधुना, यूयं निष्कण्टकं हि वः । यथा संपद्यते राज्यमाकालं सुप्रतिष्ठितम् ॥ ५४४ ॥ ततः प्रतिभावं तत्तेषां मन्त्रिरचनं, अभिहितमेवैः—किं पुनरत्र क्रियत इति?, मन्त्रिणोक्तं—इदमिदं च कुरुतेति, ततस्तदुपदेशेन प्रोत्साहितोऽहं माहितश्च स्वयमेव तैः क्षेत्रस्थितं कर्मपरिणामसत्कं वर्गणाविरचितं प्रभूतमकुशलनामकं द्रव्यजातं, माहयित्वा च तैरेव ज्ञापितश्चौरतयाऽहं कर्मपरिणामराजस्य, ततस्तेनादिष्टं—यथा विडम्बनापुरःसरं पापिपञ्जरे नीत्वेमं दुःखमारेण मारयत, तदाकर्ण्य हृष्टास्ते दुरात्मानः, ततो विलिप्तोऽहं कर्ममलभस्मना चर्चितो राजसैर्गैरिकहस्तकैः खचितस्तामसैस्तृणमषीपुण्ड्रकैर्विनाटितः प्रबलरागकल्लोलपरंपरानामिकया दलमानया कणवीरमुण्डमालया विडम्बितो हृदये घूर्णमानया कुविकल्पसन्ततिरूपया शरावमालया ध्रियमाणेनोपरि पापातिरेकनामकेन जरत्पिटकखण्डेन घद्धोऽकुशलनामकलोत्प्रस्वरूपगलकेन आरोपितो महत्यसदाचाराभिधाने रासभे वेष्टितः कृतान्तसन्निभैर्दुष्टाशयादिभिः समन्ताद्राजपुरुषैर्निन्यमानो विवेकिलोकेन समुल्लसता कषायाभिधानडिम्भकलकलेन श्रूयमाणेन शब्दादिसम्भोगनामकेन विरसविषमडिण्डिमध्वनिना विजृम्भमाणेन बहिरङ्गलोकसमुदयविलासरूपेण दुर्दान्तजनाट्टहासेन निःसारितोऽहमेवं वध्यभूमेरभिमुखं तैर्महामोहादिभिर्महाविदेहरूपहट्टमार्गे निजदेशदर्शनलीलाव्याजेनेति, ततस्तैरानीतोऽहममुं प्रदेशं श्रुतो युष्माभिर्मदीयबलकलकलः गता मम सम्मुखं तथा महाभद्रा, इतश्चाहं तदा—निःशेषं पृष्ठतस्त्यक्त्वा, स्वसैन्यं राजलीलया । संप्राप्तश्चेदमुद्यानं, राजवल्लभवेष्टितः ॥ ५४५ ॥ रक्ताशोकतले यावदुत्तीर्य वरवार-

वध्यतादेशः

णात् । आलोक्य काननं दिव्यं, संस्थितस्तद्दिदृक्षया ॥ ५४६ ॥ राजपुत्राश्च मे यावद्विनीताश्चाटुकारिणः । वदन्तो देव देवेति, दर्शयन्ति वनश्रियम् ॥ ५४७ ॥ तावदेषा महाभागा, सुसाध्वीपरिवारिता । आगच्छन्ती महाभद्रे!, महाभद्रा विलोकिता ॥ ५४८ ॥ चतुर्भिः कलापकम् । अथ निःशेषरूपेभ्यो, व्यावृत्ता कीलितेव मे । अस्यां निपतिता दृष्टिः, संजाताऽत्यन्तनिश्चला ॥ ५४९ ॥ एषापि मां प्रपश्यन्ती, संपन्ना स्नेहबन्धुरा । निःस्पृहापि महाभागा, पूर्वाभ्यासेन सुन्दरि! ॥ ५५० ॥ अथ प्राप्ता ममाभ्यर्णे, चिन्तयन्ती गुरोर्वचः । अयं नरकगामीति, करुणाऽऽगतचेतना ॥ ५५१ ॥ ततः कन्दमुनिकाले गुणधारणेन सता मया नितरामेतद्गोचरस्याभ्यस्ततया बहुमानस्यानुशीलिततया विनयस्य प्रतिपन्नतया हृदयस्य भाविततया गौरवस्यानुष्ठिततया वत्सलभावस्य प्रादुर्भूतश्चेतसि मे विमर्शः यदुत—क्वैषा पुनर्भगवती या दृष्टमात्रापि मे हृदयमेवमाह्लादयति नयने शीतलयति शरीरं निर्वापयति अमृतकुण्ड इव मां क्षिपतीति, ततः कृतो मया भगवत्याः शिरःप्रणामः दत्तोऽनया धर्मलाभाशीर्वादः, अभिहितं च—भो भो महाराज—मोक्षसम्प्रापके प्राप्ते, मानुष्ये ते नरोत्तम! । उन्मार्गगमनान्नैवं, गन्तुमन्यत्र युज्यते ॥ ५५२ ॥ निजकर्मापराधेन, तस्कराकारधारिणः । वध्यस्य नीयमानस्य, कृत्वा भावविडम्बनाम् ॥ ५५३ ॥ किं राज्यं स्युर्विलासाः के, के भोगाः का विभूतयः । किं वा स्वास्थ्यं? महाराज!, चिन्तयेदं स्वचेतसा ॥ ५५४ ॥ युग्मम् । किं च—मद्दर्शनात्तदा समुत्पन्नविमर्शायाः संजातमस्या भगवत्या महाभद्राया जातिस्मरणं स्मृतस्तेन कन्दमुनिकालादारभ्य समस्तो वृत्तान्तः प्रादुर्भूतं तदनुसारेण शुभाध्यवसायादवधिज्ञानं दृष्टं तेन मदीयमपि चिचरणं, ततोऽभिहितमनया—किं न स्मरसि राजेन्द्र!, यत्तदा गुणधारणः । भवन्नुद्दामलीलाभिर्ललितस्त्वं ममाग्रतः ॥ ५५५ ॥ क्षान्त्याद्यन्तःपुरं प्राप्य, सुखसम्भारपूरितः । स्थितो यद्भावराज्ये त्वं, तत्किं ते विस्मृतं किल? ॥ ५५६ ॥ किं न निर्मलसूरीणां, वचनानि स्मरन्ति ते । भवप्रपञ्चो यैस्तुभ्यमनन्तोऽपि

महाभद्रायां रागः

महाभद्राकृत उपदेशः

महाभद्राया जातिस्मृतिरवधिश्च

निवेदितः ॥ ५५७ ॥ यत्प्रसादादवाप्तानि, त्वया ग्रैवेयकादिषु । सुखानि शरणं तेऽसौ, केवलं हि सदागमः ॥ ५५८ ॥ तदुध्यस्व महाराज!, तूर्णं मा मुह्य साम्प्रतम् । अहं हि ते समायाता, बोधार्थं करुणापरा ॥ ५५९ ॥ अत्रान्तरे च विज्ञाय, प्रस्तावं मम सन्मुखम् । पुनः प्रवृत्तः सद्बोधः, सम्यग्दर्शनसंयुतः ॥ ५६० ॥ स चान्तरारिवर्गेण, रुद्धस्तेन दुरात्मना । न शक्नोति ममाभ्यर्णमागन्तुं चमसा पथि ॥ ५६१ ॥ ततो भगवतीवाक्यं, सूर्यांशुनिकरेरितम् । सूर्यकान्तसमं दीप्तं, जीववीर्यं वरासनम् ॥ १६२ ॥ ततस्तस्य प्रकाशेन, तत्तमः प्रलयं गतम् । लग्नमायोधनं रम्यं, चित्तवृत्तौ च सैन्ययोः ॥ ५६३ ॥ ततो बलेन निर्भिद्य, रिपुवर्गं विबन्धकम् । समागतौ च मे पार्श्वं, तौ सद्बोधमहत्तमौ ॥ ५६४ ॥ ततः प्रवृत्तो मे विमर्शः यदुत—किमेषा भगवती जल्पतीति, ततश्चोहापोहमार्गणगवेषणं कुर्वतो मे समुत्पन्नं जातिस्मरणं, स्मृता गुणधारणावस्था, ततस्तदनुसारेण वर्धमानशुभाध्यवसायस्य मे समागतः सद्बोधवयस्यो विनिर्जितात्मप्रतिपक्षमवधिः, तद्बलेन दृष्टा मयाऽसङ्ख्येया द्वीपसमुद्राः विलोकितोऽसङ्ख्येय एव भवप्रपञ्चः प्रादुर्भूतं सिद्धाचार्यकालाभ्यस्तं पूर्वपर्यन्तं सहातिशयैः समस्तं श्रुतं आकलितः परिस्फुट इव निर्मलसूरिनिवेदितः समस्तोऽप्यात्मसंसारविस्तारः तदारात् पुनरसङ्ख्येयतया दृष्टः साक्षादेव निजः परिभ्रमणवृत्तान्तः, ततः पूर्वोक्तेन कारणेन विरचय्येत्थं तस्कररूपतया बहिरपि विडम्ब्यमानमात्मानं समागतोऽहमिह समं महाभद्रया, तदारात्प्रतीत एव ते मदीयव्यतिकरः, ततो भद्रे! सुललिते मदनमञ्जरीयमिति प्रसर्पितस्नेहतन्तुना अत्यन्तमुग्धेयमदृष्टपरमार्था वराकीति संजातकरुणातिरेकेण सर्वज्ञागमगोचरबहुमानेन क्लिष्टकर्मविलयतो भवत्वस्यास्तपस्विन्याः प्रतिबोध इति भगवतोऽस्य सदागमस्य पादप्रसादादखिलं मयेदमवधारितमिति सदागमे बहुमानमुत्पादयता संक्षेपेणाप्यनन्ततया षण्मासकथनीयो भगवन्माहात्म्यादेव प्रहरत्रयेणैव निवेदितोऽयमगृहीतसङ्केते इत्युल्लपता मया कुतूहलपरायै भवत्यै स्वयमपि संवेगापन्नेन समस्तोऽप्यात्मभवभ्रमणप्रपञ्चः, तदीदृशं भद्रे!

अनुसुन्दरस्य सम्यक्त्वं

जातिस्मरणं पूर्वबोधोऽवधिश्च

''तीर्थ्याः, केचिदेव न चापरे ॥ ७९० ॥ अन्यच्च—कणभक्षाक्षपादाद्या, ये तीर्थ्याः शास्त्रकारिणः । तैस्तानि निजशास्त्राणि, शिष्येभ्यः
''कथितानि भोः! ॥ ७९१ ॥ प्रवर्तितानि तीर्थानि, शिष्टानुष्ठानमालिका । तदिदं वैद्यशालानामुत्थानमभिधीयते ॥७९२॥ एवं च स्थिते
''—ये सर्वज्ञमहावैद्यशालायां कर्मरोगिणः । चिकित्सां कुर्वते धन्यास्ते भवन्त्येव नीरुजः ॥ ७९३ ॥ आस्तिकेषु च तीर्थ्येषु, कर्मरोगस्य
''तानवम् । यद्दृश्यते तथा सर्वमोक्षो वा श्रूयते कचित् ॥ ७९४ ॥ सोऽपि सर्वज्ञवाक्यानां, तेषामेव गुणो ननु । यानि तैर्निजशास्त्रेषु,
''ग्रथितानि कथंचन ॥ ७९५ ॥ युग्मम् । यद्वा जातिस्मरादीनां, तेषां सर्वज्ञभाषितम् । हृदि स्थितं भवत्येव, कर्मरोगनिबर्हणम् ॥ ७९६ ॥
''यथा दोषत्रयं वैद्यः, शारीरञ्चश्चिकित्सति । रागद्वेषमहामोहांस्तथा सर्वज्ञ एव हि ॥ ७९७ ॥ तस्मान्नास्त्येव सर्वज्ञवैद्यशास्त्रबहिःस्थिता ।
''चिकित्सा कर्मरोगाणां, नूनमेतेन हेतुना ॥ ७९८ ॥ तथाहि—एकान्तविपरीता ये, जैनशास्त्रस्य नास्तिकाः । एकान्तेनैव ते पापा, दी-
''र्घसंसारकारकाः ॥ ७९९ ॥ तथापि क्लिष्टजन्तूनां, गृद्धानामर्थकामयोः । त एव प्रतिभान्त्युच्चैर्नास्तिकाः साम्प्रतेक्षिणाम् ॥ ८०० ॥ तदे-
''वमार्य! शेषाणि, तीर्थानि जिनभाषितात् । विनिर्गतानि तेनेदं, व्यापकं जिनदर्शनम् ॥ ८०१ ॥ एवं च स्थिते—यद्रागद्वेषमोहानां, प्र-
''तिपक्षतया स्थितम् । सत्यं भूतदया ब्रह्म, शौचमिन्द्रियनिग्रहः ॥ ८०२ ॥ औदार्यं सुन्दरं वीर्यमाकिञ्चन्यमलोभता । गुरुभक्तिस्तपो
''ज्ञानं, ध्यानमन्यच्च तादृशम् ॥८०३॥ आस्तिकेष्वपि तीर्थेषु, तत्स्वरूपेण सुन्दरम् । किंतु नो राजते तेषु, यथा याचितभूषणम्? ॥८०४॥
''त्रिभिर्विशेषकम् । तद्धि स्वकल्पितैः शेषैः, सर्वज्ञवचनातिगैः । यागहोमादिभिः सार्धं, मीलितं न विराजते ॥ ८०५ ॥ समस्तोपाधिशु-
''द्धानां, गुणानां प्रतिपादकम् । तदेवं सर्वतीर्थेषु, स्थितं सर्वज्ञदर्शनम् ॥ ८०६ ॥ तच्च सद्भाविकं जैनं, तीर्थं सर्वगुणात्मकम् । सर्वत्र
''संस्थितं ज्ञेयं, न लिङ्गं धर्मकारणम् ॥८०७॥ अतो मदुक्तमार्गेण, यथा ते तीर्थिकास्तथा । ध्यानयोगबलेनैव, किं स्युर्मोक्षस्य साधकाः?

वैद्यकूटवैद्यशालाः

सर्वज्ञदर्शनस्य व्यापकता

''किं बहुना ?—सा महावैद्यशालैका, ज्ञेया रोगनिबर्हणी । तत्संहितानुसारेण, शेषा अपि कदाचन ॥ ७७२ ॥ यतः—वातः पित्तं कफ-
''श्चेति, सर्वरोगविधायकम् । दोषत्रयं विजानीते, सुवैद्यस्तस्य भेषजम् ॥ ७७३ ॥ कूटवैद्या न जानन्ति, स्वयं तत्त्वविरोधतः । तेभ्यो
''योऽपि विशेषः स्याद्धन्यानां रोगिणां क्वचित् ॥७७४॥ सोऽयं घुणाक्षरन्यायः, स्याद्दोषत्रयहानितः । तस्मात्स एव सद्वैद्यस्तत्र रोगचिकि-
''त्सकः ॥ ७७५ ॥ युग्मम् । तदिदं ते समासेन, मया वैद्यकथानकम् । पौण्डरीक! समाख्यातं, सन्देहदलनं परम् ॥ ७७६ ॥ भवोऽत्र
''नगरं ज्ञेयः, सर्वरोगप्रपीडितः । एकस्तत्र महावैद्यः, सर्वज्ञः परमेश्वरः ॥ ७७७ ॥ संजातकेवलज्ञानः, शिष्टसिद्धान्तसंहितः । सर्वलोको-
''पकारी च, कर्मरोगनिबर्हणः ॥ ७७८ ॥ तथापि गुरुकर्माणः, संसारोदरचारिणः । भूयांसो न प्रपद्यन्ते, जीवास्तं परमेश्वरम् ॥ ७७९ ॥
''ये भव्या लघुकर्माणो, जीवा धन्यतमाः परम् । त एव तं प्रपद्यन्ते, सद्वैद्यं परमेश्वरम् ॥ ७८० ॥ सदेवमनुजायां च, स सभायां यदा-
''ऽतुलम् । शिष्येभ्यो देशयत्युच्चैर्मोक्षमार्गं जगद्गुरुः ॥ ७८१ ॥ तदा देवा मनुष्याश्च, केचित्तां कलुषाशयाः । प्रसङ्गेनागतास्तत्र, शृण्वन्ति
''जिनदेशनाम् ॥ ७८२ ॥ अनेकनयगम्भीरां, तां श्रुत्वा मन्दबुद्धयः । अन्यथा कल्पयन्त्येते, मिथ्यात्वाध्मातचेतसः ॥ ७८३ ॥ ततस्ते
''जिनसद्वैद्यादुपश्रुत्य बहिर्गताः । स्वशास्त्राणि प्रकुर्वन्ति, कूटवैद्यसमानकाः ॥७८४॥ तत्र च—ये तावदास्तिकाः केचित्तीर्थ्याः सांख्यादयो
''मताः । जिनवाक्यानुसारेण, तैर्ग्रन्थेषु कियन्त्यपि ॥ ७८५ ॥ कृतानि चारुवाक्यानि, शेषमभ्यूहितं स्वयम् । स्वपाण्डित्याभिमानेन, कूट-
''वैद्यैरिवाखिलम् ॥ ७८६ ॥ युग्मम् । ततः सर्वज्ञसद्वाक्यभूषितानि महीतले । तच्छास्त्राण्यपि राजन्ते, प्रसिद्धिं प्रगतानि च ॥ ७८७ ॥
''ये पुनर्नास्तिकाः पापा, बृहस्पतिसुतादयः । सर्वं तैर्जिनशास्त्रस्य, विपरीतं विकल्पितम् ॥ ७८८ ॥ तेऽपि वाचालतासारास्तथाविधजने
''गताः । प्रसिद्धिं तस्करस्येह, प्रागल्भ्यं हि महत्तरम् ॥७८९॥ तथा—नानारुचित्वाल्लोकानां, प्रतिभान्ति यथाशयम् । केषांचिदेव ते

"॥ ८२६ ॥ चित्तजालोपसंहारि, यत्पुनर्ध्यानमीदृशम् । औदासीन्यं मतं तद्धि, निर्जरामात्रकारणम् ॥ ८२७ ॥ तदत्र तन्निरोद्धव्यं, चित्त-
"जालं मुमुक्षुणा । तच्च नानाविधोपायैः, रागद्वेषादिसूदनैः ॥ ८२८ ॥ ततो यस्तीर्थिकैः प्रोक्तो, यः प्रोक्तो जिनशासने । भावतीर्थे स्थितः
"सोऽयं, ध्येयभावो न दुष्यति ॥ ८२९ ॥ यतः—बहिर्विशुद्धकर्तव्याः, साधयन्ति मुमुक्षवः । मोक्षं नानाविधैर्ध्येयैर्माध्यस्थ्यं तत्र कार-
"णम् ॥ ८३० ॥ किं तु—परमात्मादयो ध्येया, यथा संवेगकारिणः । जीवस्य चेतसोऽत्यर्थं, न हि बिन्द्वादयस्तथा ॥ ८३१ ॥ आल-
"म्बनविशेषेण, चेतसः सुन्दरेतरम् । स्वरूपं जायते सिद्धं, स्वसंवेदनतो हृदः ॥ ८३२ ॥ किं तु—नानारुचित्वाज्जीवानां, कस्यचित्स्या-
"त्कथंचन । चेतःशुद्धिरतश्चित्रा, मौनीन्द्री मार्गदेशना ॥ ८३३ ॥ ततो विशुद्धचित्तानां, शुद्धमाध्यस्थ्यशालिनाम् । केषांचित्तेऽपि बि-
"न्द्वाद्याः, स्युर्विशुद्धेर्विधायकाः ॥ ८३४ ॥ इतरथा—तत्त्वं विज्ञाय ये मूढाः, प्रवर्तन्तेऽर्थकामयोः । तद्बलेनैव निश्चिन्ता, योगिनोऽत्र
"यं किल ॥८३५॥ तेषां ज्ञानमुलूकानां, यादृक् सूर्योदयेऽमले। कोटरान्तःप्रविष्टानां, तादृग् ज्ञेयं महात्मभिः ॥८३६॥ युग्मम्। ते ह्यज्ञान-
"तमोलिप्ताः, सुदृष्टिप्रसरं विना । कौशिका इव लीयन्ते, नितरां भवकोटरे ॥ ८३७ ॥ योगे ज्ञानांशुदीप्ताङ्गे, परिस्फुरति भास्करे । हृदये
"हि कुतस्तिष्ठेदर्थकामस्पृहातमः ? ॥ ८३८ ॥ तस्मान्निर्मलचित्तानां, वैराग्याभ्यासलासिनाम् । चित्रमालम्बनं प्राप्य, माध्यस्थ्यं संप्रवर्तते
"॥ ८३९ ॥ अतोऽमी ये पुरा प्रोक्ता, ध्येयभेदाः कुतीर्थिकैः । निष्यन्दबिन्दुभूतास्ते, स्युर्जैनमतवारिधेः ॥ ८४० ॥ तत्कूटवैद्यशालावद-
"न्यदर्शनमालिका । स्वरूपेण सदा ज्ञेया, कर्मरोगविवर्धनी ॥ ८४१ ॥ तत्रस्थानां पुनर्यः स्यात्कर्मरोगक्षयः कचित् । विशेषो वा स वि-
"ज्ञेयः, सर्वज्ञवचनाद्गुणः ॥ ८४२ ॥ इयं सद्वैद्यशालावदाकालं तन्मतात्मिका । कर्मरोगहरी ज्ञेया, द्वादशाङ्गी सुसंहिता ॥ ८४३ ॥ यद्दो-
"षोच्छेदनं लोके, किंचित्स्यात्सुन्दरं वचः । तद्गुणाकररूपायां, सर्वमस्यां प्रतिष्ठितम् ॥ ८४४ ॥ यत्पुनर्बुद्धिलेपेन, विना हिंसादि सुन्दरम् ।

ध्येयनानात्वस्याकारणता

द्वादशाङ्ग्याः संहितात्वं

"॥ ८०८ ॥ तत्र—शुद्धानुष्ठानविकलं, ध्यानं यद्दुष्टशीलिनः । ध्यायन्ति तद्वचोमात्रं, नास्याकारि विवेकिनाम् ॥ ८०९ ॥
"यतोऽत्र तण्डुलस्येव, जीवस्य तुषसन्निभे । शुद्धे मले सदाचारध्यानाच्छोध्यस्तथेतरः ॥ ८१० ॥ यः पुनर्मलिनारम्भी, यद्विध्यानपरो
"भवेत् । नासौ ध्यानाद्भवेच्छुद्धः, सतुषस्तण्डुलो यथा ॥ ८११ ॥ युग्मम् । सर्वोपाधिविशुद्धेन, ततो जीवेन साध्यते । ध्यान-
"योगः परः श्रेष्ठो, यः स्यान्मोक्षस्य साधकः ॥ ८१२ ॥ यश्च स्यात्तादृशो जीवो, निर्मलात्मा कथंचन । स तीर्थिकोऽपि भावेन, वर्तते
"जिनशासने ॥ ८१३ ॥ तस्माज्जैनेन्द्रमेवैकं, शासनं भवनाशनम् । तीर्थिका अपि यत्रस्था, भवन्त्येव भवच्छिदः ॥ ८१४ ॥ किं बहुना ?
"—वातपित्तकफानां भोः, निःशेषगदकारिणाम् । शमादारोग्यजननं, यथा लोके सुभेषजम् ॥ ८१५ ॥ तत्कूटभिषजाऽपीह, प्रयुक्तं पर-
"मार्थतः । कचिद् घुणाक्षरन्यायाद्यथा सद्वैद्यसम्मतम् ॥ ८१६ ॥ तथा सर्वमनुष्ठानं, यद्भवेन्नाशकारणम् । सरागद्वेषमोहानां, चित्तास्वच्छ-
"तात्मनाम् ॥ ८१७ ॥ तल्लोके सर्वतीर्थेषु, साक्षाज्जैनेऽपि वा मते । यथा तथा कृतं हन्त, ज्ञेयं सर्वज्ञसम्मतम् ॥ ८१८ ॥ चतुर्भिः कला-
"पकम् । यत्पुनश्चित्तमालिन्यकारकं मोक्षवारकम् । यतिश्रावकरूपेण, कुर्युः कर्म प्रवादिनः ॥ ८१९ ॥ तज्जैनेन्द्रमताद् बाढं, बहिर्भूतं न
"संशयः । किं पुनर्लोकतीर्थानां, कर्तव्यं बहुदोषलम् ? ॥ ८२० ॥ युग्मम् । तदिदं भावसत्तीर्थमवतीर्य तरन्ति भोः ! । संसारसागरं
"जीवाः, पर्याप्तं वेषचिन्तया ॥ ८२१ ॥ यच्च ते ध्येयनानात्वमत्र सन्देहकारणम् । समाकर्णय तत्रापि, परमार्थो निवेद्यते ॥ ८२२ ॥
"पापं हि दुष्टकल्लोलैः, पुण्यं गृह्णाति सुन्दरैः । चित्तैरात्मा तयोरभ्यामौदासीन्येन मुच्यते ॥ ८२३ ॥ स्वभाव एव जीवस्य, यत्तथापरि-
"णामभाक् । बध्यते पुण्यपापाभ्यां, माध्यस्थात्तु विमुच्यते ॥ ८२४ ॥ ते च हिंसाद्यनुष्ठानाद्, भ्रमकालुष्यकारकात् । जायन्ते चित्तक-
"ल्लोला, यथाऽपथ्याद्गदास्तनौ ॥ ८२५ ॥ तथाऽहिंसाद्यनुष्ठानात्, स्थैर्यनैर्मल्यकारकात् । जायन्ते शुभकल्लोलाः, पथ्यादिव सुखासिकाः

ध्येयनानात्वस्याकारणता

''परमात्माख्यः, शुद्धबोधप्रभावकः । अशरीरोऽप्यनन्तेन, वीर्येण भवमोचकः ॥ ८६४ ॥ विज्ञातो यैर्महाभागैः, प्रतिपन्नश्च भावतः । तेषां
''निर्णीतरूपाणां, विवादः क्कुत्र कारणे ? ॥ ८६५ ॥ केवलं—ये कल्पयन्ति तं मूढा, रागद्वेषमलाविलम् । ते ज्ञाततत्त्वरूपैस्तैर्वार्यन्ते करु-
''णापरैः ॥ ८६६ ॥ तदेवं तात्त्विकस्तावद्देवस्तुभ्यं निवेदितः । यः प्रमाणप्रसिद्धत्वादेकः सर्वप्रवादिनाम् ॥ ८६७ ॥ धर्मोऽप्येको जगत्यत्र,
''विज्ञेयः पारमार्थिकः । कल्याणमालिकाहेतुः, शुद्धः शुद्धगुणात्मकः ॥ ८६८ ॥ क्षमामार्दवसच्छौचतपःसंयममुक्तयः । सत्यब्रह्मार्जवत्यागा,
''एते धर्मगुणा दश ॥ ८६९ ॥ दशलक्षणकं धर्ममेनं विज्ञाय पण्डिताः । स्वर्गापवर्गदातारं, विवदन्ते न केनचित् ॥ ८७० ॥ यस्त्वस्य
''वैपरीत्येन, कल्प्यते मूढमानवैः । धर्मस्तं वारयन्तीमे, करुणाऽऽक्रान्तबुद्धयः ॥ ८७१ ॥ तदेष धर्मः सर्वत्र, यः प्रमाणप्रतिष्ठितः । एकः
''स वर्णितस्तुभ्यं, पौण्डरीकमुने ! मया ॥ ८७२ ॥ तथाऽत्र मोक्षमार्गो यः, संगीतस्तत्त्वसंज्ञकः । सोऽप्येक एव विज्ञातः, पण्डितैः पर-
''मार्थतः ॥८७३॥ तथाहि—सत्त्वं कैश्चित्तदाख्यातं, लेश्याशुद्धिस्तथाऽपरैः । शक्तिस्तथाऽऽत्मनो वीर्यं, यल्लभ्यं योगिभिः परम् ॥८७४॥
''तदिदं शब्दभेदेन, भिद्यते नार्थतो ध्रुवम् । तथाऽस्याचरणेऽप्यत्र, ध्वनयो भेदिनः परम् ॥ ८७५ ॥ यतः—अदृष्टकर्मसंस्कारा, पुण्या-
''पुण्ये शुभाशुभे । धर्माधर्मौ तथा पाशाः, पर्यायास्तस्य कीर्तिताः ॥ ८७६ ॥ एतच्च सत्त्ववीर्यादिशब्दवाच्यं यदिष्यते । इदं स्वहानिवृ-
''द्धिभ्यां, कारणं भवमोक्षयोः ॥ ८७७ ॥ हीयमाने भवन्त्यस्मिन्, भवे सर्वा विपत्तयः । वर्धमाने पुनः सर्वाः, संभवन्ति विभूतयः
''॥ ८७८ ॥ इदमेव चतुष्कोटिविशुद्धमपरे विदुः । ऐश्वर्यज्ञानवैराग्यधर्मरूपास्तु कोटयः ॥ ८७९ ॥ रजस्तमोभ्यां तत्सत्त्वमावृतं न प्रका-
''शते । विपरीताश्च जायन्ते, तस्यैश्वर्यादयो गुणाः ॥ ८८० ॥ तत्र—रजोवशादवैराग्यमनैश्वर्यं तमोवशात् । तमसश्चैव माहात्म्यादज्ञानाध-
''र्मसम्भवः ॥ ८८१ ॥ यत्रैकं तत्र नियमाद्द्वितीयमपि विद्यते । रजस्तमोभ्यामेवं हि, भवितव्यं सदा सह ॥ ८८२ ॥ सर्वथा मलिनं

धर्मस्वरूपं

मोक्षमार्गैक्यं

"समस्तपापनाशश्च, स्मृतिमात्रेण देवयोः ॥ ८४५ ॥ प्रोक्तमित्यादिकं पूर्वं, तीर्थ्यैस्तत्त्ववहिश्चरैः । निर्युक्तिकं वचोमात्रं, तत्तु हास्यं विवे-
"किनाम् ॥ ८४६ ॥ युग्मम् । ततश्चेदं गुरोर्वाक्यमाकर्ण्य पुनरब्रवीत् । पौण्डरीकमुनिस्तत्त्वविस्पष्टकरणेच्छया ॥ ८४७ ॥ यथा नाथ!
"वयं ब्रूमो, व्यापकं जिनदर्शनम् । तथा तीर्थ्या यदि स्वीयं, ब्रूयुस्तत्र किमुत्तरम्? ॥८४८॥ तथाहि निजया बुद्ध्या, सर्वे सर्वज्ञवादिनः ।
"परतीर्थतिरस्काराः, स्वीयदर्शनगर्विताः ॥ ८४९ ॥ देवे धर्मे निजे तत्त्वे, मोक्षे चाविष्टबुद्धयः। तेऽन्यदर्शनमस्तीति, स्वप्नान्तेऽपि न जा-
"नते ॥ ८५० ॥ एवं च स्थिते—यथा ते दर्पितास्तीर्थ्या, दर्शनेन यथायथम् । तथा नाथ! वयं स्वेन, को विशेषः परस्परम्? ॥८५१॥
"ततो विनिर्णयं नाथाः!, सुन्दरं कर्तुमर्हथ । मच्चित्तं जायते येन, सुमेरुशिखरोपमम् ॥ ८५२ ॥ ततो विमलसद्दन्तदीधितिच्छुरिताधरः ।
"तन्निर्णयविधानाय, गुरुरित्थमभाषत ॥ ८५३ ॥ एवन्निवेदितं व्यापि, मया तत्सुविनिश्चितम् । यत्सम्यग्दृष्टिभिर्दृश्यं, भाविकं जैनदर्शनम्
"॥ ८५४ ॥ तत्रोपलब्धे जीवानां, स्वयमेव मलोद्भवाः । एता हि विनिवर्तन्ते, मोहिन्यो भेदबुद्धयः ॥ ८५५ ॥ एकः प्रभासते देवः,
"सर्वज्ञः सर्वदर्शनः । वीतरागो गतद्वेषो, महामोहादिसूदनः ॥ ८५६ ॥ सकलो भुवनभर्ताऽसौ, सशरीरो निगद्यते । निष्कलो मोक्षमा-
"पन्नः, स एव भुवनप्रभुः ॥८५७॥ इदं स्वरूपं निश्चित्य, यैः स देवोऽवधारितः । तेषां नानाविधाः शब्दा, भेदबुद्धिं न कुर्वते ॥८५८॥
"तथाहि—स बुद्धः प्रोच्यतां लोके, ब्रह्मा विष्णुर्महेश्वरः । जिनेश्वरोऽपि वा द्व्न्व, नार्थभेदस्तथापि च ॥ ८५९ ॥ य एवं तं परिज्ञाय,
"भजेत्तस्यैव स प्रभुः । ममास्ति तव नास्तीति, सर्वो मत्सरविभ्रमः ॥ ८६० ॥ यस्यैव भावतोऽभीष्टस्तस्यासौ कुरुते शिवम् । न
"शृङ्केण पानीयं, चण्डालस्यापि वार्यते ॥ ८६१ ॥ निःशेषक्लेशनिर्मुक्तः, स समः सर्वदेहिनाम् । विज्ञातः कुरुते मोक्षं, तातीया
"कस्य जाह्नवी ॥ ८६२ ॥ संसारिणां हि नानात्वमात्मनां कर्मनिर्मितम् । कर्मप्रपञ्चनिर्मुक्तः, परमात्मा न भिद्यते ॥ ८६३ ॥ स देवः

देवस्वरूपं

"तस्यापाये पुनः पुंसां, सद्बुद्धेर्गोचरं गते । अत्र सद्दर्शने नूनं, भेदबुद्धिर्निवर्तते ॥९०२॥ आत्मा साधारणो ह्येष, सर्वेषामपि वादिनाम् ।
"समलो न विजानीते, मोक्षमार्गं यथास्थितम् ॥ ९०३ ॥ मलक्षये पुनस्तस्य, मोक्षमार्गो यथास्थितः । यत्र तत्र स्थितस्यापि, हठादेष प्र-
"काशते ॥ ९०४ ॥ ततश्चेदं विनिश्चित्य, दर्शनं पारमार्थिकम् । स मुञ्चेदाग्रहं स्वीयं, तथा चोक्तं मनीषिभिः ॥ ९०५ ॥ रिक्तस्य जन्तो-
"र्जातस्य, गुणदोषानपश्यतः । विलब्धा बत केनामी, सिद्धान्तविषमग्रहाः ॥ ९०६ ॥ अहं चारुरचारुस्त्वं, मदीयं चारु-दर्शनम् । न
"त्वदीयमिति स्पष्टं, मत्सरस्य विजृम्भितम् ॥ ९०७ ॥ किं बहुना ?—यावन्तो देहिनो लोके, यथावस्थितदृष्टयः । ते सर्वेऽप्यत्र वर्तन्ते,
"तात्त्विके शुद्धदर्शने ॥ ९०८ ॥ निर्नष्टममकारास्ते, विवादं नैव कुर्वते । अथ कुर्युस्ततस्तेभ्यो, दातव्यैवैकवाक्यता ॥ ९०९ ॥ ये त्वक्षी-
"णमलत्वेन, विपरीतविलोकिनः । स्वतीर्थं व्यापकत्वेन, संगिरन्ते समत्सराः ॥ ९१० ॥ तेषां जात्यन्धकल्पानामपकर्णनमुत्तरम् । अथवा
"तत्त्वमार्गे ते, बोधनीयाः प्रयत्नतः ॥ ९११ ॥ युग्मम् । न मोहदलनादन्यो, ह्युपकारो महत्तमः । अतो यदुक्तं भवता यदुत—
"स्वतीर्थं व्यापि चेत्तीर्थ्या, ब्रूयुस्तत्र किमुत्तरम् ? । तदिदं ते मयाऽऽख्यातं, प्रतिघातविवर्जितम् ॥ ९१२ ॥ यावद्दृष्टिविवादाङ्गे, निःशेष-
"नयसागरे । कुदृष्टिसरितः सर्वाः, पतन्तीर्द्रक्ष्यसि स्फुटम् ॥ ९१३ ॥ तावत्ते सर्वसन्देहा, यास्यन्ति प्रलयं तदा । ज्ञास्यसि त्वं यथा
"नास्ति, सर्वज्ञवचनात्परम् ॥ ९१४ ॥ युग्मम् ।" ततो निर्नष्टसन्देहः, प्रपद्य गुरुभाषितम् । संजातः पौण्डरीकोऽसौ, विशेषागमतत्परः
॥ ९१५ ॥ कालक्रमेण संपन्नो, द्वादशाङ्गस्य पारगः । समन्तभद्रसूरीणामसौ पादप्रसादतः ॥ ९१६ ॥ अनन्तगमपर्यायः, सातिशेषः
सविस्तरः । सर्वज्ञागमसद्भावः, सर्वोऽस्य मनसि स्थितः ॥ ९१७ ॥ ततोऽनुयोगोऽनुज्ञातः, सगच्छस्तस्य सूरिभिः । दत्तमाचार्यकं स्वीयं,
कृतमानृण्यमात्मनः ॥ ९१८ ॥ आचार्यस्थापनायां च, तस्यामरनरैर्मुदा । कृता विधानतो देवसङ्घपूजा दिनाष्टकम् ॥ ९१९ ॥ ततः स-

"सत्त्वं, हेतुः संसारदुःखयोः । तदेव विमलं वीर्यं, कारणं सुखमोक्षयोः ॥ ८८३ ॥ सद्भावार्थमिमे सर्वे, तपोध्यानप्रवादयः । शिक्षिता
"हेतवो लोके, तत्तत्त्वं पारमेश्वरम् ॥ ८८४ ॥ ज्ञानं तद्गोचरं यत्स्याच्छ्रद्धानं च तदाश्रयम् । क्रिया च वर्धनी तस्य, मोक्षमार्गः स की-
"र्तितः ॥ ८८५ ॥ एतच्च तत्त्वं यैः सत्त्वैर्विज्ञातं शुद्धबुद्धिभिः । मेरुनिष्कम्पचित्तानां, तेषां भ्रान्तिः कुतस्त्विका ? ॥ ८८६ ॥ केवलं
"वारयन्तीमे, मूढलोकं कृपापराः । तत्त्वमार्गात्परिभ्रष्टं, यान्तमर्दैवितर्दकम् ॥ ८८७ ॥ तदिदं ते समासेन, तत्त्वं सात्त्विकं मया ।
"आख्यातं यद्विनिश्चित्य, घटन्ते चारुयोगिनः ॥ ८८८ ॥ इदं चाविचलं लोके, यथैकं मानवः शिवम् । तथा मोक्षोऽप्यनेकैः, साध्यः
"प्रह्लादसुन्दरः ॥ ८८९ ॥ आत्मनोऽनन्तसद्बोधदर्शनानन्दवीर्यिणः । अमूर्तस्याभिरूपस्य, स्वरूपस्थितिलक्षणः ॥ ८९० ॥ संसिद्धिर्निर्वृतिः
"शान्तिः, शिवमक्षयमव्ययम् । अमृतं ब्रह्म निर्वाणं, ध्वनयस्तस्य वाचकाः ॥ ८९१ ॥ समत्वमितिकर्तव्यं, लेश्यानुद्धर्षमीरितम् । लेश्या-
"शुद्धिस्तु मोक्षाय, स चैवंविधलक्षणः ॥ ८९२ ॥ तद्बुद्धितारतम्येन, यदेवमनुजादिषु । अनुपक्रान्तसुखं तत्तु, देवपक्षे प्रतिष्ठितम् ॥८९३॥
"तदेवंविधसद्देवधर्मतत्त्वनिवेदकम् । सच्छास्त्रमीदृशस्यैव, मोक्षस्य प्रतिपादकम् ॥ ८९४ ॥ दृष्टेष्टाव्याहतं सार्वं, प्रमाणेन प्रतिष्ठितम् । तदेत-
"दिह सर्वत्र, व्यापकं परिकीर्तितम् ॥ ८९५ ॥ युग्मम् । अमुं च तस्य भावार्थं, परिज्ञाय विशेषतः । शब्दैर्विविधैः शब्दैर्यदिष्टमभिधीयते
"॥ ८९६ ॥ वैष्णवं वा यदुच्येत, ब्राह्मणं वा निगद्यताम् । माहेश्वरं वा गीयेत, बौद्धं वाऽप्यभिधीयताम् ॥ ८९७ ॥ जैनेन्द्रं वा निवे-
"द्येत, ज्ञातार्थैरिह मानवैः । अविनष्टे हि भावार्थे, शब्दभेदो न दुष्यति ॥ ८९८ ॥ अर्थेन हि प्रसीदन्ति, शब्दमात्रेण नो बुधाः ।
"संतुष्येदेव इत्युक्तो, मूर्ख एव निरर्थकम् ॥ ८९९ ॥ एवं च स्थिते—एवंविधार्थं चेत्तेऽपि, वदेयुस्तीर्थिकाः स्वकम् । दर्शनं व्यापकत्वेन,
"न विवादोऽस्ति तैः सह ॥ ९०० ॥ आच्छादितानां मोहेन, पौण्डरीकमहामुने ! । बहूनि दर्शनानीति, मोहोऽयं संप्रवर्तते ॥ ९०१ ॥

मन्तभद्राख्या, हित्वा स्वं देहपञ्जरम् । ते सूरयः शिवं प्राप्ताः, कृतकृत्या महाधियः ॥ ९२० ॥ अथावाप्तावधिज्ञानो, मनःपर्यायसंयुतः । जातः स पौण्डरीकाख्यः, सूरिः शासनदीपकः ॥ ९२१ ॥ स भव्यपौण्डरीकाणां, सूर्यवद्देशनांशुभिः । विजहार दूरभिन्नां, महामोहतमोमयीम् ॥ ९२२ ॥ अपरापरदेशेषु, सुचिरं मुनिचर्यया । विहृत्य शिष्यवर्गं च, निष्पाद्य गुणभूषितम् ॥ ९२३ ॥ दानशीलतपोभावधर्मयामचतुष्टयम् । पालयित्वा दिनाकारं, प्रकाश्य जिनशासनम् ॥ ९२४ ॥ विज्ञायायुष्कपर्यन्तं, पौण्डरीकदिवाकरः । ततः संलेखनाव्याजं, सन्ध्यारागं चकार सः ॥ ९२५ ॥ त्रिभिर्विशेषकम् । स्वस्थाने स्थापितस्तेन, सूरिः स्वभ्यस्तसत्क्रियः । साधुर्धनेश्वरो नाम, निःशेषागमपारगः ॥ ९२६ ॥ ततस्तं विहितानुज्ञं, पुरस्कृत्य धनेश्वरम् । आचार्यं निजगच्छं च, सोऽनुशिष्टिं ददाविमाम् ॥ ९२७ ॥ "धन्यस्त्वं येन विज्ञातः, संसारगिरिदारकः । वज्रवदुर्भिदश्चायं, महाभाग! जिनागमः ॥ ९२८ ॥ इदं चारोपितं वत्स, पदं सताम्पदां "पदम् । अत्युत्तममिदं लोके, महासत्त्वनिषेवितम् ॥ ९२९ ॥ धन्येभ्यो दीयते वात!, धन्या एवास्य पारगाः । गत्वाऽस्य पारं ते "धन्याः, पारं गच्छन्ति संसृतेः ॥ ९३० ॥ भीतं संसारकान्तारात्समर्थस्य विमोचने । साधुवृन्दमिदं सर्वं, भवतः शरणागतम् ॥ ९३१ ॥ "संप्राप्य गुणसन्दोहं, निर्मलं पारमेश्वरम् । त्राणं संसारभीतानां, धन्याः कुर्वन्ति देहिनाम् ॥ ९३२ ॥ वर्तते भावरोगार्तास्त्वं च भाव"भिषग्वरः । अतस्त्वयाऽमी सञ्जीवा, मोचनीयाः प्रयत्नतः ॥ ९३३ ॥ गुरुश्च मोचयत्येतानप्रमत्तो हितोद्यतः । यद्वलक्षो दृढं मोक्षे, "निःस्पृहो भवचारके ॥ ९३४ ॥" कल्पोऽयमितिकृत्वा त्वमीदृशोऽयं प्रचोदितः । निजावस्थानुरूपं हि, चेष्टितव्यं सदा त्वया ॥ ९३५ ॥ अनुशिष्टिं विधायेत्थं, सूरेस्तस्य कृतानतेः । सूरयः पौण्डरीकाख्याः, प्राहुः शिष्यगणं ततः ॥ ९३६ ॥ "युष्माभिरपि नैवैष, सुस्थबोहि"त्थसन्निभः । संसारसागरोत्तारी, न मोक्तव्यः कदाचन ॥ ९३७ ॥ प्रतिकूलं न कर्तव्यमनुकूलतरैः सदा । भाव्यमस्य गृहत्यागो, येन वः

धनेश्वराचार्यपददानं

"सफलो भवेत् ॥ ९३८ ॥ अन्यथा जन्तुबन्धूनामाज्ञालोपः कृतो भवेत् । ततो विडम्बना शेषा, भवेदत्र परत्र च ॥ ९३९ ॥ ततः
"कुलवधून्यायात्कार्ये निर्भर्त्सितैरपि । यावज्जीवं न मोक्तव्यं, पादमूलममुष्य भोः ! ॥ ९४० ॥ ते ज्ञानभाजनं धन्यास्ते स्वदर्शननि-
र्मलाः । ते निष्प्रकम्पचारित्रा, ये सदा गुरुसेविनः ॥ ९४१ ॥" एवं वदत्सु वीरेषु, तेषु सद्धर्मसूरिषु । तथेति तद्वचः सर्वे, प्रपद्य
प्रणतिं गताः ॥ ९४२ ॥ ततो विहितकर्तव्यः, परित्यज्य गणं क्रमात् । स सूरिः पौण्डरीकाख्यो, गतः सद्गिरिकन्दरम् ॥ ९४३ ॥
अस्थिचर्मावशेषेण, वपुषा धीरमानसः । परीषहतितिक्षार्थं, स्थितः शुद्धशिलातले ॥ ९४४ ॥ तत्र च—कृतपञ्चनमस्कारो, भावसारं
मुहुर्मुहुः । स दत्तालोचनः सम्यक्, सिद्धानाधाय चेतसि ॥ ९४५ ॥ प्रणिधानं महाभागः, कारणं धर्मशुक्लयोः । ध्यानयोस्तीव्रसंवेग-
प्रकारेत्थं विशुद्धधीः ॥ ९४६ ॥ "ज्ञानदर्शनचारित्रवीर्याराधनतत्परः । एक एवान्तरात्मा मे, व्युत्सृष्टमधुनाऽपरम् ॥ ९४७ ॥ राग-
"द्वेषमहामोहकषायमलधूनकः । विशुद्धः साम्प्रतं वर्ते, स्नातकोऽहं समाहितः ॥ ९४८ ॥ क्षाम्यन्तु सर्वसत्त्वा मे, क्षान्तिर्मे सर्वजन्तुषु ।
"निर्वैरः साम्प्रतं शान्तः, क्षेत्रज्ञो मम वर्तते ॥ ९४९ ॥ यदन्तर्यायिनः किंचिद्बहिर्भूतं पुरा मया । गृहीतं स्वीयबुद्ध्या तद्व्युत्सृष्टमधुना-
"ऽखिलम् ॥ ९५० ॥ तीर्थेश्वरा महात्मानः, सिद्धा निर्धूतकल्मषाः । सद्धर्मः साधवश्चेति, भवन्तु मम मङ्गलम् ॥ ९५१ ॥ एतानेवो-
"त्तमत्वेन, गृह्णामि भुवनेऽप्यहम् । एतानेव प्रपद्येऽहं, शरणं भवभीरुकः ॥ ९५२ ॥ निवृत्तसर्वकामोऽहं, मनोजालनिरोधकः । बन्धुः
"समस्तभूतानां, सूनुवत्सर्वयोषिताम् ॥ ९५३ ॥ स्थितः सामायिके शुद्धे, सर्वयोगनिरोधिनि । व्युत्सृष्टचेष्टं मां सिद्धाः, पश्यन्तु परमे-
"श्वराः ॥ ९५४ ॥ यच्च दुश्चरितं किंचिदिहान्यत्र च मे भवेत् । संजातं जातसंवेगस्तन्निन्दामि पुनः पुनः ॥ ९५५ ॥ सर्वोपाधिविशु-
"द्धोऽहं, ममेयमधुना गतिः । साक्षात्केवलिनस्तत्त्वं, भगवन्तो विजानते ॥ ९५६ ॥ सर्वथा—भवप्रपञ्चविरतो, मोक्षैकगतचेतसा ।



॥ ७६९ ॥

"समर्पितो मयाऽऽत्मैष, जिनानां जन्मनाशिनाम् ॥ ९५७ ॥ तत एव महात्मानः, सद्भावार्पितचेतसः । स्वशक्त्याऽशेषकर्मांशाच्छेदं कु-
"र्वन्तु मेऽधुना ॥ ९५८ ॥" इत्येवं प्रणिधानेन, स महात्मा शिलातले । व्युत्सृष्टकायो निःसङ्गः, पादपोपगमे स्थितः ॥ ९५९ ॥ परी-
षहचमूं सर्वां, विनिर्जित्य स्वतेजसा । तिर्यग्देवमनुष्याणामुपसर्गांश्च भैरवान् ॥ ९६० ॥ प्रनष्टभूरिकर्मांशो, धर्मध्यानमनुत्तमम् । अति-
लंघ्य ततः शुक्लं, पूरयामास सत्तमम् ॥ ९६१ ॥ युग्मम् । अशेषकर्मजालं च, वीर्यज्वलनदीपितम् । विधाय क्षपकश्रेण्यामारूढः क्रमशो दहन्
॥ ९६२ ॥ ततो भस्मीकृते वीर्याद् घातिकर्मचतुष्टये । संप्राप्तः केवलालोकं, सोऽनन्तज्ञानगोचरम् ॥ ९६३ ॥ युग्मम् । ततः प्रादुरभूत्तत्र,
देवसङ्घश्चतुर्विधः । आकृष्टः सद्गुणैस्तस्य, पूजार्थं हि महात्मनः ॥ ९६४ ॥ ततो दुन्दुभयो दिव्या, दध्वनुर्मधुरस्वनाः । जगुः किन्नरसङ्घाता,
ननृतुर्देवयोषितः ॥ ९६५ ॥ अपनिन्ये रजः सर्वं, ववृषे गन्धवारि च । प्रकीर्यते स्म देवौघैः, पुष्पवृष्टिर्मनोहरा ॥ ९६६ ॥ भ्रमद्भ्रमर-
विस्तारतारझङ्कारबन्धुरः । स प्रदेशः क्षणाज्जातो, दिव्यगन्धैर्विसर्पिभिः ॥ ९६७ ॥ गोशीर्षचन्दनालिप्तं, दिव्यसद्धूपवासितम् । चक्रुर्देहं
मुनीन्द्रस्य, देवाः सद्भक्तिनिर्भराः ॥९६८॥ तथा लसत्किरीटास्ते, तुष्टुवुश्च मुनीश्वरम् । दधुः पादरजस्तस्य, शिरसा पापशुद्धये ॥ ९६९ ॥
एवं प्रमोदसन्दर्भनिर्भरे वैबुधे गणे । पार्श्वस्थे स महाभागः, समुद्घातमुपागतः ॥ ९७० ॥ ततः समीकृताशेषकर्मांशः क्षणमात्रकम् ।
स्थित्वा योगत्रयं धीरो, निरुरोध क्रमेण सः ॥ ९७१ ॥ ततश्च तन्निरोधेन, शैलेशीं प्राप्य सत्क्रियाम् । देहत्रयविनिर्मुक्तः, स प्राप परमं
पदम् ॥ ९७२ ॥ ततो विशेषपूजां ते, विधायानन्दनिर्भराः । गता देवा निजस्थानं, तद्भक्त्या धूतकल्मषाः ॥ ९७३ ॥ अन्यच्च—स-
क्रमेणामुना सापि, महाभद्रा प्रवर्तिनी । हत्वा कर्म गता मोक्षं, किं तु भक्तपरिज्ञया ॥ ९७४ ॥ तथा सुललितासाध्व्यास्तैस्तपोभिस्तथा-
विधैः । क्षाराद्यैरिव संजातं, चित्तरत्नं सुनिर्मलम् ॥ ९७५ ॥ ततः सापि क्रमेणेत्थं, संत्यज्य तनुपञ्जरम् । गत्वा कर्मक्षयं कृत्वा, मोक्षं

पुण्डरीकस्य मोक्षो देवोत्सवश्च

भक्तपरिज्ञया ॥ ९७६ ॥ ते तु श्रीगर्भराजाद्याः, साधवः सुतपोधनाः । सुमङ्गलाद्याः साध्व्यश्च, देवलोकमुपागताः ॥ ९७७ ॥ किं बहुना ?—यावद्भिर्जन्तुभिस्तत्र, मनोनन्दनकानने । समन्तभद्रसूरीणां, पादमूलमुपागतैः ॥ ९७८ ॥ इदमाकर्णितं धन्यैस्तुसुन्दरचेष्टितम् । दूरस्थैरपि लेशेन, कौतुकेनापि विस्मितैः ॥ ९७९ ॥ तावतां भव्यजन्तूनां, श्रुतेन जनितं तदा । भवप्रपञ्चविरतं, मनो नूनमनेन भोः ॥ ९८० ॥ त्रिभिर्विशेषकम् । ततः कैश्चित्कृता दीक्षा, कैश्चिद्धर्मो गृहस्थितैः । केचित्सम्यक्त्वमापन्नाः, केचित्संवेगमागताः ॥९८१॥ एवं च स्थिते—भवद्भिरपि विज्ञातमेवं कथयतो मम । भो भो भव्याः सभावार्थमिदं वृत्तं महात्मनः ॥ ९८२ ॥ ततोऽनुष्ठीयतां तूर्णं, यज्ज्ञातस्यास्य सन्निभम् । येनैष जायते सद्यः, सफलो मे परिश्रमः ॥ ९८३ ॥ यतस्तुल्यः समस्तानां, प्रायः संसारचारिणाम् । जीवानामेष वृत्तान्तो, मया योऽत्र निवेदितः ॥ ९८४ ॥ तदेतदपि संश्रुत्य, चरितं निजसन्निभम् । न युज्यतेऽत्र भो भव्या, विधातुमवधीरणां ॥ ९८५ ॥ तथाहि—यथाऽसौ पौण्डरीको जम्बूद्वीपे पूर्वविदेहवर्तिनि सुकच्छविजयान्तर्गते शङ्खपुरे कमलिनीश्रीगर्भराजपुत्रतयाऽपि जातस्तेन भगवता समन्तभद्रसूरिणा तस्यैव शङ्खपुरस्य सम्बन्धिनि चित्तरमकाननान्तर्भूते मनोनन्दने चैत्यभवने वर्तमानेन भूरिभव्यानां पुरतस्तत्पक्षपातेन मनुजगतावेष राजदारकोऽनुकूलाभ्यां कालपरिणतिकर्मपरिणामाभ्यां सुमतिर्भव्यपुरुषो जनित इतिकृत्वा भविष्यति निःशेषगुणाधार इति ख्यापितस्तदिदं सर्वेषां लघुकर्मणां भव्यमनुष्याणां समानं वर्तते, यतो नानाक्षेत्रोत्पन्ना अपि सर्वे मनुजगतौ वर्तन्ते बहिरङ्गविविधजननीजनका अपि सर्वे परमार्थतस्ते कालपरिणतिकर्मपरिणामयोः पुत्रा भवन्त्येव बहुविधाभिधाना अपि सुमतिभव्यपुरुषत्वं न व्यभिचरन्तीति सदागमः सर्वदा ख्यापयति, यथा च सा महाभद्रा समन्तभद्रसूरिवचनेनादित एव प्रतिबुध्य प्रव्रजिता सती प्रज्ञाविशाला जाता तथैवेहोत्तमपुरुषाः सर्वज्ञागमोपदेशात् संजाततत्त्वावबोधाः प्रथममेव साधवः संपद्यन्ते, त एव च परमार्थतः प्रज्ञावि-

शाला इति, यथा च तस्याः सुललितायाः पूर्वभवाभ्यासवशेन संपन्नस्तया महाभद्रया सह स्नेहसम्बन्धः स च गुणकरोऽभूत् तथेह गुरुकर्मणामपि केषांचिद्भाविभद्राणां भव्यजन्तूनां कथंचिद्भवत्येव सुसाधुभिः सार्धं घटना, सा च भवत्येव तेषां गुणकरी "सम्पत्सम्पादको हि कल्याणमित्रयोगो जनको योग्यतायाः आकरो गुणरत्नानां सूचको भाविकल्याणपरंपरायाः अमृतयोग इव निर्घातकः कर्मविपचसरकस्य" यथा च तया महाभद्रया तस्याः सुललितायाः समन्तभद्रसूरिद्वारेण सदागमे भक्तिर्जनिता पौण्डरीकस्य च तथैव धात्रीभावमिवात्मनो दर्शयन्त्या कृतश्च तेन भगवता सह परिचयः तथाऽद्यापि सुसाधवः परहितकरणैकलालसाः सन्तो गुरुकर्मणां च भव्यजन्तूनां निष्कृत्रिमस्नेहभावमिव दर्शयन्तो यथा तथा सर्वज्ञागमे भगवति भक्तिमुत्पादयन्त्येव, सा हि यथा तथाऽऽविर्भूता प्रक्षालिनी कर्ममलस्य शोधनी जीवरत्नस्य मोचनी भवप्रपञ्चस्य दर्शनी तत्त्वमार्गस्य साधनी परमपदस्येति । यच्च तेनानुसुन्दरचक्रवर्तिनोत्पन्नज्ञानेन तेषां पुरतः सविस्तरमाख्यातमात्मनो भवभ्रमणमुपमाद्वारेण सुललितापौण्डरीकयोः संवेगजननार्थं तत्प्रायः सर्वेषां संसारिजीवानां समानं वर्तते, यतः क्वचिन्मोक्षमुपागतेषु केषुचिज्जीवेषु लोकस्थितिनियोगतः कर्मपरिणामादिष्टा इव भवितव्यतावशेन निर्गच्छन्ति कियन्तोऽपि जीवा असांव्यवहारिकजीवराशेः ततः कुर्वन्ति विचित्रमनन्तभवभ्रमणं हारयन्ति हिंसाक्रोधादिदोषातुरा मोक्षसाधनक्षममपि कृच्छ्रेणावाप्तं बहुशो मनुष्यभवं कुर्वन्ति मुहुर्मुहुः सद्गुणावाप्तिं त्यागावसरेष्वन्तराघर्षणघूर्णनकृतनरकगमनसामग्रीका अपि मुच्यन्ते सर्वज्ञोक्तागमानुष्ठानसम्बन्धेन अवाप्तसज्ज्ञानाश्च पश्यन्ति स्वयं प्रतिपादयन्ति च परेभ्यः, यथा—"निष्ठितनाटकमायोऽयं प्राणिनां भवप्रपञ्चोऽपरापरवेषकरणोपमानि शरीरग्रहणानि अन्योऽन्यस्थाननर्तनकल्पानि बहुविधयोनिविशेषसञ्चरणानि नानाविधवासककुटीरकतुल्यानि विमानभवनालयादीनि कूटनटपेटकदेश्यानि बन्धुकुटुम्बकादीनि, एकोऽयं द्रव्यमपेक्ष्य परमार्थेनात्मा कृत्रिमेयमस्य मनुष्या-

उपनयोपसंहारः

"दिपर्यायेष्वपरापरनाममाला नेयमास्थास्थानं विवेकिनां लोकस्थितिकालपरिणतिकर्मपरिणामस्वभावभवितव्यतानिजभव्यतादिपरस्परसव्य-
"पेक्षकारणसमुदायजनितः समस्तोऽप्यस्य भवप्रपञ्चः तत्परिपाकलभ्यस्तु विच्छेदको प्रपञ्चस्यास्य परमेश्वरानुग्रहः, स हि कारणं विम-
"लज्ञानस्य तद्बलादेवायमात्मा जानीते यदुत परमेश्वराज्ञाकरणाकरणजनिते मम सुखदुःखे भवमोक्षौ च लेश्याविशोधनं तदाज्ञाकरणं
"लेश्यामालिन्यजननं तदाज्ञाविराधनं, ततः प्रवर्तते लेश्याविशोधकेषु सद्भूतगुणेषु निवर्तते लेश्यामालिन्यजनकेभ्यः समस्तदोषेभ्यः,
"ततोऽत्यन्तविशोधितां लेश्यामपि विहाय भवत्यलेश्यः ततः स्वरूपे स्थितः स एवात्मा संपद्यते परमेश्वरः परमात्मे"ति, यथा च तद-
नुसुन्दरचरितं तस्य भगवतः समन्तभद्रसूरेः प्रत्यक्षं महाभद्रा च कथ्यमानं तद्बुध्यते स्म तथा संसारिजीवचरितं भगवतः सर्वज्ञागमस्य
प्रतीतं सुसाधवश्च निवेद्यमानं प्रज्ञाविशालतया स्वत एव बुध्यन्ते परेभ्यश्च प्रतिपादनसमर्था भवन्ति, यथा च तेन पौण्डरीकेण सुललि-
तामुद्दिश्य कथ्यमानं लघुकर्मतया प्रसंगेनाप्याकर्णयता तदनुसुन्दरराजचरितमवगतं विदितं च तदनुगमानुरूपं तथा यूयमपि "भो
"भव्या इदं संसारिजीवचरितमनुभवागमसिद्धमवबुध्यध्वं अवबोधानुरूपं चाचरत विरहयत कपायान् स्वगयतास्रवद्वाराणि निराकुरुते-
"न्द्रियगणं दलयत सकलं मनोमलजालं पोषयत सद्भूतगुणगणं मुञ्चत भवप्रपञ्चं यात तूर्णं शिवालयं येन यूयमपि सुमतयो भव्यपु-
"रुषा भवथ" । अथ नास्ति भवतां तादृशी लघुकर्मता ततो यथा सुललिता भूयो भूयः प्रचोदिता सप्रणयं मुहुर्मुहुर्निर्भर्त्सिता बहुवि-
धमुपालब्धा पुनः पुनः स्मारिता सती गुरुकर्मिकापि प्रतिबुद्धा तथा बुध्यध्वं, केवलं तथा प्रतिबोध्यमाना अगृहीतसङ्केता भविष्यथ यूयं
गलतालुशोषका गुरूणां तथापि गुरुभिः प्रतिबोधनीया एव युष्माभिरपि प्रतिबोद्धव्यमेव, यथा स्वदुश्चरितपश्चात्तापेन सद्भूतगुणपक्षपा-
तसारो निखिलकर्ममलविलयकारी सदागमबहुमानस्तस्याः सुललितायाः प्रतिबोधकारणं संपन्नः तथा भवद्भिरपि तथैव स विधेयो येन
संपद्यते भवतामपि विशिष्टस्तत्त्वावबोध इति । इह च—श्रेयांसमहादत्तादिजातिस्मरणतुल्यकः । ज्ञेयोऽनुसुन्दरादीनां, तदुत्पादः सयु-

अन्तिम उपदेशः

असंख्यभवगोचरता जातिस्मृतेः

॥ ७७२ ॥

क्तिकः ॥ ९८६ ॥ यतश्चागमे मतिवासनायाः—असह्यकालोऽनुज्ञातो, यचो नास्ति च वारकम् । सुभूरिभवभावेऽपि, तस्मादस्ति विरोधिता ॥ ९८७ ॥ आदितः पुनरारभ्य प्रस्तावभावार्थोऽयम्—कुशलकर्मविपाकवशादहो, जगति किंचिदिहास्ति न दुर्लभम् । सकलभोगसुखाधिकमुच्चकैः, शमसुखं प्रतिभाति च धीमताम् ॥ ९८८ ॥ परमकोटिगतोऽपि पुनर्नरः, प्रवलतामुपगम्य निपात्यते । खलमलैरतिभीमभवोदधौ, यदि न वेत्ति स तां तदरातिताम् ॥ ९८९ ॥ नरकयोग्यकृताशुभकर्मकः, पुनरुपैति शिवं गतकल्मषः । यदि सदागमबोधपरायणः, क्षणमपि प्रकरोति शुभं नरः ॥ ९९० ॥ इदमवेत्य मनोमलवर्जनं, लघु विधाय सदागमसेवनम् । कुरुत तेन दि याथ शिवं यथाऽऽगमवशादनुसुन्दरपार्थिवः ॥ ९९१ ॥ अन्यच—इदमनन्तभवभ्रमसूचकं, मलवशादनुसुन्दरचेष्टितम् । यदिह जावमतः परिकीर्तितं, मतिविकाशनकारि सुदेहिनाम् ॥ ९९२ ॥ न च नियोगत एव भवेदियं, गदितपद्धतिरत्र नरे नरे । सकृदवाप्य जिनेन्द्रमतं यतः, शिवमितः प्रगता वहवो नराः ॥ ९९३ ॥ त्रिचतुरेषु भवेषु तथाऽपरे, यदुत्तमाः पुनरन्यविधानतः । विविधभव्यतया भवदारणं, निजनिजक्रमतो दधिरे नराः ॥ ९९४ ॥ तदिदमत्र सुगुह्यमहो जना!, हृदि विधत्त परं परमाक्षरम् । मलविशोधनमेव सुमेधसा, लघु विधेयमिहाप्य जिनागमम् ॥ ९९५ ॥ एतन्निःशेषमत्र प्रकटितमसिलैर्युक्तिगर्भैर्वचोभिः, प्रस्तावे भावसारं सदसिलमधुना शुद्धबुद्ध्या विचिन्त्य । भो भव्या! भाति चित्ते यदि हितमनघं चेदमुष्यैस्तरां यत्तत्तूर्णं भेऽनुरोधाद्विरतफलमलं स्वार्थसिद्ध्यै कुरुध्वम् ॥ ९९६ ॥ उत्सूत्रमेव रचितं मतिमान्द्यभाजा, किंचिद्यदीदृशि मयाऽत्र कथानिबन्धे । संसारसागरमनेन तरीतुकामैस्तत्साधुभिः कृतकृपैर्मयि शोधनीयम् ॥ ९९७ ॥ इत्युपमितिभवप्रपञ्चायां कथायां पूर्वसूचितमीलकवर्णनो नामाष्टमः प्रस्तावः समाप्तः ॥

॥ समाप्तेयमुपमितिभवप्रपञ्चा कथेति ॥

---

मलविशुद्धौ तात्पर्यं

## प्रशस्तिः ।

द्योतिताखिलभावार्थः, सद्भव्याब्जप्रबोधकः । सूराचार्योऽभवद्दीप्तः, साक्षादिव दिवाकरः ॥ ९९८ ॥ स निवृत्तिकुलोद्भूतो, लाटदेशविभूषणः । आचारपञ्चकोद्युक्तः, प्रसिद्धो जगतीतले ॥ ९९९ ॥ अभूद्भूतहितो धीरस्ततो देल्लमहत्तरः । ज्योतिर्निमित्तशास्त्रज्ञः, प्रसिद्धो देशविस्तरे ॥ १००० ॥ ततोऽभूदुल्लसत्कीर्तिर्ब्रह्मगोत्रविभूषणः । दुर्गस्वामी महाभागः, प्रख्यातः पृथिवीतले ॥ १००१ ॥ प्रव्रज्यां गृह्णता येन, गृहं सद्धनपूरितम् । हित्वा सद्धर्ममाहात्म्यं, क्रिययैव प्रकाशितम् ॥ १००२ ॥ यस्य तच्चरितं वीक्ष्य, शशाङ्करनिर्मलम् । बुद्धास्तत्प्रत्ययादेव, भूयांसो जन्तवस्तदा ॥ १००३ ॥ सद्दीक्षादायकं तस्य, स्वस्य चाहं गुरूत्तमम् । नमस्यामि महाभागं, गर्गर्षिं मुनिपुङ्गवम् ॥ १००४ ॥ क्लिष्टेऽपि दुष्षमाकाले, यः पूर्वमुनिचर्यया । विजहारेह निःसङ्गो, दुर्गस्वामी धरातले ॥ १००५ ॥ सद्देशनांशुभिर्लोके, द्योतित्वा भास्करोपमः । श्रीभिल्लमाले यो धीरो, गतोऽस्तं सद्विधानतः ॥ १००६ ॥ तस्मादतुलोपशमः सिद्ध(सद्)र्षिरभूदनाविलमनस्कः । परहितनिरतैकमतिः सिद्धान्तनिधिर्महाभागः ॥ १००७ ॥ विषमभवगर्तनिपतितजन्तुशतालम्बदानदुर्ललितः । दलिताखिलदोषकुलोऽपि सततकरुणापरीतमनाः ॥ १००८ ॥ यः सङ्ग्रहकरणरतः सदुपग्रहनिरतबुद्धिरनवरतम् । आत्मन्यतुलगुणगणैर्गणधरबुद्धिं विधापयति ॥ १००९ ॥ बहुविधमपि यस्य मनो निरीक्ष्य कुन्देन्दुविशदमद्यतनाः । मन्यन्ते विमलधियः सुसाधुगुणवर्णकं सत्यम् ॥ १०१० ॥ उपमितभवप्रपञ्चा कथेति तच्चरणरेणुकल्पेन । गीर्देवतया विहिताऽभिहिता सिद्धाभिधानेन ॥ १०११ ॥ अथवा—आचार्यो हरिभद्रो मे, धर्मबोधकरो गुरुः । प्रस्तावे भावतो हन्त, स एवाद्ये निवेदितः ॥ १०१२ ॥ विषं विनिर्धूय कुवासनामयं, व्यची-

गुरुपारम्पर्यम्

उपकारिगुरुस्मृतिः

चरद्यः कृपया मदाशये । अचिन्त्यवीर्येण सुवासनासुधां, नमोऽस्तु तस्मै हरिभद्रसूरये ॥ १०१३ ॥ अनागतं परिज्ञाय, चैत्यवन्दनसंश्रया । मदर्थैव कृता येन, वृत्तिर्ललितविस्तरा ॥ १०१४ ॥ यत्रातुलरथयात्राधिकमिदमिति लब्धवरजयपताकम् । निखिलसुरभवनमध्ये सतत-प्रमदं जिनेन्द्रगृहम् ॥ १०१५ ॥ यत्रार्थष्टङ्कशालायां, धर्मः सद्देवधामसु । कामो लीलावतीलोके, सदाऽऽस्ते त्रिगुणो मुदा ॥ १०१६ ॥ तत्रेयं तेन कथा कविना निःशेषगुणगणाधारे। श्रीभिल्लमालनगरे गदिताऽग्रिममण्डपस्थेन ॥ १०१७ ॥ प्रथमादर्शे लिखिता साध्व्या श्रुत-देवतानुकारिण्या । दुर्गस्वामिगुरूणां शिष्यिकयेयं गुणाभिधया ॥ १०१८ ॥ संवत्सरशतनवके द्विषष्टिसहिते(९६२)ऽतिलङ्घिते चास्याः । ज्येष्ठे सितपञ्चम्यां पुनर्वसौ गुरुदिने समाप्तिरभूत् ॥ १०१९ ॥ ग्रन्थाग्रमस्या विज्ञाय, कीर्तयन्ति मनीषिणः । अनुष्टुभां सहस्राणि, प्रायशः सन्ति षोडश ॥ १०२० ॥   समाप्ततामगमदियमुपमितिभवप्रपञ्चा कथा ॥

श्रीमत्सिद्धसाधुविरचिता समासेयमुपमितिभवप्रपञ्चा कथा

इति श्रेष्ठि देवचन्द्र लालभाइ जैनपुस्तकोद्धारे ग्रन्थाङ्कः ४९.

# अधुना अस्मदीया प्राप्यग्रन्था

| अंक. | नाम. | किम्मत. |
|---|---|---|
| १३ | धी कर्मफिलोसोफी वीरचंदराघवजीकृत अंग्रेजी | ०- ५-० |
| १४ | श्रीआनंदकाव्यमहोदधिमौक्तिकं प्रथमं ... | ०-१०-० |
| १८ | कल्पसूत्रं-मूलमात्रं कालिकाचार्य कथायुतं ... | ०- ८-० |
| २० | श्रीआनंदकाव्यमहोदधिमौक्तिकं द्वितीयं ... | ०-१०-० |
| २२ | श्रीआनंदकाव्यं " " तृतीयं ... | ०-१०-० |
| ३० | श्रीआनंदकाव्यं " " चतुर्थं ... | ०-१२-० |
| ३२ | श्रीआनंदकाव्यं " " पञ्चमं ... | ०-१०-० |
| ४२ | श्रीधर्मसंग्रहणीः (उत्तरार्द्धं) ... ... ... ... | १- ४-० |
| ४३ | श्रीआनंदकाव्यमहोदधिमौक्तिकं षष्ठम्-श्रीनयसुंदरप्रणीतकाव्यानि ... ... ... ... ... | ०-१२-० |
| ४४ | श्रीपिंडनिर्युक्तिः-सभाष्या ... ... ... ... | १- ८-० |
| ४५ | श्रीधर्मसंग्रहः-उत्तरार्द्धः ... ... ... ... | १- ४-० |
| ४६ | उपमितिभवप्रपञ्चाकथा-पूर्वार्द्धं ... ... ... | २- ०-० |
| ४७ | श्रीदशवैकालिकसूत्रम्-सम्पूर्णं ... ... ... | २- ८-० |
| ४८ | श्राद्धप्रतिक्रमणसूत्रं (मुद्रणालये) | |
| ४९ | उपमितिभवप्रपञ्चाकथा-उत्तरार्द्धं | १- ८-० |
| ५० | श्रीजीवाजीवाभिगम-उपाङ्गं (मुद्रणालये) | |

प्राप्तिस्थलम्-लायब्रेरियन्-

शेठ देवचंद लालभाई पुस्तकोद्धारफण्ड

बडेखां चकलो सुरतसिटी.

श्रीमत् सिद्धसाधुविरचिता–

# समाप्तेयमुपमितिभवप्रपञ्चाकथा.

इति श्रेष्ठि देवचन्द्र लालभाई जैनपुस्तकोद्धारे ग्रन्थाङ्कः ४९.

८४